**मध्यमबुद्धिस्तु** गुरुलाघवज्ञानसाध्यकार्यानाचरण-सूत्रदृष्टमात्रकार्याऽऽचरणाभ्यां **मध्यमाचारः । ज्ञेय इह** = प्रक्रमे **तत्त्वमार्गे** = मोक्षाध्वनि, **बुधस्तु** स एव **यो मार्गानुसारी** = ज्ञानादित्रयानुसारी ॥१/३॥

## कल्याणकन्दली

मपि निषिद्धकार्यकरणस्वभावस्याऽव्याहतत्वात् । इत्थमेव 'सूत्रकृताङ्गद्वितीयश्रुतस्कन्धादावेकेन्द्रियादीनां कर्मबन्धकत्वोक्तिः सङ्गच्छते ।

वस्तुतस्तु प्रकृते 'निषिद्धकार्यकारी निश्चितं बालो ज्ञेयः' इत्येवान्वयोऽभिप्रेतः, न तु 'निश्चितं निषिद्धकार्यकारी बालो ज्ञेयः' इत्यन्वयः । ततश्च काकतालीयन्यायेन कदाचिद्विहितकार्यकरणेऽपि न तस्मिन्नव्याप्तिः, निषिद्धकार्यकरणयोग्यत्वस्य तदानीमपि निरपायत्वात् । अत एव तस्यैव कालान्तरे विशिष्टविवेकसम्प्राप्तौ न बालत्वापत्तिः, तदानीं निरुक्तयोग्यत्वप्रच्यवात् । निषिद्धकार्यकरणमप्याभोगेनैव ज्ञेयम् । ततो नानाभोग-सहसाकारादिना निषिद्धकार्यकारिणि बुधेऽतिव्याप्तिः । निषिद्धत्वमपि तत्तद्भूमिकापेक्षयाऽवगन्तव्यम् । अनेन चैत्यनिर्मापणादौ स्वयमुद्यतस्य मुनेरपि बालत्वमुपदर्शितम्, अनधिकृतप्रवृत्तिपरायणत्वात्, गृहस्थस्यैव तत्कर्तव्यतोक्तेः । तदुक्तं मूलकारैरेव पञ्चाशके —> अकसिणपवत्तगाणं विरयाविरयाण एस खलु जुत्तो <— [पञ्चा ६/४२] इति । यथा चैतत्तत्त्वं तथा षष्ठे षोडशके स्पष्टीभविष्यति । अधुना मोत्कण्ठीभव । धम्मपदाभिधाने बौद्धग्रन्थेऽपि —> चरन्ति बाला दुम्मेधा अमित्तेनेव अत्तना । करोन्ता पापकं कम्मं यं होति कटुकप्फलं ॥ <— [५/७] इत्युक्तमत्रानुसन्धेयम् ।

**मध्यमबुद्धिस्तु गुरुलाघवज्ञानसाध्यकार्यानाचरण-सूत्रदृष्टमात्रकार्याचरणाभ्यां मध्यमाचारः** इति । विधि-यतनादिपरिकलितौत्सर्गिकोत्कृष्टाचारस्यापि बलवदपवादस्थाने प्रयोगे मध्यमत्वमिति भावः । श्रेणिककथानकप्रसिद्धवेश्यान्वितत्रिलोचनालयवर्त्तिसाधुवेशरजोहरणादिज्वालनप्रवृत्त-वाचयमवरेण्यवत् विशिष्टतरविकसितविवेकदृष्टिमात्रोपधेयकर्तव्यसम्पादनेऽस्य प्रत्यलत्वं नास्ति, किंकर्तव्यमूढतयैवाभिभूतत्वमस्य तथाविधावस्थायां स्यात् । न हि गौरव-लाघवमविदुषः प्रावचनिककार्यकारित्वं सम्पनीपद्यते । अत एव बाह्यचरण-करणोद्यतत्वेऽपि निश्चयतो नैवास्य जिनशासनप्रवेशोऽपि सम्मतः । तदुक्तं **सम्मतितर्के श्रीसिद्धसेनदिवाकरेण** —> चरणकरणप्पहाणा ससमय-परसमयमुक्कवावारा । चरणकरणस्स सारं णिच्छयसुद्धं न याणंति ॥ <— [स.त.का-३/का ६७] इति । तद्भक्तिमात्रेण श्रद्धानुसारितया द्रव्यसम्यग्दृष्टिस्तु स्यात् । अनेन मतिमता गौरव-लाघवज्ञानप्राप्त्युद्यमः कर्तव्य इति दर्शितम् । धर्मरत्नप्रकरणेऽपि श्रावकस्य दीर्घदर्शित्वगुणवर्णने —> आढवइ दीहदंसी सयलं परिणामसुंदरं कज्जं । बहुलाभमप्पकेसं सलाहणिज्जं बहुजणाणं ॥<— [२२] इत्युक्तम् । एतावता गुरुलाघवचिन्तयैवाऽनुबन्धप्रधानमनुष्ठानमभिहितम् । तदुक्तं **योगबिन्दौ** —> एतद्व्युदग्रफलदं गुरुलाघवचिन्तया । अतः प्रवृत्तिः सर्वैव सदैव हि महोदया ॥२२०॥ <— इति । अन्यत्रापि —> अण्णेण बहुमेसज्जा, एय पडियलक्खणं । सव्वासु पडिमेवासु, एयं अट्ठपयं विऊ ॥<— [व्यवहारभाष्यवृत्तौ द्वितीयोद्देशे उद्धृता] इत्युक्तम् । अत एव सम्मतितर्काद्यध्ययनादावविशोधिकोटिदोषदुष्टपिण्डोपभोगादेरपि गत्यन्तरविरहेऽनुज्ञा संयमिनामुपदर्शिता । तदुक्तं **निशीथपीठिकाचूर्णौ** —> दंसणपभावगाणि सत्थाणि **सिद्धिविणिच्छय-सम्मतिमादि** गेण्हंतो असंथरमाणो जं अकप्पियं पडिसेवति जयणाए, तत्थ सो सुद्धो अपायच्छित्ती भवतीत्यर्थः <— [गा ४८६ पृ १६२] । आय-व्ययतुलनातत्परवणिग्जनदृष्टान्तमपि समये सुप्रसिद्धमेतद्बोधनाय । तदुक्तं **निशीथभाष्योपदेशमालादौ** —> तम्हा सव्वाणुन्ना सव्वनिसेहो य पवयणे नत्थि । आयं वयं तुलिज्जा, लाहाकंखीव्व वाणियओ ॥ <—[२०६७/३९२]। एतदनुवादरूपेणैव टीकाकृताऽपि **मार्गद्वात्रिंशिकायां** —> निषेधः सर्वथा नास्ति विधिर्वा सर्वथागमे । आयं व्ययञ्च तुलयेल्लाभाकाङ्क्षी वणिग्यथा ॥ <— [३/५] इत्युक्तम् । **शिवभूत्यादेस्तु** —> आरभइ किर असक्कमवि किंचि, सिवभूइव्व न एसो सम्मारभो महामोहो <— [११९] इति **धर्मरत्नप्रकरणवचनात्** अशक्यनिषिद्धकार्यकारित्वेन मोहोदयापेक्षया बालत्वमेव, न तु सूत्रदृष्टमात्रकार्याऽऽचरणेन मध्यमबुद्धित्वम्, बहुतरव्ययाविनाभाविनः सूत्रदृष्टमात्रकार्यस्य मध्यमबुद्धिकर्तृकाऽऽचारगोचरत्वेनाऽनभिमतत्वात्, तादृग्व्ययस्य मध्यमविवेकदृष्टिविषयतया तज्ज्ञाने तदाचरणाऽयोगादिति विभावनीयं पर्युपासितगुरुकुलैः ।

**ज्ञेय** इति पदमन्त्यदीपकन्यायेनाग्रेऽप्युभयत्र योज्यम् । एवमेव **'तत्त्वमार्गे = मोक्षाध्वनि'** इत्यपि तेनैव न्यायेनाग्रे उभयत्रान्वेयम् । ततश्चातिवयोवृद्धस्याऽपि विवेकविज्ञानविकलस्य बालत्वं अल्पवयस्कस्यापि **वज्रस्वाम्यादे**र्विशिष्टतरविवेकविज्ञानान्विततया बुधत्वं न दुर्घटम् । **मार्गानुसारी = ज्ञानादित्रयानुसारी** = स्वभूमिकोचिततत्तत्सम्यग्ज्ञान-दर्शन-चारित्रत्रितयलक्षण-

મધ્યમબુદ્ધિ તેને જાણવો કે જેના આચાર મધ્યમ કક્ષાના છે. મધ્યમબુદ્ધિના આચારની મધ્યમકક્ષા બતાવવાનો મતલબ એ છે કે ગૌરવ-લાઘવજ્ઞાનથી અર્થાત્ લાભ-નુકશાનના વિચારથી સાધી શકાય તેવા કાર્યનુ આચરણ-અમલ કરવા માટે મધ્યમબુદ્ધિ અસમર્થ છે. તે તો આગમમા જે બતાવ્યુ હોય તે જ કાર્યનો અમલ કરશે. માટે મોક્ષમાર્ગને વિશે મધ્યમ આચારવાળા એવા તેને મધ્યમબુદ્ધિ તરીકે જાણવો.

१. दृश्यतां सूत्रकृताङ्ग-द्वितीयश्रुतस्कन्ध-चतुर्थाध्ययनम् ।

कल्याणकन्दली

मोक्षमार्गानुयायी । न चैव चरण-करणोद्यते बालादावतिव्याप्तिरिति पुनरपि शङ्कनीयम्, गुरुलाघवविज्ञानसहकृत-ज्ञानादित्रिकानुगामित्वस्यैव बुधलक्षणत्वेनाभिमतत्वात्, व्याख्यानतो विशेषप्रतिपत्ते. । यथावस्थितप्रवचनपरिणतावस्थायामुत्सर्गस्थाने विधियतनादिसमाकलितोत्सर्गप्रयोक्तृत्वमपवादस्थाने च स्वशक्त्यनिगूहनेनाऽपवादप्रयोक्तृत्वमेव ज्ञानादित्रयानुसारित्वमिति यावत् तात्पर्यम् । तेन यथावस्थितोत्सर्गापवादौ प्रयुञ्जानस्य गीतार्थनिश्रितस्याऽगीतार्थस्य न मुख्य बुधत्वमापद्यते, तदीयज्ञानादित्रयानुसारित्वस्यान्यौपाधिकत्वात्, द्रव्यत एव च तेषा 'भगवतैवमुक्तमि'ति जिनवचनरुचिस्वभावत्वेन सम्यग्दृष्टित्वात् । तदुक्त **श्रीसिद्धसेनदिवाकरेण सम्मतितर्के** --> नियमेण सद्दहतो छक्काये भावओ ण सद्दहइ । हदी अपज्जवेसु वि सद्दहणा होइ अविभत्ता ॥ <-- [स त ३/२८] इति निश्चयनयापेक्षयाऽवगन्तव्यम् । अत एव 'अत्तहिअपरहियाण अत्तहिअ चेव कायव्व [महानि वज्रार्यदृष्टान्ते] इति **महानिशीथ**वचनमनुसन्धायाऽविकलदशपूर्वधरस्याऽनिष्पादितगणचिन्तकस्य वा साधिकनवपूर्वविदो जिनकल्पग्रहणेऽपि विराधकत्व समयप्रसिद्धम्, विहितस्वकर्तव्यपराङ्मुखत्वात्, --> 'जो जेण गुणेणाऽहिओ जेण विणा वा न सिज्झए ज तु । सो तेण तम्मि कज्जे सव्वत्थाम न हावेइ ॥ <-- [१७१८] इति **वृहत्कल्पभाष्या**दिवचनातिक्रमाच्च । अत एव **श्रीभद्रबाहुस्वामि-विष्णुकुमारादिभि**रप्यन्याऽसाध्य-स्वमात्रसाध्य-सङ्घकार्यादौ स्वकीयाऽऽराधनाऽऽग्रहः सन्त्यक्त. । वस्तुतस्तु तथाविधपरार्थसम्पादने विशिष्टतर'स्वोपकार. सम्पनीपद्यत एव । अत एव **व्याख्याप्रज्ञप्तौ** --> आयरिय-उवज्झाए ण भते ! सविसयसि गण अगिलाए सगिण्हमाणे अगिलाए उवगिण्हमाणे कतिहि भवग्गहणेहि सिज्झति जाव अत करेति ? गोयमा ! अत्थेगइए तेणेव भवग्गहणेण सिज्झति, अत्थेगइए दोच्चेण भवग्गहणेण सिज्झति तच्च पुण भवग्गहण णातिक्कमति <-- [५/६/२११- पृ.२३१] इत्युक्तम् । तदुक्त टीकाकृताऽपि **उपदेशरहस्यवृत्तौ** --> परोपकारस्य स्वोपकारानुबन्धप्रधानत्वात् <-- [उ रह गा १९५] इति । इत्थञ्च

પ્રસ્તુત મોક્ષમાર્ગને વિશે પડિત તો તેને જ જાણવો કે જે સમ્યગ્જ્ઞાન-દર્શન-ચારિત્રરૂપી મોક્ષમાર્ગને અનુસરવાવાળો હોય [૧/૩]

**વિશેષાર્થ** :- બાલ જીવ વિવેકશૂન્ય હોવાના લીધે અને મોહગ્રસ્ત હોવાના લીધે જે જે કાર્યનો આગમમા નિષેધ કરેલ હોય તે તે કાર્યો કરે છે જેમ કે પરસ્ત્રીગમન, મદ્યપાન આદિ કદાચ બાલ જીવ ધર્મની અભિલાષાવાળો થાય તો પણ તે ધર્મની ક્રિયામા નિષિદ્ધ અવિધિ, અયતના વગેરેને કરતો રહે છે તેનાથી પાછા વળવાનો પરિણામ તેનામા જાગતો નથી તેમ જ પોતે જે ભૂમિકામા રહેલો છે તે ભૂમિકાની અપેક્ષાએ જે કાર્યો કરવાનો શાસ્ત્રમા સદતર નિષેધ કર્યો હોય, તેવા કાર્ય પણ બાલ જીવ વિના સકોચે કરતો હોય છે જેમ કે સામાયિકમા પરમાત્માની કેશરપૂજા કરવી, સાધુ બન્યા પછી સ્વય દેરાસર બનાવવા પ્રયત્નશીલ રહેવુ વગેરે કાર્ય કરનાર શાસ્ત્રકારની પરિભાષામા બાલ જીવ જાણવા

## મધ્યમબુદ્ધિની ઓળખાણ

મધ્યમબુદ્ધિની પાસે અલ્પવિકસિત વિવેકદ્રષ્ટિ હોવાના લીધે લાભ-નુકશાનની વિચારણા કરીને અપવાદના સ્થાનમા આપવાદિક પ્રવૃત્તિ કરવાનુ સામર્થ્ય નથી આગાઢ અપવાદના સ્થાનમા પણ ઉત્સર્ગને વળગી રહેવુ- તે મધ્યમબુદ્ધિના આચારની મધ્યમકક્ષા છે સાધુ ભગવત વિહાર કરીને આવ્યા હોય, શ્રમિત હોય, ઉપાશ્રયની આસપાસ ભક્તિવાળા ઘર હોય, છતા સુપાત્રદાનનો લાભ મેળવવા પોતાના અતિદૂરસ્થ ઘરે સાધુ ભગવતને આગ્રહપૂર્વક લઈ જઈને ગોચરી વહોરાવવી, ગ્લાન સાધુ ભગવતને મીઠાઈ વગેરે ઉત્તમ દ્રવ્ય વહોરાવવાનો આગ્રહ રાખવો, પર્યુષણના દિવસોમા પરિવારમા બધા માદા હોય અને તેમની સેવા-ભક્તિ કરવાનો અવસર હોય ત્યારે સ્વય અઠ્ઠાઈ સહિત ચોસઠ પહોરી પૌષધ લઈને ઉપાશ્રયમા બેસી જાય વગેરે મધ્યમ આચારના દ્રષ્ટાતો છે વિધિ, યતના વગેરેથી યુક્ત એવો પણ ઔત્સર્ગિક આચાર જે બળવાન અપવાદના સ્થાનમા આવે તો તે મધ્યમાચાર બની જાય છે, ભલે તે સ્વસ્થાનમા ઉત્કૃષ્ટ કહેવાતો હોય તથા બે ઉત્સર્ગ ક્રિયામાથી એક જ ક્રિયા જે સમયે થઈ શકતી હોય તે સમયે લાભાનુલાભવિષયક વિશિષ્ટ વિવેકદ્દષ્ટિ ન હોવાથી થતી ઔત્સર્ગિક ક્રિયા પણ મધ્યમ આચાર બને દા ત જિનવાણીશ્રવણના સમયે જ અષ્ટપ્રકારી પૂજા કરવી

## પંડિત જીવને જાણી લો

પડિત = માર્ગાનુસારી = જ્ઞાનાદિત્રિતયાનુસારી અર્થાત્ પ્રધાન દ્રવ્યાજ્ઞાસ્વરૂપ તે તે કક્ષાએ જ્ઞાનાદિત્રિતયને અનુસરનાર આવા પ્રકારના પડિતપણાનો સભવ પ્રાય વિશુદ્ધ અપુનર્બધક અવસ્થાથી શરૂ થાય ૪-૫ ગુણઠાણે મોટા ભાગના જીવોને હોય તથા ૬-૭ ગુણસ્થાનકે આવ-જાવ કરી રહેલા મહામુનિઓમા નિયમા હોય આગમોક્ત રીતે ઉત્સર્ગસ્થાનમા વિધિ, યતના આદિથી યુક્ત ઉત્સર્ગાચાર અને અપવાદના સ્થાનમા પોતાની શક્તિ છૂપાવ્યા વિના આવશ્યક આપવાદિક પ્રવૃત્તિ દ્વારા રત્નત્રયની આરાધના કરનાર પરિણત [અતિપરિણત કે અપરિણત નહિ] જીવને જ વાસ્તવમા પડિત જીવ જાણવો ગ્લાન સાધુની સેવાના અવસરે પોતાના સ્વાધ્યાયને ગૌણ કરવો, પર્યુષણા વગેરેમા સઘની આરાધનામા સહાય કરવા માટે પોતાની અઠ્ઠમની આરાધના આગળ-પાછળ કરવી, બીજાને વિશિષ્ટ પ્રકારના ગ્રથો ભણાવવાનો અવસર હોય ત્યારે પોતાના સ્વાધ્યાય-તપ-જપ વગેરે યોગોને ગૌણ કરવા, સ્વય વિશિષ્ટ પ્રકારના દુર્લભગ્રથાધ્યયન અવસરે ઉત્કૃષ્ટ તપ વગેરે યોગોને ગૌણ કરવા, પોતાના આશ્રિત વર્ગને તાત્ત્વિક માર્ગબોધ કરવાની પ્રવૃત્તિને મુખ્ય રાખી અવાર નવાર થતા મહોત્સવ પ્રસગો વગેરેને ગૌણ કરવા, પારિષ્ઠાપનિકા સમિતિનુ પાલન

बाह्यलिङ्गप्राधान्यदर्शिनो बालत्वे हेतुमाह —> 'बाह्यमि'त्यादि ।

बाह्यं लिङ्गमसारं तत्प्रतिबद्धा न धर्मनिष्पत्तिः । धारयति कार्यवशतो यस्माच्च विडम्बकोऽप्येतत् ॥१/४॥

बाह्यं = बहिर्दृश्यं लिङ्गं = वेशादिचिह्नं, असारं = अफलं, यतः तत्प्रतिबद्धा = तदविनाभाविनी धर्मनिष्पत्तिः न अस्ति । यस्माच्च कार्यवशतः = स्वप्रयोजनाभिलाषात् विडम्बकोऽपि एतत् = लिङ्गं धारयति ।

**कल्याणकन्दली**

तथाविधगहनविषयाऽव्यापनादिकुशलस्याऽसहिष्णो नमस्कारसहितादिकरणेऽपि मोक्षमार्गानुसारित्वमनाविलमेव, अन्याऽसाध्यविशिष्टतरविहितपरार्थसाधकत्वस्य गत्यन्तरेणाऽनुपपत्तेरित्यादिकमूहनीयमत्रागमानुसारेण ।

यत्तु महाभारते —> पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः ॥ <— [वनपर्व-३१३/११०] इत्युक्तं तत्र क्रियापदेन ज्ञानादिनयानुसारिक्रियाऽवगन्तव्येति नातिव्याप्तिः । एतेन —> अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः । धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ <— [१२/१०३] इति मनुस्मृतिवचनमपि व्याख्यातम् । —> लोभ-शोक-भय-क्रोध-मानवेगान् विधारयेत् । नर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥ <— [७/२७] इति चरकसंहितावचनमपि प्रकृतपण्डितलक्षणसूचकम् । —> कण्हं धम्मं विप्पहाय सुक्कं भावेथ पण्डितो <— [६/१०] इति धम्मपदवचनमप्यत्रानुसन्धेयम् । द्वितीयकारिकाया नानाविध-धर्मपर्येषणलक्षणव्यापारद्वारा बालादीनां स्वरूपमुक्तम्, इह चाचारद्वारेति न पौनरुक्त्यमविशेषो वाऽनयोरिति ध्येयम् ॥१/३॥

धर्मतया धर्मसाधनतया वा बाह्यलिङ्गप्राधान्यदर्शिनो बालत्वे हेतुमाह-बाह्यमिति । मूलग्रन्थे दण्डान्वयस्त्वेवम् —> बाह्यं लिङ्गं असारं, [यतः] तत्प्रतिबद्धा न धर्मनिष्पत्तिः, यस्माच्च विडम्बकोऽपि कार्यवशतः एतत् धारयति ॥१/४॥ असारं = अफलं, मोक्षौपयिकफलापेक्षयेदमवगन्तव्यम् । ततश्च धन-यश:प्रभृत्यपेक्षया बाह्यवेशादेः सफलत्वेऽपि न क्षतिः । तत्प्रतिबद्धा = तदविनाभाविनी = बाह्यलिङ्गस्य व्यापकीभूतेत्यर्थः बहुव्रीहिसमासादवसेयः । तदुक्तं लिङ्गप्राभृते कुन्दकुन्दस्वामिना —> धम्मेण होइ लिंगं, ण लिंगमित्तेण धम्मसंपत्ती <— [२] । तदुक्तं मनुस्मृतौ अपि —> न लिङ्गं धर्मकारणम् <— [६/६६] इति । कश्चित् कदाचित् मेतार्यघातकगृहीतसाधुलिङ्गस्वर्णकारादेरिव, मरणासन्नमन्त्रिसमाधिदानहेतुक-गृहीतयतिलिङ्गवरण्ठादेरिव वा पश्चात् सम्यक्परिणामाधानसम्भवेऽपि सर्वत्र तादृशो नियमो नास्ति, विनयरत्नादौ व्यभिचारादिति भावः । विडम्बकोऽपि = नटवण्ठादिरपि, सभ्यजनमनोरञ्जनाय लिङ्गं धारयति । न च तत्र साधुता समस्ति । तदुक्तं व्यवहारसूत्रभाष्ये —> वेसकरणं पमाणं न होई <— [२/३०९] । एवमेव पार्श्वस्थादावपि दृष्टव्यम् । यथोक्तं उपदेशमालायां —> दगपाणं पुप्फफलं अणेसणिज्जं गिहत्थकिच्चाइं । अजया पडिसेवंति जइवेसविडंबगा नवरं ॥३४९॥ <— आत्मदर्शनविरहस्येतद्विजृम्भितत्वात्तदीयवेशस्याऽकिञ्चित्करत्वमेव । तदुक्तं मोक्षप्राभृते कुन्दकुन्दस्वामिना —> बाहिरसंगविमुक्को णवि मुक्को मिच्छभावणिग्गंथो । किं तस्स ठाणमउणं ण वि जाणदि अप्पसमभावं ॥९७॥ <— इति । तद्दर्शनोपदेशश्रवणादिना परस्य कथञ्चिल्लाभेऽपि तस्य गुणशून्यत्वात् । तदुक्तं उपदेशमालायामेव —> पढइ नडो वेरग्गं, निव्विज्जिज्जा य बहुजणो जेण । पढिऊण तं तह सढो, जालेण जलं समोअरइ ॥४७४॥ आत्मावबोधकुलकेऽपि —> अप्पाणमबोहंता परं विबोहंति केइ तेवि जडा । भण परियणमि छुहिए सत्तागारेण किं कज्जं ॥३८॥ <— इत्युक्तम् । अत एवोक्तं उत्तराध्ययनसूत्रे —> न वि मुंडिएण समणो न ओंकारेण बंभणो । न मुणी रण्णवासेणं, कुसचीरेण न तावसो ॥<— [उत्त २५/३०] इति । —> न मुण्डकेन समणो अब्बतो अलिकं भणं ।

કરતી વખતે તેના નિમિત્તે કોઈ દુર્લભબોધિ બની ન જાય તેનુ પ્રધાન લક્ષ્ય રાખવુ, શાસનવિરાધનાના ભોગે સંયમચર્યાને પ્રધાન ન બનાવવી, લોકમર્યાદા-શાસ્ત્રીયવ્યવહાર-સ્વશક્તિ-દ્રવ્ય-ક્ષેત્ર-કાલ-ભાવ વગેરેનો વિચાર કરીને ઉચિત પ્રવૃત્તિ કરવી. આવા આચાર દ્વારા રત્નત્રયના આરાધક એવા માર્ગસ્થ ક્ષયોપશમવાળા જીવને પંડિત જીવ જાણવો [૧/૩]

ધર્મના માપદંડ તરીકે અથવા ધર્મસાધનરૂપે બાહ્ય વેશને પ્રધાનતયા જોનાર જીવને શા માટે બાલ જાણવો ? તે બાબતમા મૂલકારશ્રી હેતુ બતાવે છે કે —

<u>ગાથાર્થ</u> - [કેવલ] બાહ્ય વેશ અસાર છે, કારણ કે ધર્મનિષ્પત્તિ તેને બંધાયેલી નથી. કેમ કે વિડંબક [નટ] પણ કાર્યવશ બાહ્ય વેશને ધારણ કરે છે [૧/૪]

### ❀ કેવળ બાહ્ય વેશ અસાર ❀

<u>ટીકાર્થ</u> :- બહારથી દેખી શકાય તેવા વેશ વગેરે બાહ્ય ચિહ્ન નિષ્ફળ છે, કારણ કે ધર્મની નિષ્પત્તિ તેની અવિનાભાવી = વ્યાપક નથી. અર્થાત્ જ્યા જ્યા બાહ્ય સાધુવેશ હોય ત્યા ત્યા અવશ્ય તાત્ત્વિક ધર્મની ઉત્પત્તિ થયેલી જ હોય- એવો નિયમ નથી. કેમ કે પોતાના ધનપ્રાપ્તિ વગેરે પ્રયોજનને સિદ્ધ કરવાની ઈચ્છાથી નટ, બહુરૂપી વગેરે પણ બાહ્ય લિંગ-સાધુવેશ વગેરે

ततो न तद्धारयितु प्रणन्तु वा 'फलदमित्युभयथाऽप्यसारमित्यर्थ ॥१/४॥

त्यागलक्षणत्वादिद शोभन भविष्यती त्याशङ्क्याह --> '**बाह्ये**'त्यादि ।

**बाह्यग्रन्थत्यागान्न चारु, नन्वत्र तदितरस्यापि । कञ्चुकमात्रत्यागान्न हि भुजगो निर्विषो भवति ॥१/५॥**

**बाह्यग्रन्थस्य** = धनधान्यादे त्यागात् **न चारु** = शोभन, बाह्यलिङ्ग गुणशून्य **ननु** = निश्चित, **अत्र** लोके

**कल्याणकन्दली**

इच्छालोभसमापन्नो समणो कि भविस्सति ?॥ <-- [१९/९] इति **धम्मपद**वचनमप्यत्रानुस्मर्तव्यम् । परिषहोपसर्गभीरोर्न वेषमात्रादपवर्गोऽस्ति । तदुक्त **मुनिसुन्दरसूरिभिः अध्यात्मकल्पद्रुमे** --> परिषहान्नो सहसे न चोपसर्गान्न शीलाङ्गधरोऽपि चासि । तन्मोक्ष्यमाणोऽपि भवाब्धिपार, मुने ! कथ यास्यसि वेषमात्रात् ?॥ आजीविकार्थमिह यद्यतिवेषमेष, धत्से चरित्रममल न तु कष्टभीरु' । तद्वेत्सि कि न न बिभेति जगज्जिघृक्षुर्मृत्यु' कुतोऽपि नरकश्च न वेषमात्रात् ॥ <-- [अ क.१३/४-५] इत्यादि । **सुगमार्थकल्पनावृत्तिकारमते** बाह्यलिङ्गाऽसारत्वे धर्मनिष्पत्त्यव्याप्यत्वस्य विडम्बकगृहीतत्वस्य च स्वातन्त्र्येण हेतुत्वम् । **योगदीपिका**कृन्मते च बाह्यलिङ्गाऽसारताया धर्मनिष्पत्त्यव्याप्यत्वस्यैव हेतुत्वम् तस्य तात्त्विकधर्मानुपधायकत्वे च विडम्बकग्राह्यत्वस्य हेतुत्वमिति विशेषः । **न तत्** = बाह्यलिङ्ग **धारयितुः** = स्वाश्रयस्य **प्रणन्तुः वा** = स्वप्रणामकारिणो वा **फलद** = सद्धर्मयोगक्षेमवृद्धिलक्षणफलदायि **इति** हेतोः **उभयथाऽपि** = बाह्यलिङ्गधारकस्य तत्प्रणामकारकस्याऽप्यपेक्षया **असार** = धर्मनिष्पत्तिलक्षणसारशून्यम् । इदश्चोपलक्षण कदाचिदुभयोरपि विपरीतफलप्राप्ते. । द्रव्यलिङ्गिनि बह्वारम्भादिदर्शनोत्तरमपि साधुत्वबुद्ध्या प्रणन्तुः कर्मबन्धकत्वोक्तेरावश्यकनिर्युक्त्यादौ व्यक्तत्वात् । तदुक्त तत्र --> जह वेलबग-लिग जाणतस्स णमओ हवइ दोसो । णिद्धसमिय णाऊण वदमाणे धुवो दोसो ॥ <-- [आ नि ११४९] इति दिक् ॥१/४॥

मूलग्रन्थे दण्डान्वयश्चैवम् --> ननु बाह्यग्रन्थत्यागात् तत् न चारु, [यतःतत्] इतरस्यापि अत्र भवति । न हि कञ्चुकमात्रत्यागात् भुजगो निर्विषो भवति ॥१/५॥ **निश्चित न चारु = शोभन** इत्यत्र विशेषणमुखेन हेतुमावेदयति - **बाह्यलिङ्ग** स्वरूपतो **गुणशून्यमिति** । तस्य स्वरूपतो दुष्टत्वे त्वशोभनमित्युक्त स्यात् । स्वरूपतो गुणवत्त्वे च चार्विति वक्तव्य स्यात् । पर तदुभयविरहात् 'न शोभनमि'त्येवोक्ति. । **न च** विनिगमनाविरहान्नाऽशोभनमित्यपि वाच्य स्यादिति **वाच्यम्**, आशङ्कितस्यैवाऽनभिमतस्य व्यवच्छेदात्, लोके तस्याऽशोभनत्वेनाऽप्रसिद्धेः । **एतेन** बाह्यलिङ्ग चार्वेव, बाह्यग्रन्थत्यागात्, सम्प्रतिपन्नवदिति **प्रत्युक्तम्**, केवल बाह्यलिङ्ग न चारु, गुणशून्यत्वात्, तथाविधषण्ठादिगृहीतलिङ्गवदित्यस्याऽपि मनीषितसाध्यसाधने बद्धकक्षत्वात् । यथोक्त **आवश्यकनिर्युक्तौ** --> लिग पमाण ? वदाहि उ निण्हए तुमे सव्वे ! <-- [ ] । न चैतावता सत्प्रतिपक्षमात्रत्वमेवेति शङ्कनीयम्, पार्श्वस्थादिसत्कबाह्यलिङ्ग न चारु, अन्येषा बोधिदुर्लभत्वादिनिमित्तत्वात् धर्मप्रतिपन्थित्वाद्वेत्यादिना पूर्वोक्तानुमाने व्यभिचाराच्छोभनत्वाभावसिद्धे. । तदुक्त **सूत्रकृताङ्गे** --> जे याऽबुद्धा महाभागा, वीरा असमत्तदसिणो । असुद्ध तेसि परक्कत, सफल होइ सव्वसो ॥ <-- [सूत्रकृ १/८/२२] इति । 'सह फलेन = कर्मबन्धेन वर्तते इति सफल' इत्येव व्याख्यात **श्रीशीलाङ्काचार्येण** तद्वृत्तौ । अत एव केवलस्य द्रव्यलिङ्गस्याऽशुद्धत्वसिद्धिरप्यनाविला । नैश्चयिकसम्यग्दर्शनादिकलिते एव तस्योपयोगित्व नमस्कार्यतादौ । तदुक्त टीकाकृताऽपि **अध्यात्ममतपरीक्षावृत्तौ** --> द्रव्यलिङ्ग हि तद्वति स्वत एव गुणवत्त्वप्रतिसन्धापकतया स्वसमानाधिकरणगुणवत्त्वप्रतिसन्धापकतया वा नमस्कर्तव्यतायामुपयोगि सत् तद्विषयकमुत्साहमाधायाऽध्यात्मशुद्ध्यै प्रभविष्णु, न तु प्रतिमादिवत्तटस्थतयैव स्वसदृशस्मारकतया । तथा च द्रव्यलिङ्ग सावद्यस्वाश्रयविषयकोत्साहाधायकतया

धारण करे छे [साधुवेश धारण करवा छता तेनी पासे तात्त्विक धर्म नथी रहेतो ] माटे तेवा केवल बाह्य वेशने धारण करनारने के तेने प्रणाम करनारने बेमाथी कोईने पण फल नथी माटे बाह्य वेश लेनार अने नमनार बन्नेनी अपेक्षाए बाह्य वेश धर्मनिष्पत्तिनी दृष्टिए निष्फळ छे [१/४]

**विशेषार्थ** .- केवळ बाह्य लिगने = वेशने धारण करवाथी ज तात्त्विक धर्म उत्पन्न थई नथी जतो. नट, बहुरुपी वगेरे पण पैसा, यश, कीर्ति वगेरे माटे सन्यासीना वेशने धारण करीने सन्यासी जेवो आबेहुब हावभाव करे तेटला मात्रथी ते वदनीय बनी जता नथी बाह्य वेशने ज धर्मसाधनरूपे प्रधानताथी जोनार बाल जीव ज कहेवाय [१/४]

अहीं एवी शका थाय के --> बाह्य साधुवेशने धारण करवो ए पण संसारत्यागस्वरूप होवाना लीधे सुदर बनशे माटे बाह्य लिगने असार कहेवु बराबर नथी <-- तो तेना समाधानमा मूलकारश्री फरमावे छे के —

**गाथार्थ** .- खरेखर बाह्य ग्रथिना त्यागना लीधे ते [बाह्य लिग] सुदर नथी, कारण के ते अन्यने [= पशु वगेरेने] पण अहीं होय [=सभवे] छे. काचळीना त्यागमात्रथी साप झेर विनानो थई नथी जतो [१/५]

❀ अंतरंग परिग्रह छोडो ❀

१ मुद्रितप्रतो 'फलमि'ति पाठ ।

तत् बाह्यग्रन्थाभावलक्षणं इतरस्य तिर्यगादे अपि सम्भवति । एतदेव प्रतिवस्तूपमया द्रढयति - कञ्चुकमात्रस्य = उपरिवर्त्तित्वङ्मात्रस्य त्यागात् न हि = नैव भुजगः = सर्पो निर्विषो भवति ॥१/५॥

कल्याणकन्दली

धर्मप्रतिपन्थि <— [अ.प.गाथा ५८ टीका] इति ।

वस्तुतस्तु स्वाश्रयवृत्तिचारित्रमोहक्षयोपशमादिजनकतया स्वाश्रयगतचारित्रमोहक्षयोपशमादिसम्पादयतयैवोपचारतो बाह्यलिङ्गस्याऽपि वन्द्यता सम्मता । तदुक्तं आवश्यकनिर्युक्तौ —> लिंगं जिणपन्नत्तं, एअं नमंतस्स निज्जरा विउला । जइवि गुणविप्पहीणं वंदइ अज्झत्थसोहीए ॥११३१॥ इति । —> दंसणनाणचरित्तं तवविणयं जत्थ जत्तियं पासे । जिणपन्नत्तं भत्तीइ पूअए तं तहिं भावं <— ॥[४५५३] इति बृहत्कल्पभाष्यवचनमप्यनुसन्धेयमत्र । यत्र स्वल्पोऽपि दर्शनादिगुणसद्भावो दृश्यते तत्र तावत्यैव भक्त्या तद्वन्दनादिना न तद्गतदोषानुमतिरिति भावः [उप.रहस्य १४८ वृ.]। निष्ठुरपार्श्वस्थ-यथाच्छन्दादिगृहीतलिङ्गस्य तु कर्मोदयजन्यत्वादेव नोपचारतोऽपि वन्दनीयता । भुजगस्य कञ्चुकत्यागवत्तस्य बाह्यग्रन्थित्यागस्याऽप्यौदयिकभावमात्रत्वादेव तत्र 'साधु' इति वचनं भावसाधुत्वबाधेनाऽपकृष्टसाधुविषयतया पर्यवस्यद् रूपमत्यं न तु स्थापनासत्यमिति सम्यगुपपादितमस्माभिः मोक्षरत्नाभिधानायां भाषारहस्यविवरणटीकायामित्यधिकं ततोऽवसेयम् [भा.रह. पृ.१०३-दिव्यदर्शनट्रस्टप्रकाशित] ।

बाह्यलिङ्गस्य गुणशून्यत्वसाधनार्थमुपक्रमते- अत्र लोके इति स्पष्टम् । प्रतिवस्तूपमया = प्रतिवस्तूपमालङ्कारेण, प्रत्येकं वस्तुनि = वाक्यार्थे साधारणधर्मस्य सतः शब्दभेदेनोपादीयमानत्वात् । तदुक्तं मम्मटेन काव्यप्रकाशे —> साधारणो धर्मः उपमेयवाक्ये उपमानवाक्ये च कथितपदस्य दुष्टतयाभिहितत्वात् शब्दभेदेन यत् उपादीयते सा वस्तुनः = वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा <— [का.प्र.सू. १५४-का.१०१] इति । कञ्चुकमात्रस्येति । स्पष्टम् । यथोक्तं सज्जनचित्तवल्लभे मल्लिषेणेन —> किं वस्त्रत्यजनेन भो मुनिरसावेतावता जायते ? क्ष्वेडेन च्युतपन्नगो गतविषः किं जातवान् भूतले ॥ <— [ ] इति । न च तथापि ज्वालालिङ्गन-जलनिमज्जन-जटाधारण-केशमुण्डन-दिगम्बरत्व-भस्मावगुण्ठन-शीततापादिकष्टसहन-शास्त्रपाठोच्चार-ध्यानादिभिर्बाह्यलिङ्गस्य कुतो न चारुत्वमिति शङ्कनीयम्, भावशुद्धिविकलाया क्रियाया सत्फलत्वाऽयोगात् पश्वादावपि तदुपलब्धेः । तदुक्तं —> ज्वालाभिः शलभा जलैर्जलचरा स्फूर्जज्जटाभिर्वटाः, मौण्ड्यैरूरणका समस्तपशवो नाग्न्यैः खरा भस्मभिः । कष्टाङ्गीकरणैर्द्रुमाः शुकवराः पाठैर्बका ध्यानकैः, किं सिध्यन्ति न भावशुद्धिविकलाः स्युश्चेत् क्रियाः सत्फलाः ॥ <— इति । धम्मपदेऽपि —> न नग्गचरिया न जटा न पङ्का नाऽनासका थण्डिलसायिका वा । रजो च जल्लं उक्कटिकप्पधानं सोहिन्ति मच्चं अवितिण्णकखं ॥ <— [१०/१३] इत्युक्तम् । तदुक्तं नियमसारे कुन्दकुन्दस्वामिनाऽपि —> किं काहदि वणवासो कायकलेसो विचित्त उववासो । अज्झयण-मोणपहुदी, समतारहिअस्स समणस्स ॥ <— [१२४] इति । एतेन —> भस्मधारणादेव मुक्तिर्भवति <— [१/२] इति बृहज्जाबालोपनिषद्वचनं निराकृतम्, भावशुद्ध्या भस्मधारणादेरन्यथासिद्धत्वात् । प्रकृते —> मिच्छत्तं वेयतियं हासाई छक्कगं च नायव्वं । कोहाईणं चउक्कं चउदस अब्भितरा गंथा ॥ <— [प्र.सारो ७२१] इति प्रवचनसारोद्धारादिप्रतिपादितस्य मिथ्यात्व-वेदत्रिक-सम्परायचतुष्टय-हास्यादिषट्कलक्षणचतुर्दशाऽभ्यन्तरग्रन्थस्याऽत्यागे दृढजिहासाऽविषयत्वे वा —> वज्झो नवविहो णेओ धण-धन्न-खित्त-वत्थु-रुप्पाइ । सोवन्न-कुवियपरिमाण-दुपयचउप्पयमुहो वुत्तो ॥ [६/५०] —> इत्येवं सम्बोधप्रकरणोक्त-धन-धान्यादिनवविधबाह्यग्रन्थत्यागस्य त्यक्तकञ्चुकाऽत्यक्तहलाहलभुजङ्गमन्यायेन न प्राशस्त्यं, प्रत्युताऽन्येषां विपर्यासजनकत्वाद्दुष्टत्वमिति निष्कर्षः । तदुक्तं टीकाकृताऽपि ज्ञानसारे —> चित्तेऽन्तर्ग्रन्थगहने, बहिर्निर्ग्रन्थता वृथा । त्यागात् कञ्चुकमात्रस्य भुजगो न हि निर्विषः ॥ <— [परिग्रहाष्टक २५/४] इति । तथा अध्यात्मसारे —> विषयैः किं परित्यक्तैः जागर्ति ममता यदि । त्यागात्कञ्चुकमात्रस्य भुजगो नैव निर्विषः ॥ <— [अ.सा.८/२] इति कथितम् । टीकाकृता देशनाद्वात्रिंशिकायामपि —> गृहत्यागादिकं लिङ्गं बाह्यं शुद्धिं विना वृथा । न भेषजं विनाऽऽरोग्यं वैद्यवेषेण रोगिणः <— ॥२/७॥ इत्युक्तम् । तदुक्तं योगसारप्राभृतेऽपि —> प्रमादी त्यजति ग्रन्थं बाह्यं मुक्त्वाऽपि नान्तरम् । हित्वाऽपि कञ्चुकं सर्पो गरलं न हि मुञ्चति ॥ <— [८/३१] इति । तदुक्तमन्यत्रापि —> कसाया जस्स नो छिण्णा, जस्स

**टीकार्थ** :- धन, धान्य आदि नवविध परिग्रह बाह्य ग्रंथ = ग्रंथि = गांठ भार-बोज कहेवाय छे. एटलुं तो निश्चित छे के तेना त्याग करवाना लीधे कोई गुणशून्य बाह्य लिंगने सुंदर कही न शकाय. बाह्य ग्रंथना त्यागरूपी बाह्य लिंग तो पशु वगेरे पासे पण आ लोकमां संभवे छे. आ ज वास्तविकताने द्रष्टान्त द्वारा हरिभद्रसूरिजी महाराजा द्रढ करे छे के- उपर रहेली केवल चामडीना = कांचळीना त्यागथी साप झेर विनानो न ज थाय. [१/५]

**विशेषार्थ** - धन, धान्य, क्षेत्र (खेतर, जमीन), वास्तु, रूप्य, सुवर्ण, कुप्य, द्विपद (दास-दासी), चतुष्पद (पशु, ढोर)- आ नव प्रकारना बाह्य परिग्रहनो त्याग ए मिथ्यात्व + ३ वेद + ४ कषाय + ६ हास्यादि = १४ अभ्यंतर परिग्रहना त्याग माटे छे. अभ्यंतर १४ ग्रंथिनो त्याग न करे के तेने छोडवानुं कशुं लक्ष न होय अने ते दिशामां कोई पुरुषार्थ न होय तो केवळ

उक्तार्थे तन्त्रान्तरसंवादमप्याह —> 'मिथ्ये'त्यादि

**मिथ्याचारफलमिदं ह्यपरैरपि गीतमशुभभावस्य । सूत्रेऽप्यविकलमेतत्प्रोक्तममेध्योत्करस्यापि ॥१/६॥**

**हि** = यस्मात्, **अपरैरपि** = तन्त्रान्तरीयैरपि **अशुभभावस्य** पुंस **इदं** = केवलं बाह्यलिङ्गं मिथ्याचारस्य फलं **गीतम्** । मिथ्याचारस्वरूपश्चेदं —> बाह्येन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा

**कल्याणकन्दली**

नऽप्पवसं मणं । इंदियाणि न गुत्ताणि पवज्जा तस्स निप्फला ॥ <— [ ] इति । तथा **भावप्राभृते कुन्दकुन्दस्वामिना** —> भावो हि पढमलिंगं, ण दव्वलिंगं जाण परमत्थं । भावो कारणभूदो, गुणदोसाणं जिणा बिंति ॥ [२] भावविसुद्धिणिमित्तं बाहिरगंथस्स कीरए चाओ । बाहिरचाओ विहलो, अब्भंतरगंथजुत्तस्स ॥ [३] परिणाममम्मि असुद्धे गंथे मुंचेइ बाहिरे य जई । बाहिरगंथच्चाओ, भावविहूणस्स किं कुणइ ?॥ [५] <— । तदुक्तं **उपदेशमालायामपि** —> किं लिंगविड्डरीधारणेण, कज्जम्मि अट्ठिए ठाणे । राया न होइ सयमेव, धारयं चामराडोवे ॥[उप.मा.४३६]<— । **मृच्छकटिके शुद्रकेणाऽपि** —> शिरो मुण्डितं तुण्डं चित्तं न मुण्डितं किं मुण्डितम् ? यस्य पुनश्चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम् ॥[६/३] <— इत्युक्तम् । **पञ्चाशकेऽपि** —> दिक्खा मुंडणमेत्थं तं पुण चित्तस्स होइ विण्णेयं । ण हि अप्पसंतचित्तो धम्महिगारी जओ होइ ॥ <—[२/२] इत्युक्तं मूलकारैः । अन्यथा लिङ्गस्याऽप्रमाणत्वात्, यथोक्तं **उपदेशमालाया** —> वेसो वि अप्पमाणो, असंजमपहेसु वट्टमाणस्स किंपरिवत्तियवेसं विसं न मारेइ खज्जंतं ॥ <— [उप मा.२१] इत्यादि । **जीवानुशासनेऽपि** —> अप्पमाणमेव सो वेसो जो निस्संकं वट्टइ असुहट्ठाणेसु तेण जुओ <— [२४८] इत्युक्तम् ।

ननु तर्हि बाह्यग्रन्थो नैव त्यक्तव्यो न वा वन्दनादिक्रियाकलापे प्रवर्तितव्यमिति **चेत्** ? **मैवं**, परप्रत्ययाद्यर्थं लिङ्गस्याप्युपकारित्वात् । तदुक्तं —> पच्चयत्थं च लोगस्स, नाणाविहविगप्पणं । जत्तत्थं गहणत्थं च लोगे लिंगपओयणं ॥ <— [ ] इति । अभ्यन्तरग्रन्थत्यागार्थं बाह्यग्रन्थत्यागस्याऽऽवश्यकत्वात्, तस्य तत्कारणत्वात् । तदुक्तं **धवलाया** —> ववहारणयं पडुच्च खेत्तादी गंथो, अब्भंतरगंथकारणत्तादो । एदस्स परिहरणं णिग्गंथत्तं । णिच्छयणयं पडुच्च मिच्छत्तादी गंथो, कम्मबंधकारणत्तादो । तेसिं परिच्चागो णिग्गंथत्तं <—[पुस्तक-९, खंड-४, भा-१, पृ. ३८३] । वस्तुतस्तु उभयत्र विवेकदृष्ट्या बहिरन्तर्ग्रन्थत्यागपुरस्सरं ज्ञान-सत्क्रिययोः प्रवर्त्तनीयत्वे तात्पर्यम्, अन्यथा सज्ज्ञानयोगानुपलब्धेः । —> चित्ते न त्याग-वैराग्ये, सज्ज्ञानं तस्य दुर्घटम् । बाह्यत्यागैकसन्तुष्टावात्मभानं हि दुर्घटम् ॥ <— इति । तदुक्तं टीकाकृताऽपि **अध्यात्मोपनिषदि** —> तेन ये क्रियया मुक्ता ज्ञानमात्राभिमानिनः । ते भ्रष्टा ज्ञानकर्मभ्यां नास्तिका नात्र संशयः ॥ <— [अ.उप.३/३८] इति दिक् ॥१/५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> हि अपरैरपि अशुभभावस्य इदं मिथ्याचारफलं गीतम् । सूत्रेऽपि एतत् अविकलं अमेध्योत्करस्यापि प्रोक्तम् ॥१/६॥ **पञ्चाशकवृत्तिकृन्मते** मिथ्यात्वाविरतिकषायदुष्प्रयोगलक्षणो मोक्षमार्गविपरीतसमाचारो मिथ्याचारः [प २/४३ पृ ८७] तथापि प्रकृते टीकायां **मिथ्याचारस्येत्यत्र** कर्मधारयसमासः । दर्शितभगवद्गीताकारिकायाश्च **'मिथ्याचार'** इतिपदं बहुव्रीहिसमासगर्भितम् । **मधुसूदनसरस्वतीकृतगूढार्थदीपिकाव्याख्यालेशस्त्वेवम्** —> यो विमूढात्मा रागद्वेषादिदूषितान्तःकरणः औत्सुक्यमात्रेण कर्मेन्द्रियाणि वाक्पाण्यादीनि संयम्य = निगृह्य बहिरिन्द्रियैः कर्माण्यकुर्वन्निति स मिथ्याचारः

બાહ્ય વેશ ધારણ કરીને બાહ્ય પરિગ્રહનો ત્યાગ કરવો પ્રશંસનીય નથી. લક્ષ્મણા સાધ્વી, કુલવાલક મુનિ વગેરે દૃષ્ટાંતો પ્રસિદ્ધ જ છે. કડવી તુંબડીને ૬૮ તીર્થોમાં સ્નાન કરાવવામાં આવે તો પણ તેની કડવાશ દૂર થતી નથી. અંદરથી ઝેરની કોથળી કાઢવામાં ન આવે તો બહારની કાંચળીને છોડી દેવા માત્રથી સાપ નિર્વિષ નથી બની જતો. મતલબ કે પુરુષાર્થની પ્રધાનતા કે પ્રશંસનીયતા સાપની ઝેરની કોથળીને દૂર કરવામાં જ સંભવે છે. તેમ અભ્યંતર ૧૪ પરિગ્રહના ત્યાગ માટે જ પુરુષાર્થની પ્રધાનતા કરવી જોઈએ. બાહ્યપરિગ્રહત્યાગ તેમાં ઉપકારી જરૂર બને. પરંતુ બાહ્ય ગ્રંથિના ત્યાગમાત્રથી સંતુષ્ટ થવાની પણ જરૂર નથી. જેટલા અંશે અભ્યંતરપરિગ્રહત્યાગમાં બાહ્યપરિગ્રહત્યાગ ઉપકારી બને તેટલા અંશે બાહ્યત્યાગ પ્રશંસનીય બને. માટે તો કહેવામાં આવેલ છે કે - ત્યાગ-વિરાગ ન ચિત્તમાં, થાય ન તેને જ્ઞાન. અટકે ત્યાગ-વિરાગમાં, તો ભૂલે નિજ ભાન. - અહીં ગ્રંથકારશ્રી પણ 'જો તારું મન અંતરંગ પરિગ્રહથી આકુળ-વ્યાકુળ છે, તો બહારનો સાધુપણાનો દેખાવ વ્યર્થ છે' એમ કહીને સાધુવેશ છોડવાની વાત નથી કરતા, પરંતુ અંતરંગ પરિગ્રહના ત્યાગની પાવન પ્રેરણા આપે છે. [૧/૫]

ઉપરોક્ત અર્થને વિશે અન્ય દર્શનકારોના વચનનો સંવાદ બતાવતા મૂલકારશ્રી જણાવે છે કે —

<u>**ગાથાર્થ**</u> :- અશુભ ભાવવાળાનું આ [= બાહ્ય લિંગ] અન્ય દર્શનકારોએ પણ મિથ્યાચારનું ફળ બતાવેલ છે. આગમમાં પણ સંપૂર્ણ બાહ્ય લિંગ વિષ્ટાના ઢગલા જેવા [અપવિત્ર અભવ્ય] જીવને પણ જણાવેલ છે. [૧/૬]

<u>**ટીકાર્થ**</u> - [કેવલ બાહ્ય વેશ સુંદર નથી,] કારણ કે અન્ય દર્શનકારોએ પણ અશુભ ભાવવાળા પુરુષના કેવલ બાહ્ય વેશને મિથ્યાચારનું ફળ કહેલ છે. મિથ્યાચારવાળાનું સ્વરૂપ અન્યત્ર = ભગવદ્ગીતામાં આ પ્રમાણે જણાવેલ છે કે —> 'બાહ્ય ઈન્દ્રિયોનો

मिथ्याचार स उच्यते ॥ <— (भ.गी.३/६) इति । **सूत्रेऽपि** = स्वकीयागमेऽपि, **एतत्** = बाह्यलिङ्ग, **अविकल** = परिपूर्ण, **अमेध्योत्करस्यापि** = उच्चारनिकरकल्पस्यापि उक्त, अनन्तशो द्रव्यलिङ्गग्रहणश्रवणात् ॥१/६॥

**कल्याणकन्दली**

सत्त्वशुद्ध्यभावेन फलायोग्यत्वात्पापाचार उच्यते <— [भ.गी.३/६ गू.वृ.पृ.१७४] इति । युक्तश्चैतद् विषयममत्व-वैराग्ययो सहानवस्थानात् । तदुक्त **निशीथभाष्ये** —> णालस्सेण सम सोक्ख, ण विज्जा सह णिद्दया । ण वेरग्ग ममत्तेण णारभेण दयालुया ॥५३०७॥ इति । —> ये लुब्धचित्ता विषयादिभोगे बहिर्विरागा हृदि बद्धरागा । ते दाम्भिका वेशभृताश्च धूर्त्ता मनासि लोकस्य तु रञ्जयन्ति ॥२०॥ <— इति हृदयप्रदीपषट्त्रिंशिकावचनमपि स्मर्तव्यमत्र । अन्यत्रापि —> अर्थे ह्यविद्यमानेऽपि ससृतिर्न निवर्तते । ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ <— [ ] इति प्रोक्तम् । **धम्मपदे**ऽपि —> अनिक्कसावो कासाव यो वत्थ परिदहेस्सति । अपेतो दमसच्चेन न सो कासावमरहति ॥ <— [१/९] इत्युक्तम् । तत्रैव चाग्रे —> कि ते जटाहि दुम्मेध कि ते अजिनसाटिया । अब्भन्तर ते गहन बाहिर परिमज्जसि ॥ <— [२६/१२] इत्युक्तम् । **अश्वघोषेणा**ऽपि **सौदरनन्दे** —> यो नि सृतश्च न च नि सृतकामराग , कषायमुद्वहति यो न च निष्कषाय । पात्र बिभर्ति च गुणैर्न च पात्रभूतो लिङ्ग वहन्नपि स नैव गृही न भिक्षु ॥ <— [७/४९] इति प्रोक्तम् । **उत्तराध्ययने**ऽपि —> विस तु पीय जह कालकूट हणइ सत्थ जह कुग्गहीय । एमेव धम्मो विसओववन्नो, हणइ वेयाल इवाविवन्नो ॥[२०/४४] <— इत्युक्त्या गाढविषयसुखाभिलाषयुक्तस्य धर्मस्य घातकत्वमुक्तम् । **रमणगीतायामपि** —> सन्यासो निर्मल ज्ञान न कषायो न मुण्डनम् <— [८/५] इत्युक्तम् । **उच्चारनिकरकल्पस्यापि** = अभव्यस्य दूरभव्यस्य वाऽचरमावर्तवर्तिनोऽपीत्यर्थः । **अनन्तशो द्रव्यलिङ्गग्रहणश्रवणादिति** । तदुक्त **भक्तपरिज्ञाया वीरभद्रसूरिभिः** —> भावनमुक्कारविवज्जियाइ जीवेण अकयकरणाइ । गहियाणि अ मुक्काणि अ अणतसो दव्वलिगाई ॥ <— [७९] । तदुक्त प्रज्ञापनाया —> एगमेगस्स ण भते ! मणूसस्स गेवेज्जगदेवत्ते केवइया दव्विंदिया अईया ? गोयमा ! अणता <— [प्र इन्द्रियपद-सू ३१] इति । —> जीवे तिसुवि अट्ठारसुत्तरेसु गेविज्जविमाणावासयेसु एव चेव <— इति [सू ४५८] व्याख्याप्रज्ञप्तौ द्वादशे शतके सप्तमोद्देशकेऽयमेव पदार्थः सर्वजीवानधिकृत्य प्रोक्त । तदुक्त **जीवाजीवाभिगमे**ऽपि —> सोहम्मीसाणेसु ण भते ! कप्पेसु सव्वपाणा सव्वभूया जाव सत्ता पुढविकाइयत्ताए जाव वणस्सतिकाइयत्ताए देवत्ताए देवित्ताए आसण-सयण जाव भडोवगरणत्ताए उववण्णपुव्वा ? हता गोयमा ! असइ अदुवा अणतखुत्तो, सेसेसु कप्पेसु एव चेव, णवरि नो चेव ण देवित्ताए, जाव गेवेज्जगा <— [३/२/२०] इति । **श्रीमलयगिरीयवृत्तिलेशस्त्वेवम्** —> गौतम ! 'असकृत्' = अनेकवार उत्पन्नपूर्वा इति सम्बन्ध , अथवा 'अनन्तकृत्वः' = अनन्तान्

નિગ્રહ કરી વિશેષ રીતે જે મૂઢ વ્યક્તિ ઇન્દ્રિયના વિષયોને મનથી યાદ કરતો બેસે [= રહે] છે તે પુરુષ મિથ્યાચારવાળો કહેવાય છે' <— આપણા [જૈન] આગમમા પણ વિષ્ટાના ઢગલા જેવા દોષગ્રસ્ત અભવ્ય કે દૂરભવ્ય જીવને પણ પ્રસ્તુત બાહ્ય સાધુવેશ પરિપૂર્ણરૂપે = એક પણ દોષ વિનાનુ = માખીની પાખ જેવુ શુદ્ધ જણાવેલ છે, કારણ કે અનત વાર દ્રવ્ય લિગને = સાધુવેશને ગ્રહણ કરવાની વાત જૈન આગમમા પણ સભળાય છે [૧/૬]

**વિશેષાર્થ** :- બાહ્ય રીતે સસારનો ત્યાગ કરી, સન્યાસીનો વેશ ધારણ કર્યા પછી પણ ઇન્દ્રિયના અનુકૂળ વિષયોને યાદ કરવા એ મૂઢતા છે મન મૂડાવ્યા વિના કેવળ માથું મૂડાવીને લોકલાજે સન્યાસને આચરવો-પાળવો તે મિથ્યા આચરણ છે તેનાથી આત્માનો ઉદ્ધાર થઈ ન શકે આવુ કહેવાની પાછળ પરદર્શનીઓનો પણ એ જ આશય છે કે બાહ્ય સસારના ત્યાગની જેમ વિષય-કષાયનો અભ્યતર સસાર પણ છોડવામા આવે તો જ ધારણ કરેલ સતનો વેશ સાર્થક બની શકે બાહ્યસસારત્યાગ પછી અર્થોપાર્જન આદિ ચિંતા ન હોવાથી જો અભ્યતર સસારને બમણા જોરથી વળગવાનુ બને તો હકીકતમા નવા સસારનુ જ પુનર્નિર્માણ થવાથી તેનો સન્યાસવેશ જૂઠો છે

## ✧ .... માટે અનંત ઓઘા નિષ્ફળ ગયા ✧

જૈનાગમમા પણ જણાવેલ છે કે વ્યવહારરાશિના લગભગ દરેક જીવો અનતીવાર નવ ગ્રૈવેયકમા ઉત્પન્ન થયેલ છે નવ ગ્રૈવેયક દેવલોકમા સાધુવેશ વિના કે નિર્મળ સાધ્વાચારપાલન વિના કોઈ પણ જીવ જઈ ન શકે તેનો મતલબ એ થયો કે વ્યવહારરાશિના જીવોએ અનતીવાર સાધુવેશ ધારણ કરીને સાધુઆચારનુ નિર્મળ પાલન કરેલ છે છતા મોક્ષ ન થયો આનુ કારણ એ જ સભવે કે બાહ્ય સસારના ત્યાગ પછી અવશ્ય કર્તવ્ય અભ્યતરસસારત્યાગ પ્રત્યે જીવ બેદરકાર બન્યો એટલુ જ નહિ પણ વિષય-કષાયના આતરિક સસારનો જ રસિયો બનીને પોતાની જાતને વિષ્ટાના ઉકરડા કરતા પણ વધુ દુર્ગંધી-અપવિત્ર અને મેલી બનાવી જ મેળવેલ મહામૂલા સાધુવેશને પણ આતર અપાત્રતા-અયોગ્યતાના લીધે નિરર્થક બનાવ્યો એટલુ જ નહિ, સાધુવેશગ્રહણ પછી તારક પચપરમેષ્ઠીની આશાતના-અનાદર દ્વારા અનત સસારભ્રમણ વધારી દીધુ બહારથી મુક્તિની યાત્રા કરવા નીકળી અનત અનર્થોને ઉભા કરવાની ગભીર-ગોઝારી ભૂલ અભવ્યતા કે દૂરભવ્યતા કે અચરમાવર્તપણાના લીધે વ્યવહારરાશિના પ્રાય પ્રત્યેક

वृत्तमाश्रित्याह --> वृत्तमित्यादि ।

**वृत्त चारित्रं खल्वसदारम्भविनिवृत्तिमत्तच्च । सदनुष्ठान प्रोक्त कार्ये हेतूपचारेण ॥१/७॥**

**वृत्त** = विधिप्रतिषेधरूप वर्तन, **चारित्रमेव, खलु** अवधारणार्थ । **तच्च** इह [१]असदारभादाश्रवरूपाद् विनिवृत्तिमत्

**कल्याणकन्दली**

वारान्, साव्यवहारिकराश्यन्तर्गतैर्जीवैः सर्वस्थानाना प्रायोऽनन्तशः प्राप्तत्वात्, एवमीशानेऽपि वक्तव्य, सनत्कुमारेऽप्येवमेव, नवर 'नो चेव णं देवित्ताए' इति विशेष·, तत्र देवीनामुत्पादाऽभावात्, एव यावद् ग्रैवेयकाणि <-- इति । तदुक्त **पुष्पमालाया**-मपि --> अहरगइपडियाण किलिट्ठचित्ताण नियडिवहुलाण । सिरितुडमुडणेण न वेसमित्तेण साहारो ॥ वेलवगाइसु वि दिसइ लिग न कज्जससिद्धी । पत्ताइ च भवोहे अणतसो दव्वलिगाइ ॥ <-- [२२५/२२६] इति । इदमेवाभिप्रेत्य **धर्मविन्दुवृत्तावपि** --> सर्वजीवानामेवानन्तशो ग्रैवेयकोपपातश्रवणादिति <-- [७/३६] प्रोक्तम् । **पञ्चाशके**ऽपि --> आणोहेणाऽणता मुक्का गेवे-ज्जगेसु उ सरीरा <-- [१४/४८] इत्युक्तम् । **उपदेशपदे**ऽपि --> ज दव्वलिगकिरियाऽणता तीया भवम्मि सगलादि । सव्वेसि पाण्ण <-- [२३३] इत्युक्तम् । तदुक्त **पञ्चवस्तुके**ऽपि --> सव्वजिआण चिअ ज सुत्ते गेविज्जगेसु उववाओ। भणिओ ण य सो एअ लिग मोत्तु जओ भणिय ॥ जे दसणवावन्ना लिगग्गहण करिति सामण्णे तेसि पि अ उववाओ, उक्कोसो जाव गेविज्जा ॥ <-- [प.व.१०३८/१०३९] इति । तदुक्त **उपदेशमालायामपि** --> ससारसागरमिण परिब्भमतेहिं सव्वजीवेहिं । गहियाणि य मुक्काणि य अणतसो दव्वलिगाइ ॥ <-- [उ.मा.५२१] इति । तदुक्त **कुन्दकुन्दस्वामिना समयसारे** --> वद-समिदी-गुत्तीओ, सीलतव जिणवरेहि पण्णत्त । कुव्वतो वि अभव्वो, अण्णाणी मिच्छदिट्ठी दु ॥<-- [२७३] इति । व्यापन्न-दर्शनानामखण्डद्रव्यश्रामण्यपरिपालनतो जायमाना नवमग्रैवेयकादिप्राप्तिरपि न वस्तुत· प्रशसनीया, विपाकदारुणत्वात् । तदुक्त **योगविन्दौ** --> ग्रैवेयकाऽऽप्तिरप्येव नात·श्लाघ्या सुनीतित· । यथाऽन्यायाऽर्जिता सम्पद् विपाकविरसत्वत· ॥१४५॥ <-- इति ।

अज्ञातदशाया द्रव्यलिङ्गिनि प्रयुज्यमानाया. वन्दनादिक्रियाया. प्रणन्त्राद्यपेक्षया सफलत्वेऽपि तद्धारकस्य न धर्मनिष्पत्तिल-क्षणफलावाप्ति. । ज्ञातदशायान्तु तत्सङ्गादेरपि परिहार एव **अङ्गारमर्दक**शिष्यादिवत् कर्तव्य इति सिद्ध गुणशून्यबाह्यलिङ्गस्याऽ-सारत्वम् । बाह्यलिङ्गञ्चोपलक्षण भावशून्याया. बाह्यक्रियाया., तस्या. खद्योतप्रकाशवत् मन्दत्वाद्विनाशित्वाच्च । तदुक्त ग्रन्थकृतैव **योगदृष्टिसमुच्चये** --> तात्त्विक· पक्षपातश्च भावशून्या च या क्रिया । अनयोरन्तर ज्ञेय भानु-खद्योतयोरिव ॥२२३॥<-- इत्यादि । तादृश तप प्रभृतिकमपि गजस्नानकल्पमेव, तदुक्त --> जस्स वि अ दुप्पणिहिआ होति कसाया तव चरतस्स । सो बालतवस्सीविव गयण्हाणपरिस्सम कुणइ ॥ <-- [ ] । इत्थञ्च धर्मपरीक्षापेक्षया लिङ्गप्रेक्षित्व, आचारापेक्षया निषिद्ध-कार्यकारित्व स्वरूपतश्च विवेकविकलत्वमिति त्रिविध बाललक्षणमुपदर्शितमेतावतेति निष्कर्ष । विवेकविकलत्वादेवाऽय परैरन्धादि-पदेनोच्यते । तदुक्त **योगवाशिष्ठे** --> विवेकान्धो हि जात्यन्ध. <-- [मुमुक्षुप्रकरणे १४/४१] इति ॥१/६॥

द्वितीयकारिकाया 'मध्यमबुद्धिर्विचारयति वृत्तमि' [षो १/२/पृ.३] त्युक्तम् । तत्र **वृत्त आश्रित्य** = उद्दिश्य मूलकार **आह - वृत्तमित्यादि** । मूलग्रन्थे दण्डान्वयस्त्वेवम् --> वृत्त = चारित्र खलु; तच्च असदारम्भविनिवृत्तिमत् । कार्ये हेतूपचारेण सदनुष्ठान चारित्र प्रोक्तम् ॥१/७॥ देशविरतस्याऽप्यसदारम्भनिवृत्तिपरिकलितत्वात् असदारम्भविनिवृत्तिमदित्युक्तम्, निवृत्तौ वैशिष्ट्यञ्चैकादशप्रतिमाप्रतिपन्नश्रावकाद्यपेक्षयाऽवगन्तव्यमिति न कोऽप्यतिप्रसङ्ग । व्यवहारतो दशाविशेषे कदाचिदसदारम्भे प्रवृत्तिरपि साधोस्स्यादित्यत 'आश्रवरूपादि'त्युक्तम् । इदञ्च निश्चयतो बोध्यम् । ननु हिसाद्यसदारम्भनिवृत्तेश्चारित्रपदप्रतिपाद्यत्वे तु चारित्रस्याऽऽन्तरपरिणामविशेषात्मकत्वमेव प्राप्तम्, तस्या आत्मपरिणतिविशेषस्वरूपत्वात् । ततश्च सदनुष्ठानस्य चारित्रपदप्रति-

જીવોએ કરેલ છે આનો મતલબ એ છે કે માત્ર બાહ્ય સાધુવેશ અકિંચિત્કર છે તેની પ્રાપ્તિમા જ ઈતિકર્તવ્યતા સમાયેલી નથી છતા બાહ્ય વેશને જ ધર્મપરીક્ષાની પ્રધાન પારાશીશી માનવાના લીધે તેમ જ નિષિદ્ધ આચરણ કરવાના લીધે જીવ બાલ કહેવાય છે આ રીતે બાલ જીવ સબધી વક્તવ્ય પૂર્ણ થાય છે [૧/૬]

પૂર્વે 'મધ્યમબુદ્ધિ વૃત્તને = વર્તનને વિચારે છે ' એમ જણાવેલ હતુ, તેને ઉદ્દેશીને મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** ·- વૃત્તનો અર્થ છે ચારિત્ર તે અસત્ આરભની નિવૃત્તિવાળુ છે કાર્યમા કારણનો ઉપચાર કરીને સદનુષ્ઠાન ચારિત્ર કહેવાયેલ છે [૧/૭]

## સદનુષ્ઠાન ઉપચારથી ચારિત્ર છે

**ટીકાર્થ** ·- વૃત્તનો અર્થ છે વિધિ-પ્રતિષેધસ્વરૂપ વર્તન તે ચારિત્રસ્વરૂપ જ છે પ્રસ્તુતમા ચારિત્ર અસદારભાત્મક આશ્રવથી

[१] मुद्रितप्रता 'अमदारम्भाश्रवरूपात्' इत्यशुद्ध पाठ ।

अहिंसाद्यात्मकम् । **सदनुष्ठाने प्रोक्तं कार्ये** सदनुष्ठानरूपे **हेतोः** आन्तरचारित्रपरिणामरूपस्य **उपचारेण** = अध्यारोपेण ॥१/७॥

एतच्च सदनुष्ठानं शुद्धाऽशुद्धतया द्विभेदमित्याह --> '**परिशुद्धमि**'त्यादि ।

कल्याणकन्दली

पायत्वप्रसिद्धिः कुतः ? तस्य बाह्यसत्क्रियाविशेषात्मकत्वादित्याशङ्कामपाकर्तुमुपक्रमते - **सदनुष्ठाने** चारित्रपदवाच्यत्वेन सिद्धान्ते **प्रोक्तं**, तद्धि **कार्ये** = चारित्रफले सदनुष्ठानरूपे **हेतोः** आन्तरचारित्रपरिणामरूपस्य असदारम्भनिवृत्तिप्रणिधानस्य **उपचारेण** = अध्यारोपेण ज्ञेयम्, तक्रादौ दध्याद्युपचारवत् ।

ननु तत्त्वमीमांसायामुपचारस्याऽकिञ्चित्करत्वम् । न हि गोत्वेनोपचरितः षण्ढः पयसा पात्रीं प्रपूरयतीति चेत् ? मैवम्, तत्कार्यात्मके तदुपचारस्याऽप्यर्थक्रियाकारित्वोपलब्धेः समीचीनत्वात्, क्वाथ्यमानातितप्ततैलादपि घृतादिद्रवणलक्षणार्थक्रियाया अनलसाध्याया विनाऽप्यनलघृतादिसंयोगमुपलम्भवत् आन्तरपरिणामविशेषरूपचारित्रजन्यात् सदनुष्ठानादपि भावचारित्रसाध्याया निर्जरादिलक्षणार्थक्रियाया उपलब्धेश्चारित्रकार्यस्य सदनुष्ठानस्याऽपि चारित्रत्वोक्तिः सङ्गच्छतेतराम् । निश्चयव्यवहारनयद्वयसम्मतसाधुस्वरूपं वर्णयद्भिर्मूलकारैरप्युक्तं पञ्चाशके --> ते पुण समिया गुत्ता, पियदढधम्मा जिइंदियकसाया । गंभीरा धीमंता पण्णवणिज्जा महासत्ता ॥ उस्सग्गववायाणं वियाणगा सेवगा जहासत्ति । भावविसुद्धिसमेता, आणारुतिणो य सम्मति ॥ सव्वत्थ अपडिबद्धा मेत्तादिगुणण्णिया य णियमेण । सत्ताइसु होंति दढं, इय आययमग्गतल्लिच्छा । एवंविहा उ णेया सव्वणयमतेण समयणीतीए । भावेण भाविएहिं, सह चरणगुणट्ठिया साहू ॥ <-- [पंचा ११/४०-४१-४२-४३] । एतेन --> 'सिद्धे नो चरित्ती नोअचरित्ती' <-- [ ] इति व्याख्याप्रज्ञप्तिवचनमपि व्याख्यातम्, तत्र सदनुष्ठानस्वरूपचारित्रनिषेधेऽप्यविरतिपरिणामलक्षणाऽचारित्रित्वाऽयोगात् ।

वस्तुतस्तु निश्चयेन मोहक्षोभविहीनस्यात्मपरिणामस्यैव चारित्रत्वम् । तदुक्तं प्रवचनसारे --> चारित्तं खलु धम्मो, धम्मो जो सो समो त्ति णिद्दिट्ठो । मोहक्खोहविहीणो परिणामो अप्पणो हु समो ॥ <-- [१/७] इति । अनुपचरितव्यवहारनयेन असदारम्भविनिवृत्तिपरिणामस्य चारित्रत्वम् । उपचरितव्यवहारनयेन तु सत्प्रवृत्तिरूपं चारित्रममिति विवेकः । व्यवहारनयसम्मतोभयविधचारित्रं तु तत्र तत्र प्रसिद्धमेव । तदुक्तं --> असुहादो विणिवित्ती, सुहे पवित्ती य जाण चारित्तं । वद-समिदि-गुत्तिरूवं, ववहारनया दु जिणभणियं ॥ <-- [ ] इति । ततश्च धूमदर्शनादनलानुमितिवत् व्युत्पन्नैः सदनुष्ठानोपलम्भात्तद्धेतिः असदारम्भनिवृत्तिमदात्मपरिणतिविशेषस्वरूपं चारित्रमनुमीयत एव, सदालय-विहार-समित्यादेस्तथैवोपयोगिताया सिद्धान्तप्रसिद्धेरिति विभावनीयम् ॥१/७॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> सुपरिशुद्धात् आन्तरपरिणामत इदं नियमात् परिशुद्धम् । अतोऽन्यस्मादपि [जायमानं]

અટકવા સ્વરૂપ નિવૃત્તિથી વિશિષ્ટ અહિંસાદિસ્વરૂપ જાણવું [શાસ્ત્રમાં] સદનુષ્ઠાન ચારિત્ર કહેવાય છે, તે કાર્યમાં કારણના ઉપચારથી જાણવું. અર્થાત્ આંતરપરિણામસ્વરૂપ ભાવચારિત્રાત્મક કારણથી ઉત્પન્ન થવાના લીધે સદનુષ્ઠાનસ્વરૂપ કાર્યમાં આંતરચારિત્રપરિણામસ્વરૂપ કારણનો આરોપ કરવા દ્વારા સદનુષ્ઠાન ચારિત્ર કહેવાય છે. [૧/૭]

**વિશેષાર્થ** - તાત્ત્વિક ચારિત્ર આશ્રવવિરતિસ્વરૂપ છે, પાપનિવૃત્તિસ્વરૂપ છે, કે જે આંતર પરિણામવિશેષાત્મક છે. માટે પાંચેય મહાવ્રત નિવૃત્તિસ્વરૂપ જ મુખ્યતયા અભિમત છે. અંદર ભાવ ચારિત્ર પ્રગટ થયું હોય તો અવશ્ય તેના જીવનમાં સદાચાર-સદનુષ્ઠાન જ હોય, અસત્ આરંભ-સમારંભ વગેરે ના હોય. આનો અર્થ એ થયો કે સદનુષ્ઠાન એ તાત્ત્વિક ચારિત્રનું કાર્ય છે. આંતરવિશુદ્ધપરિણામસ્વરૂપ ચારિત્ર ચર્મચક્ષુથી દેખી ન શકાય. તેથી વ્યવહારથી ભાવચારિત્રના કાર્યસ્વરૂપ સદનુષ્ઠાનને પણ ચારિત્ર જ કહેવાય છે. મતલબ કે વસ્તુતઃ સદનુષ્ઠાન એ ચારિત્ર નથી પરંતુ ચારિત્રનું કાર્ય છે. ચારિત્રનું કાર્ય હોવાના લીધે સદનુષ્ઠાનમાં ચારિત્રનો ઉપચાર = આરોપ થાય છે. જેમ કે માંગલિક-મંગલદ્રવ્ય તરીકે દહીંની આવશ્યકતા હોય ત્યારે દહીંના કાર્ય લચ્છીને કોઈ દહીં કહે તો ત્યાં જેમ કાર્યસ્વરૂપ લચ્છીમાં કારણીભૂત દહીંનો ઉપચાર થયો-એમ જણાય છે. તેમ સદનુષ્ઠાનના કારણીભૂત આરંભનિવૃત્તિરૂપ ચારિત્રનો સદનુષ્ઠાનમાં વ્યવહારથી આરોપ = ઉપચાર થયો જાણવો. શુદ્ધ નિશ્ચય નયથી ચારિત્ર નિજગુણસ્થિરતાસ્વરૂપ છે. શુદ્ધ વ્યવહાર નયથી ચારિત્ર અસત્આરંભની નિવૃત્તિવાળું છે. ઉપચરિત વ્યવહાર નયથી ચારિત્ર સદનુષ્ઠાનસ્વરૂપ = વિહિતપ્રવૃત્તિસ્વરૂપ છે. આ વિષયવિભાગ ધ્યાનમાં રાખવો. નવપદસ્તવનમાં પણ શ્રીપદ્મવિજયજી મહારાજે આ વાતને જણાવતા કહેલ છે કે 'પ્રવૃત્તિને નિવૃત્તિભેદે, ચારિત્ર છે વ્યવહારે જી, નિજગુણસ્થિરતા ચરણ તે પ્રણમો, નિશ્ચય શુદ્ધ પ્રકાર.' [૧/૭]

પ્રસ્તુત સદનુષ્ઠાન શુદ્ધ અને અશુદ્ધ - આ રીતે બે પ્રકારનું છે. આ વાતને જણાવતા મૂલકાર શ્રીહરિભદ્રસૂરિજી મહારાજ કહે છે કે —

**परिशुद्धमिद नियमादान्तरपरिणामतः सुपरिशुद्धात् । अन्यदतोऽन्यस्मादपि बुधविज्ञेय त्वचारुतया ॥१/८॥**

**परिशुद्ध** = सर्वथा शुद्ध **इद** = सदनुष्ठान **नियमात् आन्तरपरिणामत** = चारित्रमोहक्षयोपशमजन्यात्, **सुष्ठु** = सम्यक्त्वज्ञानमूलत्वेन **परिशुद्धात् । अन्यदिति** अपरिशुद्ध, **अत** = अस्मात् आन्तरपरिणामात् योऽन्य कश्चिद्धेतु लाभ-पूजा-ख्यात्यादि, 'तत एतदपीतरतुल्यत्वेनैव प्रतीयते, तत्राह-**बुधविज्ञेय तु** = तत्त्वविद्भिरेव विज्ञेय **अचारुतया** = असुन्दरत्वेन । त एव हि क्षीरनीरविवेचका नान्ये इति ॥१/८॥

**कल्याणकन्दली**

अन्यत् अचारुतया बुधविज्ञेय तु ॥१/८॥

**इद** = **सदनुष्ठान** प्रकृते विहितपञ्चाचारस्वरूप मुख्यतो वा यथोक्तचारित्राचारलक्षणमवगन्तव्यम्, चारित्राधिकारात् । सुष्ठु इति । यद्यपि ज्ञानस्य प्रकाशव्यापारे विश्राम सम्यक्त्वस्य च तत्त्वरुचावेव पर्यवसान तथापि प्रथम जानाति तत उत्पन्नरुचि सम्यक् प्रवर्तते निवर्तते वेति नियमात् चारित्रमोहक्षयोपशमजन्यस्याऽऽन्तरपरिणामस्वरूपचारित्रस्य **सम्यक्त्व-ज्ञानमूलत्वेन** एव सुपरिशुद्धत्वोक्ति. सङ्गच्छते । तदुक्त मूलकारैरेव **उपदेशपदे** —> जाणइ उप्पण्णरूई जइ, ता दोसा नियत्तई सम्म <— [उ प. ५१२] इति । प्रयोगस्त्वेव - विप्रतिपन्न सदनुष्ठानलक्षण चारित्र नियमेन सर्वथा शुद्ध, सम्यग्ज्ञानसम्यक्त्वमूलकपरिशुद्धिपरिकलित-चारित्रमोहक्षयोपशमजन्यत्वात्, यन्नैव तन्नैवमिति व्यतिरेकी, यद्वा तदुत्तरचारित्रपरिणामान्तरवदित्यन्वयी । **एतेन** —> 'चेष्टा द्रव्यक्रिया तुच्छा' इति वचनात्सदनुष्ठानत्वावच्छिन्नस्य परिशुद्धत्वाऽयोग <— इत्येकान्तो **निरस्तः** । इत्थमेव —> 'जो किर जयणापुव्वो वावारो सो न झाणपडिवक्खो । सो चेव होइ झाण जुगव मण-वयण-कायाण ॥ <— [अ प गा १६] इति **अध्यात्ममतपरीक्षावचनोपपत्ते.** ।

**लाभ-पूजा-ख्यात्यादिः** = स्वर्गादि-मनोज्ञान्नपानवस्त्रपात्रशिष्यादिप्राप्तिलक्षणलाभ-सत्कारसन्मानादिप्राप्तिलक्षणपूजा-यश - कीर्त्तिस्वरूपख्यातिप्रभृतिप्राप्ति **ततः** = **अन्यस्मात् अपि** सदनुष्ठान प्रवर्तते । अपिशब्दो कार्यसामान्ये स्वातन्त्र्येणाऽन्यहेतु-समुच्चयार्थमवगन्तव्य· । ततश्च सदनुष्ठान चारित्रपरिणामान्य-लाभपूजादितोऽपि भवति । लाभ-पूजादिप्राप्तिकामनाजन्य चारित्रा-चारात्मक सदनुष्ठानमपरिशुद्ध भवतीति वाक्यभेद· कार्य । न तु 'अन्यत् = अपरिशुद्ध **अन्यस्मादपि** = लाभ-पूजा-ख्यात्याद्यभिलाषादपि भवती'त्यर्थ. कार्य., अपरिशुद्धस्याऽन्यस्मादेव जन्यत्वेन तत्र चारित्रमोहक्षयोपशमस्याऽनपेक्षणात् । न च बाह्यवेशमात्रान्निर्जराऽवाप्ति, अन्तरङ्गाऽशुभाध्यवसायेन बन्धजनकेन तदुपक्षयात् । तदुक्त **धर्मबिन्दौ** —> अशुभपरिणाम एव हि प्रधान बन्धकारण, तदङ्गतया तु बाह्यमिति <— [७/३०] इति । स्वर्गलाभादिप्रबलकामनायाश्चारित्रमालिन्याऽऽधायकत्वेन यत्पेक्षयाऽपरिशुद्धाशयत्वात्तज्जन्ये चारित्राचारेऽपरिशुद्धत्वोक्तिरत्र भावचारित्राऽपेक्षयाऽवगन्तव्या । यथासम्भवमेतस्य विषाद्यनुष्ठानेऽ-न्तर्भाव कर्तव्य, परिशुद्धस्य च तद्धेत्वनुष्ठानादौ, एकस्याऽप्यनुष्ठानस्य कर्तृभेदेन सामग्रीभेदेन वा भेदात् । तदुक्त मूलकारैरेव **योगबिन्दौ** —> एकमेव ह्यनुष्ठान कर्तृभेदेन भिद्यतेऽसरुजेतरभेदेन भोजनादिगत यथा ॥ इत्थञ्चैतद्यत प्रोक्त सामान्येनैव पञ्चधा । विषादिकमनुष्ठान विचारेऽत्रैव योगिभि ॥ विष गरोऽननुष्ठान तद्धेतुरमृत परम् ।<—[यो बि.१५३/१५४/१५५] इत्यादि ।

अथापरिशुद्धस्य विषानुष्ठानाद्यन्तर्भावे सदनुष्ठानत्वाऽयोग इति **चेत् ? सत्यम्,** परमार्थत. सदनुष्ठानत्वासम्भवेऽपि व्यवहारत सिद्धान्तोक्तविध्यादिपरिकलितत्वात् तीर्थोच्छेदादिपरिहारनिर्वाहकत्वादितो वैतस्य सदनुष्ठानत्वोक्तिरविरुद्धैव । **न च** परिशुद्धा-परिशुद्धयो. सदनुष्ठानयो बहिस्तुल्यरूपत्वे कैरपरिशुद्धत्वावगम परिशुद्धव्यावृत्ततया कर्तु शक्येतेति **शङ्कनीयम्,** यत· एत-दपरिशुद्धानुष्ठान **तत्त्वविद्भिरेव विज्ञेय अचारुतया** = असुन्दरत्वप्रकारक-प्रमाविषयीभूत कर्तु शक्यते इत्यर्थ कार्य·; न तु

## ❀ શુદ્ધ અને અશુદ્ધ અનુષ્ઠાનને કેવી રીતે જાણવા ? ❀

<u>**ગાથાર્થ**</u> :- સુપરિશુદ્ધ એવા આતર પરિણામથી જન્ય આ સદનુષ્ઠાન નિયમા સુપરિશુદ્ધ [જાણવુ ] આતરપરિણામથી અન્ય એવા હેતુથી જન્ય સદનુષ્ઠાન અન્ય = અપરિશુદ્ધ હોય છે તેને પડિતો જ અસુદરરૂપે જાણી શકે છે [૧/૮]

<u>**ટીકાર્થ**</u> ·- ચારિત્રમોહનીય કર્મના ક્ષયોપશમથી જન્ય જે આતરપરિણામ સમ્યકત્વ અને જ્ઞાનથી સપાદ્ય હોવાના લીધે સારી રીતે પરિશુદ્ધ બનેલ છે તેનાથી જન્ય સદનુષ્ઠાન નિયમા સર્વથા શુદ્ધ હોય છે ચારિત્રમોહનીયક્ષયોપશમજન્ય સુપરિશુદ્ધ આતર પરિણામ સિવાય [સ્વર્ગ-શિષ્યાદિના] લાભ, સન્માન-સત્કારસ્વરૂપ પૂજા, પ્રસિદ્ધિ [ખ્યાતિ] વગેરે કોઈક હેતુથી પણ સદનુષ્ઠાન ઉત્પન્ન થઈ શકે છે, કે જે બહારથી સુપરિશુદ્ધ સદનુષ્ઠાન જેવુ જ દેખાતુ હોય પરતુ તે અપરિશુદ્ધ હોય છે તત્ત્વના જાણનારાઓ જ તેને અસુદરરૂપે જાણી શકે છે બાલ કે મધ્યમ માણસનુ કોઈ ગજુ નહિ, કારણ કે [illegible]વો જ હસની જેમ દૂધ અને

१ मुद्रितप्रतो 'तदपि' इत्यशुद्ध पाठ, 'तस्मादपी'ति प्रत्यन्तरे ।

यथा बुधैरिदमशुद्धं ज्ञायते तथाऽऽह —> गुर्वित्यादि ।

गुरुदोषारम्भितया तेष्वकरणयत्नतो निपुणधीभिः । सन्निन्दादेश्च तथा ज्ञायते एतन्नियोगेन ॥१/९॥

गुरून् दोषान् प्रवचनोपघातादीनारब्धु शील यस्य स तथा तत्त(द्भावस्त)या यो लघुषु सूक्ष्मेषु दोषेष्वकरणयत्न = परिहारादर, तस्मात्, निपुणधीभि = कुशलबुद्धिभि ।

कल्याणकन्दली

तादृश प्रमाविपर्याभूत कर्तु युज्यत इति, तदन्येषा विशिष्टविवेकशून्यतया तादृशबोधजननेऽसमर्थत्वेन तद्व्यवच्छेदस्याऽप्रसक्ततया एवकारव्यर्थत्वापत्ते , उत्तमस्य तु तादृशप्रमात्मकबोधस्यानपलपनीयत्वात् । न च काकतालीयन्यायेन बालादीना तत्राऽसुन्दरत्व-प्रकारकप्रमाया सम्भव इति शङ्कनीयम्, विध्यादिपरिकलितानुष्ठाने यथाकथञ्चिदपि बालादीनामचारुत्वप्रमाया अयोगात्, भवाभिनन्दिना तत्राऽचारुत्वधीर्महामोहनिबन्धनैवेति धर्मपरीक्षकचिन्ताया तद्बहिर्भाव एवेति दिक् ॥१/८॥

यथा अम्लद्रव्यस्थानाभिषिक्तविशिष्टतरविवेकशक्तिसमेतचञ्चुस्थानीयविज्ञानशक्तिपरिकलितै हसकल्पै परिशुद्धसमक्षीराऽपरि-शुद्धतुल्यनीरप्रतियोगिकभेदग्रहात्मकविवेचनप्रवणै बुधैः 'इदमशुद्धमि'ति तदन्याऽपोहेन ज्ञायते तथाह - गुर्वित्यादि । मूलग्रन्थे दण्डान्वयस्त्वेवम् —> गुरुदोषारम्भितया तेषु अकरणयत्नत तथा सन्निन्दादेश्च एतत् नियोगेन निपुणधीभि ज्ञायते ॥१/९॥ तया = प्रवचनापभ्राजना-बोधिदुर्लभादिगुरुदोषारम्भितया यः सूक्ष्मेषु समितिभङ्गादिषु दोषेषु परिहारादरः = वर्जनापरिणामो-पयोगः, तस्मात् = तमाश्रित्य, 'अपरिशुद्धानुष्ठान' अवश्यन्तया ज्ञायते इत्यत्राऽप्यन्वीयते । शासनमालिन्यादे. घोरकर्म-निमित्तत्वात् । तदुक्त मूलकारैरेव अष्टकप्रकरणे —> य शासनस्य मालिन्येऽनाभोगेनापि वर्तते । स तन्मिथ्यात्वहेतुत्वादन्येषा प्राणिना ध्रुवम् ॥ बध्नात्यपि तदेवाल पर ससारकारणम् । विपाकदारुण घोर सर्वानर्थविवर्धनम् ॥ [२३/१-२] सम्यग्ज्ञानदर्शन-मूलकान्तरचारित्रमोहक्षयोपशमदशाया प्रवचनापभ्राजनादिगुरुतरदोषारम्भस्वभावाऽयोगात् । न चान्तरचारित्रपरिणामसत्त्वेऽपि ज्ञाना-वरणाद्युदयात्तादृशगुरुतरदोषारम्भित्वमपि स्यादिति शङ्कनीयम्, आन्तरचारित्रपरिणामस्य प्रवचनापभ्राजनादिगुरुतरदोष-परिहार-

પાણીનો ભેદ કરી શકે છે, બીજા કોઈ નહિ [૧/૮]

**વિશેષાર્થ** :- સમ્યગ્દર્શન અને સમ્યક્ જ્ઞાન જ્યારે બળવાન બને છે ત્યારે તેના સહકારથી ચારિત્ર મોહનીય કર્મનો ક્ષયોપશમ થાય છે તે વિશુદ્ધ આતર પરિણામસ્વરૂપ હોય છે તેનાથી જે સદનુષ્ઠાન ઉત્પન્ન થાય તે નિયમા સંપૂર્ણતયા શુદ્ધ જ હોય છે કારણ કે તેમા અશુદ્ધિ આવવાનુ કોઈ કારણ નથી જેની સામગ્રી વિશુદ્ધ હોય તે કાર્ય પણ સપૂર્ણ શુદ્ધ જ હોય અનાજ, ઘી, ગોળ વગેરે વિશુદ્ધ હોય તો તેનાથી બનનાર મિષ્ટાન્ન લેશ પણ અશુદ્ધ ભેળ-સેળવાળુ ન જ હોઈ શકે તેમ સમ્યગ્ દર્શન-જ્ઞાનમૂલક ચારિત્રપરિણામથી જે સદનુષ્ઠાન ઉત્પન્ન થાય તેને આશિક રીતે પણ અશુદ્ધ બનવાને કોઈ જ અવકાશ નથી રહેતો

પરતુ સ્વર્ગાદિની પ્રાપ્તિની ઈચ્છાથી કે બાહ્ય સત્કાર-સન્માન મેળવવાના ઉદ્દેશથી અથવા યશ-કીર્તિ-નામનાની કામનાથી અભવ્ય, દૂરભવ્ય, અચરમાવર્તી વગેરે જીવો પણ નિર્મળ રીતે સયમચર્યાનુ પાલન કરતા હોય છે. અધ્યાત્મદષ્ટિએ સાધુની જે ભૂમિકા હોવી જોઈએ તે અપેક્ષાએ ચારિત્રના મુખ્ય ફળ તરીકે સ્વર્ગાદિની કામના કે માન-સન્માન આદિને મેળવવાની વૃત્તિ એ મલિન આશય કહેવાય આવા અશુદ્ધ આશયથી પ્રયુક્ત હોવાના લીધે વસ્તુત તે ચારિત્રાચાર પણ અશુદ્ધ જ હોય છે પરતુ બાહ્ય દૃષ્ટિએ તો તેવા ચારિત્રાચાર-સયમચર્યા પણ વિશુદ્ધ ચારિત્રાચાર-સયમચર્યાતુલ્ય ભાસે છે સાધુજીવનના શુદ્ધ આચાર અને અશુદ્ધ આચારના બાહ્ય દેખાવમા કોઈ પણ ફરક ઉપલક દૃષ્ટિએ જણાતો ન હોવાથી બાલ જીવ કે મધ્યમ જીવ તે બે વચ્ચેની ભેદરેખાને ઓળખી શકતા નથી તે ભેદરેખાને જાણવા યોગ્ય સામર્થ્ય તેમની પાસે નથી પ્રકૃષ્ટ વિકસિત વિવેકદૃષ્ટિ હોવાના લીધે પડિત જીવો જ તે ભેદરેખાને પારખી શકે જેમ દૂધ અને પાણી પરસ્પર ભળી ગયા હોય ત્યારે પાણીને છોડી કેવળ દૂધની ઉપલબ્ધિ માટે હસ જ સમર્થ હોય છે, કારણ કે તેની ચાચમા ખટાશ હોય છે બીજા પશુ, પક્ષી વગેરે મિશ્ર થયેલા દૂધ અને પાણીને સ્વયં છૂટા પાડી ન શકે તે જ રીતે શુદ્ધ ચારિત્રાચાર અને અશુદ્ધ ચારિત્રાચાર વચ્ચેની ભેદરેખાને જાણવા માટે કેવળ બુધ-પડિત જીવો જ [જેનુ સ્વરૂપ દ્વિતીય-તૃતીય ગાથામા આશિક રીતે જણાવેલ છે] અધિકારી હોય છે, સમર્થ હોય છે, કેમ કે તેમની દૃષ્ટિમા જ પ્રકૃષ્ટ વિવેકશક્તિ રહેલી હોય છે X-Ray જેવી વેધક વિવેકદૃષ્ટિના પ્રભાવે જ પડિત જીવો બાહ્યથી સમાન દેખાતા શુદ્ધ ચારિત્રાનુષ્ઠાન અને અશુદ્ધ ચારિત્રાનુષ્ઠાનના બાહ્ય સ્વરૂપને ઓળગી તેના આતર સ્વરૂપવિશેષને પારખી શકે છે બાહ્ય ચારિત્રાનુષ્ઠાનને જ ધર્મનુ મુખ્ય માપદડ માનવાના લીધે તાત્ત્વિક ધર્મ-ધર્મીનો નિર્ણય કરવામા થાપ ખાઈ શકાય તેવી શક્યતા રહેલી હોવાથી તેવા ધર્મપરીક્ષકને મધ્યમબુદ્ધિ તરીકે જણાવેલ છે, નહિ કે પડિત જીવ તરીકે- આ નિષ્કર્ષ છે [૧/૮]

પડિત જીવો સદનુષ્ઠાનને = ચારિત્રાચારને જે રીતે અશુદ્ધ રૂપે જાણી શકે છે તે રીતને બતાવતા મૂલકારશ્રી ફરમાવે છે કે —

**ગાથાર્થ** :- મોટા દોષોને આચરવા દ્વારા નાના દોષને ન[illegible]વાના[illegible] તથા સજ્જનોની નિદા વગેરેથી અપરિશુદ્ધ અનુષ્ઠાન નિયમા નિપુણબુદ્ધિવાળા વડે જાણી શકાય છે

**ટીકાર્થ** :- શાસનહીલના વગેરે મોટા દોષોને આચર[illegible] ક્ષ્મ દોષોને છોડવાની તત્પરતાને આશ્રયીને

चैतदेव = वचनमेव अस्य = धर्मस्य ॥२/१२॥

कल्याणकन्दली

ततश्च सर्वत्र जिनाज्ञाऽबाधयैव प्रवर्त्तितव्यमित्युपदेश । यथोक्त --> आणाकरणसार खु अरिहताण दसण <-- [ ] । तदुक्त वीतरागस्तोत्रेऽपि --> आज्ञाऽऽराद्धा विराद्धा च शिवाय च भवाय च <-- [वी स्तो.१९/४] इति । अयमैदम्पर्यार्थो बुधस्य कथनीय । तदुक्त उपदेशरहस्येऽपि --> अइदपज्जत्थो पुण मोक्खग होइ आगमाबाहा <-- [उ रह १७१] इति। आज्ञापालने दोषसम्पत्तावपि निर्दोष. तदपालने च दोषाप्राप्तावपि सदोष इति । तदुक्त निशीथभाष्ये --> ण य सव्वो वि पमत्तो आवज्जति तध वि सो भवे वधओ । जह अप्पमादसहिओ आवण्णो वि अवहओ उ ॥९२॥ पचसमितस्स मुणिणो आसज्ज विराहणा जदि हवेज्जा । रीयतस्स गुणवओ सुव्वत्तमबधओ सो उ <--॥१०३॥ वक्ष्यमाणरीत्या [पृ ५४] सापरायिककर्मापेक्षयाऽबन्धकत्वमवसेयम् ।

तदुक्त ओघनिर्युक्तौ --> आया चेव अहिसा आया हिसत्ति निच्छओ एसो । जो होइ अप्पमत्तो अहिसओ हिसओ इयरो <-- ॥७५५॥ तदुक्त उपदेशपदेऽपि --> ता आणाणुगय ज त बुहेण सेवियव्व तु <-- [९१०] इति । अत एव चैत्यवासियतीना चैत्यद्रव्यवृद्धिप्रतिषेधमुपदिश्याऽपि कुवलयप्रभाचार्येण जिननामकर्म बद्धम् । तदुक्त महानिशीथे --> भणिय तेण महाणुभागेण गोयमा ! जहा "भो भो पियवए ! जइवि जिणालए तहवि सावज्जमिण णाह वायामित्तेणवि एय आयरिज्जा।" एव च समयसार पर तत्त जहट्ठिय णीसक भणमाणेण तेसि मिच्छादिट्ठीलिगीण साहुवेसधारीण मज्झे गोयमा ! आसकलिय तित्थयरणामकम्मगोय तेण कुवलयप्पभेण एगभवावसेसीकओ भवोयही <-- [म नि २८] इति । एवञ्च विधाने निषेधसवेधो निषेधेऽपि च विधिसवेधो बुधस्य दर्शनीय । तदुक्त निशीथभाष्ये बृहत्कल्पभाष्ये च --> उस्सग्गेण ण भणिआणि जाणि अववायओ अ ताणि भवे। कारणजाण्ण मुणी सव्वाणि वि जाणियव्वाणि ॥ उस्सग्गेण णिसिद्धाइ जाइ दव्वाइ सथरे मुणिणो । कारणजाए जाए सव्वाणि वि ताणि कप्पति ॥ <-- [बृ क भा ३३२६/३३२७ नि भा ५२४४/५२४५] अत एव आचाराङ्गे --> जे आसवा ते परिस्सवा जे परिस्सवा ते आसवा <-- [१/४/६] इत्युक्तम् । तदुक्त चरकसहिताया --> उत्पद्यते हि साऽवस्था देशकालबल प्रति । यस्यामकार्य कार्य स्यात् कर्म कार्य च वर्जितम् ॥ <-- [९/३/२६] एवमेव कल्प्याऽकल्प्येऽ-प्येकान्तो नास्ति । तदुक्त प्रशमरतौ --> किञ्चिच्छुद्ध कल्प्यमकल्प्य स्यात्, स्यादकल्प्यमपि कल्प्यम् । पिण्ड शय्या वस्त्र पात्र वा भेषजाद्य वा ॥ देश काल पुरुषमवस्थामुपयोगशुद्धिपरिणामान् । प्रसमीक्ष्य भवति कल्प्यम्, नैकान्तात् कल्पते कल्प्यम् ॥ <-- [प्र र १४६/१४७] इति । न हि केवलादेवोपभोगादकल्प्यस्य कर्मबन्धो देशित समये किन्तु स्वपरिणामात् --> 'इय परिणामा बधे' <-- [२२९] इति श्रावकप्रज्ञप्तिवचनात् । तदुक्त प्रवचनसारे --> परिणामादो बधो, परिणामो राग-दोस-मोहजुदो <-- [प्र.सा २/८८] इति । --> परमरहस्समिसीण समत्तगणिपिडगझरियसाराण । परिणामिय पमाण निच्छयमवलबमा-णाण ॥ <-- [ओ नि १०९८] इति ओघनिर्युक्तिवचनमप्यनुसन्धेयम् । एव तस्याऽऽचारोपदेशेऽपि तात्पर्यार्थशुद्धि सर्वत्र प्रदर्शनीया गुरुणा, यथा ईर्यासमितिमधिकृत्य --> उच्चालियमि पाए इरियासमियस्स सकमणट्ठाए । वावज्जिज्ज कुलिगी मरिज्ज त जोगमासज्ज ॥२२३॥ न य तस्स तन्निमित्तो बधो सुहुमो वि देसिओ समए । जम्हा सो अपमत्तो स उ पमाउत्ति निद्दिट्ठा ॥२२४॥ <-- इति वस्तुलक्षिनिश्चयनयपर श्रावकप्रज्ञप्तिवचन, --> ज न हु भणिओ बधो जीवस्स वहमि वि समिइ-गुत्ताण । भावो तत्थ पमाण न पमाण कायवावारो ॥१८॥ <-- इति भावकुलकवचन, --> अविधायाऽपि हिसा हिसाफलभाजन भवत्येक । कृत्वाऽप्यपरो हिसा हिसाफलभाजन न स्यात् ॥[१] <-- इति हिसाऽष्टकवचन, --> जियदु व मरदु व जीवो अजदाचारस्स निच्छओ हिसा । पयदस्स नत्थि बधो हिसामित्तेण समिदस्स ॥ <-- [प्र सा.३/१७] इति प्रवचनसारवचन, --> अप्रादुर्भाव खलु रागादीना भवत्यहिसेति । तेषामेवोत्पत्तिर्हिसेति जिनागमस्य सक्षेप ॥४४॥ <-- इति आत्मलक्षि-निश्चयनयप्रतिपादनप्रवण पुरुषार्थसिद्ध्युपायवचनम् । तथा तादृशमेव --> रागादीणमणुप्पाओ अहिसकत्त त्ति देसिय समए । तेसि च उप्पत्ती, हिसेत्ति जिणेहि णिद्दिट्ठा ॥ <-- [ ] इति । एव --> जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्स ॥ <-- [ओ.नि ७६०] [पि नि ६७१] इति

જ છે [૨/૧૨]

## જિનાજ્ઞાવિરાધકના ઉગ્ર કષ્ટ પણ અધર્મ

**વિશેષાર્થ** - ધર્મના અને અધર્મના કેન્દ્રસ્થાનમા જિનાજ્ઞાની આરાધના અને વિરાધના રહેલી છે માટે ધર્મનો નિચોડ જિનવચન

कल्याणकन्दली

पिण्डनिर्युक्ति-प्रभृतिवचनानि कथनीयानि । ईर्यासमित्युपयुक्तस्य व्यवहारतो जीवविराधनासम्भवेऽपि साम्परायिकी क्रिया नाभिमता । तदुक्तं व्याख्याप्रज्ञप्तौ –> अणगारस्स णं भंते ! भावियप्पणो पुरओ जुगमायाए पेहाए रीयं रीयमाणस्स पायस्स अहे कुक्कुडपोए वा वट्टपोए वा कुलिंगच्छाए वा परियावज्जेज्जा, तस्स णं भंते ! किं इरियावहिया किरिया कज्जइ, संपराइया किरिया कज्जति ? गोयमा ! णो संपराइया किरिया कज्जइ, इरियावहिया किरिया कज्जइ <– [श १८ उद्दे ८] । बुधस्य नयभेदेन हिंसादि प्ररूपणीयम् । तथाहि ओघनिर्युक्तिवृत्त्यनुसारेण –> तत्र जीवेष्वजीवेषु हिंसा, 'जीवोऽनेन हिंसित , घटोऽनेन हिंसित: = विनाशित ' इति व्यवहारात्, सङ्ग्रह-व्यवहारयो: षट्सु जीवनिकायेषु हिंसा । सङ्ग्रहश्चात्र देशग्राही द्रष्टव्य , सामान्यरूपस्य नैगमेऽन्तर्भावात् । व्यवहारेऽपि स्थूलविशेषग्राही, लोकव्यवहरणशीलश्च । लोको हि बाहुल्येन षट्सु जीवनिकायेष्वेव हिंसामिच्छति । ऋजुसूत्रश्च प्रत्येकं प्रत्येकं जीवे जीवे हिंसा पृथक् इच्छति । शब्द-समभिरूढैवम्भूताश्च नया आत्मैव हिंसेतीच्छन्तीत्यादि <– ।

एवं सर्वत्र सद्भावसारेण भाव्यं न तु मातृस्थानतो यत्किञ्चिदालम्बनीयमित्युपदेष्टव्यं बुधस्य । तदुक्तं निशीथभाष्य-बृहत्कल्पभाष्यादौ –> ण वि किंचि अणुण्णायं पडिसिद्धं वा वि जिणवरिंदेहिं । एसा तेसिं आणा कज्जे सच्चेण होअव्वं ॥ [नि.भा ५२४८/५३७१ बृ क भा ३३३०] <– इत्यादि । तदुक्तं पुष्पमालायामपि –> पडिसेहो अ अणुन्ना एगंतेण न वन्निया समए । एसा जिणाण आणा कज्जे सच्चेण होअव्वं ॥२४७॥ <– इति । तदुक्तं मूलकारैरेव श्रावकधर्मविधौ –> धम्मो आणाए पडिबद्धो <– [३] । तदुक्तं पञ्चाशकेऽपि –> आराहणाइ तीए पुण्णं, पावं विराहणाए उ । एयं धम्मरहस्सं, विण्णेयं बुद्धिमंतेहिं ॥७/३॥ <– इति । सम्बोधसप्ततिप्रकरणे श्रीरत्नशेखरसूरिभिरपि –> आणाइ तवो आणाइ संजमो तह य दाणमाणाए । आणारहिओ धम्मो पलालपूलव्व पडिहाइ ॥४०॥ <– इत्युक्तम् । श्रीनेमिचन्द्रेणापि षष्टिशतकप्रकरणे –> किंचपि धम्मकिच्चं पूयापमुहं जिणिंदआणाए । भूयमणुग्गहरहियं आणाभंगाओ दुहदाय ॥४५॥ आणारहियं कोहाइसंजुयं अप्पसंसणत्थं च । धम्मं सेवंताणं न य कित्ती नेव धम्मो य ॥५०॥ <– इत्युक्तम् । व्यवहारभाष्येऽपि –> इह लोगंमि य कित्ती परलोगे सोगती धुवा तेसिं । आणाए जिणिंदाणं जे ववहरंति ॥ <– [३/३०२] इत्यनेनाऽऽज्ञासापेक्षताया ऐहिक-पारलौकिकसत्फलसाधकतोपदर्शिता ।

एवं राग-द्वेषाद्यन्तरङ्गारिविजयपरतयैव सर्वादरेण प्रवर्तितव्यम्, न तु केवलं ज्ञाननिष्ठतया क्रियानिष्ठतया तपोनिष्ठतया गुरुकुलवासपरतया एकाकितया वेति बुधस्यैव कथनीयम्, तस्यैव विवेकप्रधानत्वेन धर्ममर्मज्ञत्वात्, धर्मस्यापि विवेकप्रधानत्वात्, यथोक्तं धर्मरत्नप्रकरणे –> धम्मो विवेगसारत्ति <– [२०] इति । तदुक्तं अध्यात्ममतपरीक्षादौ –> किं बहुणा जह जह रागद्दोसा लहुं विलिज्जंति । तह तह पयट्टियव्वं एसा आणा जिणिंदाणं ॥ <– [अ प १८३, उ रह २०१] इति । तदुक्तं वीतरागस्तोत्रेऽपि श्रीहेमसूरिभिः –> आश्रवो भवहेतु स्यात्, संवरो मोक्षकारणम् । इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम् ॥ <– [वी स्तो १९/६] इति । एवञ्च –> दोसा जेण निरुज्झंति, जेण खिज्जंति पुव्वकम्माइं । सो सो मुक्खोवाओ, रोगावत्थासु समणं व ॥ <– [नि भा ५२५० पु २४८] इत्यादिनिशीथभाष्य-पुष्पमालाप्रभृतिवचनानि बुधस्य कथनीयानि । तदुक्तं श्रीसिद्धसेनदिवाकरेणापि द्वात्रिंशिकाप्रकरणे –> येन दोषा निरुध्यन्ते ज्ञानेनाऽऽचरितेन वा । स सोऽभ्युपायस्तच्छान्तावनासक्तमवैद्यवत् ॥ <– [२०/६] इति । न च 'समणोवासगा बालपंडिया' [१७/२] इति व्याख्याप्रज्ञप्तिवचनाच्छ्रावकस्य मध्यमत्वनिर्णयान्न पण्डितत्वसम्भव इति वाच्यम्, विरत्यपेक्षया मध्यमत्वेऽपि परिणततत्त्वैदम्पर्यार्थावगमयोग्यत्वापेक्षया पण्डितत्वसम्भवात् । न चैवं श्रावकस्य सतः पण्डितस्य कथमित्थमपवादमार्गप्रदर्शनं युक्तमिति शङ्कनीयम्, अपेक्षितोत्सर्गापवादावगमे एवं भावश्रावकत्वसम्भवात्, तदुक्तं भावश्रावकलक्षणप्रदर्शनावसरे धर्मरत्नप्रकरणे –> सुत्ते अत्थे अ तहा उस्सग्गववायभावववहारे । जो कुसलत्तं पत्तो पवयणकुसलो तओ छद्धा ॥५२॥ उस्सग्गववायाणं विसयविभागं वियाणाइ <– [५३] इति । इत्थमेव तुङ्गिकाश्रावकवर्णनपरं –> लद्धट्ठा गहियट्ठा पुच्छियट्ठा अभिगयट्ठा विणिच्छियट्ठा <– [२/५/१०७] इति व्याख्याप्रज्ञप्तिसूत्रमपि सङ्गच्छते । विनिश्चितार्थत्वमैदम्पर्यार्थस्योपलम्भादिति तद्वृत्तौ व्यक्तम् । अत एव श्रावकस्य व्यवहारकुशलत्वं प्रवचनकुशलत्वञ्चोप-

જ છે જિનાજ્ઞાની વિરાધના કરીને માસક્ષમણ વગેરે ઉગ્ર તપશ્ચર્યા કરે કે ઉગ્રવિહારાદિ કરે તો પણ તે અધર્મનું જ ભાજન બને છે માટે સ્વમતિને પ્રધાન બનાવ્યા વિના શાસ્ત્રમતિ-જિનવચન જ સર્વત્ર યથાર્થ રીતે આગળ કરવા યોગ્ય છે [૨/૧૨]

**अथ** किमिति सकलानुष्ठानोपसर्जनीभावाऽऽपादनेन वचनस्यैव प्राधान्यं ख्याप्यते ? इत्याशङ्कायामाह -> 'यस्मादि'त्यादि ।

**यस्मात्प्रवर्त्तकं भुवि निवर्त्तकश्चान्तरात्मनो वचनम् । धर्मश्चैतत्संस्थो मौनीन्द्रश्चैतदिह परमम् ॥२/१३॥**

**यस्मात् प्रवर्त्तकं भुवि** = भव्यलोके स्वाध्यायादौ विधेये, **निवर्त्तकश्च** हिंसादेः **अन्तरात्मनः** = मनसो **वचनम्** । **धर्मश्च** प्रवृत्ति-निवृत्तिफलजननव्यापारीभूत एतस्मिन् वचने ज्ञापकतासम्बन्धेन सन्दिष्ट इति **एतत्संस्थः** । **मौनीन्द्रं** = मुनीन्द्रोक्ततेनाऽबाधितप्रामाण्यं **चैतत्** वचनं **इह** प्रक्रमे **परमं** = अनुष्ठानानुपजीविप्रामाण्यम् । तत इदमेव प्रधानमुद्घुष्यतेऽनुष्ठानादिकञ्चैतदुपजीवकत्वेनोपसर्जनीक्रियत इति भावः ॥२/१३॥

**कल्याणकन्दली**

पद्येते अभयकुमारवदिति विभावनीयम् ॥२/१२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> यस्मात् भुवि अन्तरात्मनः प्रवर्त्तकं निवर्त्तकं च वचनम् । धर्मश्च एतत्संस्थः, इह च परमं एतत् मौनीन्द्रम् ॥२/१३॥ इयं कारिका पञ्चाशकवृत्ति-धर्मरत्नप्रकरणवृत्त्यादौ [प.७/३ ध.गा.८० पृ.२४६] उद्धृता । स्वाध्यायादौ पारलौकिकफले सदनुष्ठाने = **विधेये मनसः प्रवर्तकं, हिंसादेः** निषिद्धात् **मनसो निवर्तकञ्च वचनं** = सदागमवचनम् । आचाराङ्गटीकायामपि -> तीर्थकृदादीनां वचनं हिताहितप्राप्तिपरिहारप्रवर्तकं <- (७/३/२०४-पृ २४८) इत्युक्तम् ।

**धर्मश्च प्रवृत्ति-निवृत्तिफलजननव्यापारीभूतः** = प्रवर्त्तन-निवर्त्तनयोः फले जननीये वचनद्वारीभूतः पुण्याद्यभिधानः । न हि साक्षादेव प्रवृत्त्यादेः सकाशात् व्यवहितकालं फलं सम्भवति किन्तु भावात्मकव्यापारविशेषद्वारैव । स च प्रकृते धर्मपदेनाभिहितः । न चैवमलसस्याऽपि वचनाद्विधेयार्थे प्रवृत्त्यापत्तिरिति शङ्कनीयम्, तत्तदर्थज्ञानानां तद्विषयकवीर्यान्तरायक्षयोपशमजनकत्वेनैव प्रवृत्तिहेतुत्वात्, अलसस्य विध्यर्थभानेऽपि आलस्यदोषप्रतिबन्धेन वीर्यान्तरायक्षयोपशमाऽनिष्पत्तेरप्रवृत्त्युपपत्तेः । इत्थमेव चाऽविरतसम्यग्दृष्ट्यादेः शक्यविरत्यादौ प्रवृत्त्यभावोपपत्तेरिति [अ स वि पृष्ठ ५२A श्लो ३वृ.] व्यक्तमुक्तं टीकाकृता अष्टसहस्रीतात्पर्यविवरणे । जिनवचनादेव विज्ञायते यदुत 'विहितप्रवृत्त्यादिजन्य प्रवृत्त्यादिफलजननव्यापारीभूतो धर्मो वर्तते' तज्जन्यत्वे सति तज्जन्यजनकत्वस्य व्यापारलक्षणत्वात् । अतः धर्मो **वचने ज्ञापकतासम्बन्धेन** = स्वनिष्ठज्ञाप्यतानिरूपितज्ञापकतासम्बन्धेन **सन्दिष्टः** । स्वपदेन अतीन्द्रियः पुण्यादिस्वरूपो धर्मो ग्राह्य इति ध्येयम् ।

**मुनीन्द्रोक्तेन** = सर्वज्ञोक्तत्वेन **अबाधितप्रामाण्यं** = प्रामाण्यव्याघातशून्यं **चैतत्** = **वचनं इह प्रक्रमे परमम्** । तदुक्तं प्रशमरतौ -> शासनसामर्थ्येन, सन्त्राणबलेन चाऽनवद्येन । युक्तं यत् तच्छास्त्रं **तच्चैतत् सर्वविद्वचनम्** ॥१८८॥ <- इति । इदमेवाऽभिप्रेत्य टीकाकृताऽपि ज्ञानसारे -> शासनात् त्राणशक्तेश्च बुधैः शास्त्रं निरुच्यते । वचनं वीतरागस्य तत्तु नाऽन्यस्य कस्यचित् ॥ <- [ज्ञा सा २४/३] इति । प्रकृते वचनगतं पारम्यञ्च परतीर्थिकवचनाद्यपेक्षयाऽतिशयस्वरूपं प्रमाणान्तरानुपजीविप्रामाण्यलक्षणं वा तथापि उपक्रमोपसंहारविरोधपरिहाराय 'परमं = अनुष्ठानाऽनुपजीविप्रामाण्य'मिति टीकाकृता व्याख्यातं, सदनुष्ठानानवलम्बिप्रामाण्यकमित्यर्थः । अनुष्ठानं जिनवचनस्योपजीवकं जिनवचनञ्चानुष्ठानस्योजीव्यम् । उपजीव्यस्योपजीवकापेक्षया बलवत्त्वात् इदं = जिनवचनं एव सदनुष्ठानापेक्षया **प्रधानं** = अनुपसर्जनीभूतमिति **उद्घुष्यते, अनुष्ठानादिकञ्च एतदुपजीवकत्वेन** = जिनवचनावलम्बित्वेन **उपसर्जनीक्रियते** = गौणभावमापाद्यत इति भावः । उपजीवतीति उपजीवकः, उपजीवयतीति

-> દરેક અનુષ્ઠાનને ગૌણ કરીને શા માટે જિનવચનની જ પ્રધાનતા પંડિત જીવને જણાવાય છે ? <- એવી શંકાનું સમાધાન કરતા મૂલકારશ્રી ફરમાવે છે કે ->

<u>ગાથાર્થ</u> - [જિનવચન સર્વપ્રધાન છે,] કારણ કે લોકમાં અંતરાત્માનું પ્રવર્તક અને નિવર્તક વચન જ છે તથા ધર્મ વચનમાં રહેલો છે. પ્રસ્તુતમાં મૌનીન્દ્ર = સર્વજ્ઞોક્ત વચન [જ] પ્રકૃષ્ટ વચન છે. [૨/૧૩]

## ❀ આગમનું વચન જ પ્રવર્તક-નિવર્તક ❀

<u>ટીકાર્થ</u> - ભવ્યલોકમાં સ્વાધ્યાય વગેરે કર્તવ્ય યોગોમાં મનનું પ્રવર્તક તથા હિંસાદિ નિષેધ્ય વ્યાપારથી મનનું નિવર્તક છે આગમનું વચન. પ્રવૃત્તિ અને નિવૃત્તિના ફળને ઉત્પન્ન કરવામાં ધર્મ વ્યાપાર = દ્વાર બને છે. 'तज्जन्यत्वे सति तज्जन्यजनकं द्वारं' આ વચનાનુસાર વિહિત પ્રવૃત્તિ વગેરે દ્વારા ધર્મ ઉત્પન્ન થાય છે. તેમ જ તે વચનજન્ય પ્રવૃત્તિ-નિવૃત્તિના ફળને પણ ઉત્પન્ન કરે છે. તે ધર્મ પ્રસ્તુતમાં પુણ્ય વગેરે સ્વરૂપ લેવાનો છે. તેનું જ્ઞાપક વચન હોવાથી વચનમાં તેની જ્ઞાપકતા રહેશે. માટે ધર્મ સ્વજ્ઞાપકતા સંબંધથી વચનમાં રહેલો છે-એમ જણાવેલ છે. પ્રસ્તુતમાં મુનીન્દ્રે = સર્વજ્ઞે કહેલ હોવાથી અબાધિત પ્રામાણ્યવાળુ વચન અનુષ્ઠાનઅવલંબિત ન હોવાથી અનુષ્ઠાન કરતા પરમ = પ્રધાન છે. તેથી 'જિનેન્દ્રવચન જ પ્રધાન છે' એવું કહેવાય છે. મતલબ કે જિનવચનની અપેક્ષાએ અનુષ્ઠાન

वचनस्यैव माहात्म्यमभिष्टौति' --> अस्मिन्नि'त्यादि ।

अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति । हृदयस्थिते च तस्मिन्नियमात्सर्वार्थसंसिद्धिः ॥२/१४॥

**अस्मिन्** = वचने **हृदयस्थे सति हृदयस्थ** स्मृतिद्वारा **तत्त्वतो मुनीन्द्र**, स्वतन्त्रवक्तृत्वरूप-तत्सम्बन्धशालित्वात्, **इति** 'पादसमाप्तौ । **हृदयस्थिते च तस्मिन्** = मुनीन्द्रे **नियमात्** = निश्चयेन **सर्वार्थसंपत्ति** भवति

कल्याणकन्दली

उपजीव्य इति व्युत्पत्त्या उपजीव्याऽपेक्षया उपजीवकस्य दुर्बलत्वात् सदनुष्ठानमपुरस्कृत्य जिनवचनमेव प्राधान्यमर्हतीति तात्पर्यम् । अत एव दर्शनप्राभृते कुन्दकुन्दस्वामिनापि --> जिणवयणमोसहमिण विसयसुहविरेयण अमिदभूय । जरमरणवाहिहरण खयकरण सव्वदुक्खाण ॥१७॥ <-- इत्येवमनुष्ठानमपहाय जिनवचनस्यौषधत्वामृतत्वादिकमाविष्कृतम् ॥२/१३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> अस्मिन् हृदयस्थे सति तत्त्वतो मुनीन्द्रो हृदयस्थ । तस्मिन् हृदयस्थिते च नियमात् सर्वार्थसंसिद्धि ॥२/१४॥ इयञ्च कारिका उपदेशरहस्योपदेशपदवृत्ति-धर्मरत्नप्रकरणवृत्ति-धर्मबिन्दुवृत्ति-प्रतिमाशतकवृत्ति-योगसूत्रटिप्पणादौ [उ रह गा ८ उ पद १८५ ध र प्र पृ २४६ ध बि ८/७४ प्र श का र २ यो सू २/१] उद्धृता वर्तते । मुनीन्द्रः = सर्वज्ञ, तस्य स्वतन्त्रवक्तृत्वरूप-तत्सम्बन्धशालित्वात् = स्वगतनिरुपचरितस्वातन्त्र्यलक्षण-वचनप्रतियोगिककर्तृत्व-स्वरूप-वचनसम्बन्धपरिकलितत्वात् । ततश्च स्वनिष्ठानुपचरित-स्वातन्त्र्यलक्षणकर्तृत्वप्रतियोगिकत्वसम्बन्धेन सर्वज्ञविशिष्टस्य वचनस्य हृदयस्थितत्वे तद्द्वारा सर्वज्ञस्यापि हृदयस्थितत्व न्याय्यम् । स्वतन्त्रपदेन गणधरादिव्यवच्छेद कृत, सर्वज्ञतीर्थकरोपदिष्टार्थदेशनाया एवान्यगतप्रमाणान्तरानुपजीवकत्वात्, तामवलम्ब्यैव सूत्रात्मकाऽऽगमकर्तृत्व गणधरादीनामभिहितम् । अत एवागमाशातनाया प्राधान्येन तीर्थकराशातना तत्र तत्र प्रसिद्धा, न तु गणधराद्याशातनेति ध्येयम् । जिनवचनोपयोगमाहात्म्यञ्च धर्मबिन्दौ मूलकारै

ગૌણ કરાય છે, કારણ કે અનુષ્ઠાન જિનવચનનુ ઉપજીવક [= અવલબન કરનાર] છે [૨/૧૩]

<u>**વિશેષાર્થ**</u> - આગમ વચન વડે મનની જે પ્રવૃત્તિ કે નિવૃત્તિ થાય છે તેનાથી જ વાસ્તવમા ધર્મ ઉત્પન્ન થાય છે વિહિત પ્રવૃત્તિ કે નિવૃત્તિના ફળને ઉત્પન્ન કરવામા માધ્યમ બને છે પૌદ્ગલિક ભાવાત્મક પુણ્યાદિસ્વરૂપ અતીન્દ્રિય ધર્મ વચન તો માત્ર તેનુ જ્ઞાપક = વ્યજક = સૂચક છે માટે ધર્મની અપેક્ષાએ વચનમા જ્ઞાપકતા નામનો ધર્મ ઉત્પન્ન થાય છે જેને જ્યા રહેવુ હોય તેને પોતાની અપેક્ષાએ ત્યા [આધારમા] રહેલો ધર્મ પોતાને ત્યા [= આધારમા] રહેવા માટે સબધનુ કામ કરે છે [જુઓ દિવ્યદર્શનટ્રસ્ટપ્રકાશિત ન્યાયભૂમિકા] તેથી દર્શિત ધર્મની અપેક્ષાએ વચનમા રહેલી જ્ઞાપકતા એ ધર્મને વચનમા રહેવા માટે સબધ તરીકે કામ કરશે તેથી સ્વજ્ઞાપકતાસબધથી ધર્મવાળુ વચન બનશે, ધર્મ વચનનિષ્ઠ = વચનવૃત્તિ = વચનગત બનશે અહીં એક વાત ધ્યાનમા રાખવી કે વિહિત પ્રવૃત્તિ કે નિવૃત્તિનુ ફળ તો સાધકને કાલાતરમા મળે છે પરતુ તે સમયે પ્રવૃત્તિ તો હાજર હોતી નથી માટે વિહિત પ્રવૃત્તિના ફળને આપનાર કોઈક મધ્યકાલીન પરિબળની કલ્પના કરવી જરૂરી બને છે તે છે ધર્મ તેને પુણ્ય, અદૃષ્ટ, નસીબ વગેરે પણ કહેવાય છે તે જ વિહિત પ્રવૃત્તિ વગેરેથી ઉત્પન્ન થઈને વિહિત પ્રવૃત્તિના કાલાંતરીય ફળને ઉત્પન્ન કરે છે દાર્શનિકપરિભાષા મુજબ તેને દ્વાર = વ્યાપાર કહી શકાય

જેના વચનનુ પ્રામાણ્ય ક્યારેય અન્ય પ્રમાણથી બાધિત ન બને તેવી સ્વતત્રવક્તાસ્વરૂપ વ્યક્તિ તો માત્ર સર્વજ્ઞ જ હોઈ શકે તેથી સર્વજ્ઞવચન જ પરમ = પ્રકૃષ્ટ છે સત્ અનુષ્ઠાનને પોતાની પ્રામાણિકતા ટકાવી રાખવા જિનવચનનો સહારો = આશરો લેવો પડે છે પરતુ જિનવચનને સ્વગત પ્રામાણ્યના નિર્વાહ માટે સદનુષ્ઠાનનો ટેકો લેવાની જરૂર રહેતી નથી માટે સદનુષ્ઠાન કરતા સર્વજ્ઞવાણી બલવાન = પ્રધાન છે તેની અપેક્ષાએ સદનુષ્ઠાન દુર્બલ = ગૌણ છે માટે જ સદનુષ્ઠાનની આરાધનાના બદલે જિનવચનની આરાધનાને જ તાત્ત્વિક ધર્મરૂપે આગળના શ્લોકમા બતાવી ગયા માટે 'આજ્ઞા એ ધર્મનો સાર છે' એ વાત યથાર્થ જ છે [૨/૧૩]

જિનવચનના જ મહિમાને મૂલકારશ્રી વખાણે છે કે —

<u>**ગાથાર્થ**</u> - આ [સર્વજ્ઞવાણી] હૃદયસ્થ થયે છતે વાસ્તવમા સર્વજ્ઞ હૃદયસ્થ બને છે અને સર્વજ્ઞ હૃદયસ્થ થયે છતે નિયમા સર્વાર્થસપત્તિ થાય છે [૨/૧૪]

## જ્યાં શાસ્ત્ર ત્યાં સર્વજ્ઞ

<u>**ટીકાર્થ**</u> - જિનવચન હૃદયસ્થ થયે છતે સ્મૃતિ દ્વારા સર્વજ્ઞ જિનેશ્વર ભગવત હૃદયસ્થ બને છે, કારણ કે આગમ-વચનના સ્વતત્રવક્તૃત્વરૂપ સબધથી સર્વજ્ઞ ભગવત યુક્ત છે અર્થરૂપે જિનાગમોને બોલનારા સર્વજ્ઞ તીર્થંકરો હોવાથી જિનાગમના સ્વતત્ર વક્તા સર્વજ્ઞ તીર્થંકરો જ છે સર્વજ્ઞ ભગવત હૃદયસ્થ થયે છતે નિશ્ચયે સર્વાર્થસપત્તિ પ્રાપ્ત થાય છે [૨/૧૪]

१ मुद्रितप्रतौ 'ति च' इति पाठ । २ ह प्रतौ-पदसमाप्तौ - इति पाठ ।

॥२/१४॥

यत 'चिन्तामणि'रित्यादि ।

**चिन्तामणिः परोऽसो, तेनेय' भवति समरसापत्तिः । सेवेह योगिमाता निर्वाणफलप्रदा प्रोक्ता ॥२/१५॥**

**कल्याणकन्दली**

रेवोक्तम् –> महागुणत्वात् वचनोपयोगस्य, तत्र ह्यचिन्त्यचिन्तामणिकल्पस्य भगवतो बहुमानगर्भं स्मरणमिति, भगवतैवमुक्त-मित्याराधनायोगादिति, एवञ्च प्रायो भगवत एव चेतसि समवस्थानमिति <– [ध बि ६/४०-४१-४२-४३] । इतिः पाद-समाप्तो, तदुक्त हलायुधकोशे –> इतिशब्द स्मृतो हेतौ, प्रकारादिसमाप्तिषु <– [ह को ५/८८७] । हृदयस्थिते च = ध्यानसाक्षात्कृते च [द्वा द्वा २/२५] मुनीन्द्रे = भगवति निश्चयेन तन्माहात्म्येन सर्वार्थसम्पत्तिः भवति । इदमेवाभिप्रेत्य टीकाकृताऽपि ज्ञानसारे अध्यात्मोपनिषदि च –> शास्त्रे पुरस्कृते तस्मात् वीतराग पुरस्कृत । पुरस्कृते पुन तस्मिन् नियमात् सर्वसिद्धय ॥ <– [ज्ञा सा २४-४ अ उ १/१४] इत्युक्तम् । श्रीनेमिचन्द्रेणापि षष्ठिशतके –> जाण जिणिदो निवसइ सम्म हिययम्मि सुद्धनाणेण <– [६७] इत्युक्तम् । तदुक्त सम्बोधसप्ततिप्रकरणे श्रीरत्नशेखरसूरिभि –> आगम आयरतेण अत्तणो हितकखिणो । तित्थनाहो सयबुद्धो, सव्वे ते बहुमन्निया ॥३५॥ <– इति । अन्येषामपि सम्मत भगवत्स्मरणस्य विशिष्टफलदायित्वम् । तदुक्त –> अष्टषष्टिसु तीर्थेषु यात्राया यत्फल भवेत् । श्रीआदिनाथदेवस्य स्मरणेनाऽपि तद्भवेत् ॥ <– [ ] इति । नगरपुराणेऽपि –> अष्टषष्टिसु तीर्थेषु यत्पुण्य किल यात्रया । आदिनाथस्य देवस्य दर्शनेनाऽपि तद् भवेत् ॥ <– ( ) इत्युक्तम् । मूलग्रन्थे दर्शिता सर्वार्थसिद्धिश्चोपलक्षण क्लिष्टकर्मविगमादे , सर्वज्ञस्मरणादेरचिन्त्यशक्तित्वात् । तदुक्त मूलकारैरेव धर्मबिन्दौ –> हृदि स्थिते च भगवति क्लिष्टकर्मविगम जलानलवदनयोर्विरोधात् <– [६/४८-४९] इति । तदुक्त टीकाकृताऽपि ऐन्द्रस्तुतिचतुर्विंशतिकावृत्तौ –> त्यक्तससाराणामपि परिणामानपकर्षस्य हृदयस्थितभगवन्माहात्म्या-धीनत्वात्, इत्थमेवास्य क्षेमकारित्व युक्तम् <– [ऐ च वृ ८/१] इति । ततश्च यथा जिनवचन हृदयस्थ स्यात् तथा प्रयतितव्य, न तु केवल तत् लेखन-मुद्रणादिना पुस्तकस्थ, श्रवणद्वारा श्रोत्रस्थ, पठन-पाठन-पुनरावर्तनादिना कण्ठस्थ वा स्यादेतावतैव कृतकृत्यत्वमात्मनोऽवगन्तव्यमित्युपदेश –> धम्मु ण पढियइ होइ, धम्मु ण पोत्था-पिच्छियइ <– [४७] इति योगीन्दुदेवकृत-योगसारवचनमप्यत्रानुसन्धेयम् ॥२/१४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> असौ पर चिन्तामणि तेन इय समरसापत्ति भवति । सा एव इह योगिमाता निर्वाण-

**विशेषार्थ** - જેણે જિનાગમ માન્યુ તેણે સર્વજ્ઞ જિનેશ્વરને માન્યા આગમસ્મરણમા તીર્થંકરનુ સ્મરણ સમાયેલ છે શુ જિનાગમ યાદ આવે અને અર્થની અપેક્ષાએ તેના સ્વતત્ર વક્તા સર્વજ્ઞ ભગવત યાદ ન આવે ? આવે જ સર્વજ્ઞને સ્મૃતિપથમા લાવ્યા એટલે સર્વજ્ઞની શક્તિ તમારી શક્તિ બની ગઈ પછી વિઘ્નોના વાદળ વિખરાઈ જાય અને સર્વ સપત્તિ પગમા આળોટવા માડે સર્વજ્ઞ દેવાધિદેવની શક્તિથી કયુ કાર્ય અસાધ્ય છે ?

## ❀ આજે શાસ્ત્રાભ્યાસ કેમ મંદ બનેલ છે ? ❀

માટે જ જે કાઈ વિચારવાનુ, બોલવાનુ કે કરવાનુ તે જિનાગમ મુજબ જ 'મારા ભગવાને શુ આ વિચારવાનુ કહ્યુ છે ?' 'મારા ભગવાને શુ આવુ બોલવાનુ-આચરવાનુ જણાવેલ છે ?' આ વિચારસરણી જીવનમા વણાઈ જવી જોઈએ જિનેશ્વર ભગવતના સ્મરણનો સુદર ઉપાય શાસ્ત્રનો સ્વાધ્યાય છે શાસ્ત્રસ્વાધ્યાયના માધ્યમથી પરમાત્માનુ જે સ્મરણ થાય છે તે અદ્ભુત કક્ષાનુ હોય છે તેથી જ સર્વત્ર આગમવચનનો જ આદર કરવાનુ જણાવેલ છે આજના વિજ્ઞાનવાદ અને ભૌતિકયુગમા શાસ્ત્રોનુ અધ્યયન ઘણુ ઓછુ થઈ ગયુ છે શાસ્ત્ર સિવાયનુ એટલુ બધુ વાચન થાય છે કે શાસ્ત્ર વાચવાની રુચિ જ મોટા ભાગે મરી પરવારે છે બાળ, યુવાન, વૃદ્ધ, સ્ત્રી બધાને સિનેમા સાહિત્ય, દૈનિકપત્ર [છાપા], મેગેઝીન, જાસુસીકથા, નવલકથા, નવલિકાઓ, સ્ત્રીકથા, સામાજિક, પૂર્તિઓ વગેરેમા એવો અનુરાગ જન્મ્યો છે કે આગમકથા-આગમવાચન તેઓને નિરુપયોગી અને નીરસ લાગે છે તેઓને આગમકથાઓ જીવનવિકાસક્રમમા કોઈ અગત્યનો ભાગ ભજવતી નથી લાગતી પરતુ જે મુનિ છે, સાધુ છે, સાચા સયમી છે, તેણે તો આગમપરિશીલન દ્વારા જિનેશ્વર ભગવતોની અચિત્ય કૃપાના પાત્ર બનવાનુ જ છે [૨/૧૪]

આનુ કારણ જણાવતા મૂલકારશ્રી ફરમાવે છે કે –

**ગાથાર્થ** - ભગવાન શ્રેષ્ઠ ચિંતામણિરત્ન છે તેનાથી જ આ સમરસાપત્તિ થાય છે તે [સમગ્સાપત્તિ] જ યોગીમાતા અને

१ मुद्रितप्रता 'तनव' इति पाठ किन्तु योगदीपिकानुसारेणाऽत्र 'तेनय' इत्यत्र पाठो युज्यते, ह प्रतो तथा प्रतिमागतवृत्त्यादावपि तथैव दृष्टत्वादस्माभि 'तनय' इति पाठो गृहीत ।

असौ भगवान् परः = प्रकृष्टः चिन्तामणिः वर्तते । तेन इयं = सर्वत्र पुरस्क्रियमाणाऽऽगमसम्बन्धोद्बोधित-संस्कारजनितभगवद्हृदयस्थता समरसापत्तिः = समताऽऽपत्तिः भवति, रसशब्दोऽत्र भावार्थः, भगवत्स्वरूपोपयुक्तस्य तदुपयोगाऽनन्यवृत्तेः परमार्थतस्तद्रूपत्वात् बाह्याऽऽलम्बनाऽऽकारोपरक्ततत्त्वेन ध्यानविशेषरूपा तत्फलभूता वा मनस

कल्याणकन्दली

फलदा [च] प्रोक्ता ॥२/१५॥ इयं कारिका प्रतिमाशतकवृत्त्यादौ [प्र.श.का २ पृ ११] उद्धृता दृश्यते । दर्शितकारिकां समुद्धृत्य टीकाकृता देशनाद्वात्रिंशिकायां –> इत्थमादरद्वारा हृदयस्थे जिने सति । भवेत्समरसापत्तिः फलं ध्यानस्य या परम् ॥२/१५॥ <– इत्युक्तम् ।

द्रव्यचिन्तामण्याद्यपेक्षया प्रकृष्टः अचिन्त्यः चिन्तामणिः । चिन्तामणिवत् भगवतः स्वयं राग-मोहादिविरहेऽपि विधिवदाऽऽराधकस्याऽभीष्टफलदायकत्वाच्चिन्तामणित्वोक्तिः, चिन्तामृतेऽपि सानुबन्धाऽऽमुष्मिक-शाश्वतफलदायकत्वात् देवाधिष्ठितचिन्तामणेरै-हिकपरिमितफलदायकचिन्तामण्यपेक्षया च पारम्यमप्यस्य सङ्गतिमङ्गति । तेन कारणेन इयं = सर्वत्र विचार-वचन-वर्तनेषु पुरस्क्रियमाणाऽऽगमसम्बन्धोद्बोधितसंस्कारजनितभगवद्हृदयस्थता = पुरस्क्रियमाणस्य जिनागमस्य स्वतन्त्रवक्तृत्वस्वरूप-तत्संसर्गेण उद्बुद्धे भगवद्गोचरे संस्कारे उपहिता सर्वज्ञस्मृतिलक्षणा भगवद्हृदयस्थता, निरन्तर-दीर्घकालादरादिवशेन कालान्तरे समरसापत्तिः = समतापत्तिः भवति । न च समरसस्य 'समता' इति विवरणं कुतः सङ्गच्छते ? इत्याशङ्कनीयम्, यतः समरसशब्दगतो रसशब्दः अत्र प्रक्रमे भावार्थः = भाववाचकः इति भावार्थक-तल्प्रत्ययेन तद्विवरणं युक्तमेव । समतापत्तिः = तुल्यताप्राप्तिः, प्रकृते भगवत्तुल्यताप्राप्तिरित्यर्थः न तु अनन्तानुबन्ध्यादिक्षयोपशमजनित-शमरसोपलब्धिरित्यर्थः, प्रस्तुतानुप-योगित्वात् तादृशार्थघटनस्य । भगवत्सादृश्यसम्प्राप्तिमेव समर्थयति –> भगवत्स्वरूपोपयुक्तस्य पुरुषस्य ज्ञानात्मना तदुपयोगा-नन्यवृत्तेः = भगवत्स्वरूपोपयोगादन्यत्राऽवृत्तित्वात् परमार्थतः = वस्तुतः आगमतः तद्रूपत्वात् = भगवत्स्वरूपत्वात् । वह्निपरि-णतोऽयस्पिण्डो वह्निरितिवत् भगवद्भावोपयोगपरिणत आत्मैव भगवान् सर्वज्ञः । तदुक्तं प्रवचनसारेऽपि –> परिणमदि जेण दव्वं, तक्कालं तम्मयंत्ति पण्णत्तं <– [प्र.सार २/८] इति । तदुक्तं तत्त्वानुशासने –> येन भावेन यद्रूपं ध्यायत्यात्मानमात्मवित् । तेन तन्मयतां याति सोपाधिः स्फटिको यथा ॥ <– [६/९] इति । अन्यत्रापि –> परिणमते येनात्मा भावेन स तेन तन्मयो भवति । अर्हद्ध्यानाऽऽवेष्टे भावार्हन् स्यात् स्वयं तस्मात् ॥[ ] <– इत्युक्तम् । तदुक्तं योगसारेऽपि –> वीतरागमतो ध्यायन् वीतरागो भवेत् सुधीः । इलिका भ्रमरीभीता ध्यायन्ती भ्रमरी यथा ॥ <– [१/४२] इति । पार्श्वनाथचरित्रेऽपि –> वीतरागं हृदि ध्यायन् वीतरागो यथा भवेत् । मुक्त्वाऽखिलमपध्यानं भ्रामरं ध्यानमाश्रय ॥ <– [सर्ग ६/७१९] इत्येव-मुक्तम् । ज्ञानार्णवेऽपि –> वीतरागं स्मरन् योगी वीतरागो विमुच्यते <– [४०/१] इत्येवं श्रीशुभचन्द्रेणोक्तम् । अपरोक्षा-नुभूतौ शङ्कराचार्येणापि –> भावितं तीव्रवेगेन यद् वस्तु निश्चयात्मना । पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ <– [१४०] इति । अन्यत्रापि –> इलिकाभ्रमरीध्यानात् भ्रमरी जायते यथा । तथा ध्यानानुरूपः स्यात् जीवोऽशुभ-शुभात्मवान् ॥ <– [ ] अत एव भगवत्स्वरूपोपयुक्तस्य तदानीमागमतो भावनिक्षेपेण भगवत्ता अनुयोगद्वारसूत्रादौ सूचिता । न चैव तस्याऽऽगमत एव भावभगवत्ताप्राप्तिः प्रतिपादयितुमर्हतीति न नोआगमतः समरसापत्तिरित्याशङ्कनीयम्, यतो मनसो बाह्यालम्बना-कारोपरक्तत्वेन = स्वेतरगोचराऽऽकृतिसमभिव्याप्तत्वेन ध्यानविशेषरूपा –> 'तत्र प्रत्ययैकतानता ध्यानम्' <– [यो.सू.३/२] इति पातञ्जलयोगसूत्रोक्ततल्लक्षणस्य सत्त्वात् तत्फलभूता वा = ध्यानविशेषकार्यसमाधिस्वरूपा वा, –> 'तदेवार्थमात्र-

મોક્ષફલદાયી કહેવાયેલ છે [૨/૧૫]

## ❀ સમરસાપત્તિ યોગીમાતા ❀

ટીકાર્થ - સર્વજ્ઞ ભગવાન પ્રકૃષ્ટ [અચિન્ત્ય] ચિંતામણિ છે તે કારણે આ સમરસાપત્તિ થાય છે. 'આ' શબ્દનો અર્થ છે સર્વત્ર આદરપૂર્વક આગળ કરાતા આગમના સંસર્ગથી ઉદ્બુદ્ધ = પ્રબુદ્ધ = પ્રગટ થયેલ સંસ્કારથી નિષ્પન્ન થયેલી ભગવાનની હૃદયસ્થતા = મનોગતતા. સમરસની આપત્તિનો અર્થ છે સમતાની = તુલ્યતાની પ્રાપ્તિ, કારણ કે રસશબ્દ ભાવ અર્થમાં અહીં વપરાયેલ છે ['મધુ' એવા ભાવને જેમ મમતા શબ્દ જણાવે છે, તેમ સરખાપણાને 'સમતા' શબ્દ બતાવે છે. પ્રસ્તુતમાં સરખાપણું ભગવાનની અપેક્ષાએ જાણવાનું છે. અર્થાત્ જે સાધક દરેક ક્રિયા કરતા કરતા ભગવાનને હૃદયસ્થ બનાવે છે તેને ભગવત્તુલ્યતા પ્રાપ્ત થાય છે. આનું કારણ એ છે કે] ભગવાનના સ્વરૂપમાં ઉપયુક્ત વ્યક્તિ ભગવાનના સ્વરૂપના ઉપયોગ સિવાય અન્યત્ર ક્યાય [જ્ઞાનાત્મના] ન રહેવાથી વાસ્તવમાં તે ભગવાનસ્વરૂપ જ બને છે. [અનુયોગદ્વાર સૂત્રમાં બતાવેલ નિક્ષેપવ્યવસ્થા અનુસારે તે

समापत्तिरभिधीयते ।

तथोक्तं **योगशास्त्रे** --> 'क्षीणवृत्तेरभिजात्यस्येव मणेर्ग्राह्य-ग्रहीतृ-ग्रहणेषु तत्स्थ-तदञ्जनता समापत्तिः' <--

**कल्याणकन्दली**

निर्भासं स्वरूपशून्यमिव समाधिः' <-- [यो सू ३/३] इति **पातञ्जलयोगसूत्रोक्ततल्लक्षणसमन्वयात्**, **समापत्तिः** इति योगाचार्यैः **अभिधीयते** । न चास्या ध्यानरूपता स्वमते कथं ? इत्याशङ्कनीयम्, विस्रोतसिकापरिहारेण सुदृढप्रयत्नव्यापाररूपतया स्वमतेऽपि ध्यानलक्षणोपपत्तेः, तदुक्तं **विशेषावश्यकभाष्ये** --> सुदढप्पयत्तवावारणं, निरोहो वा विज्जमाणाणं । झाणं करणाणं मयं ण उ चित्तणिरोहमेत्तागं ॥ <-- [वि आ भा ३०७१] इति । तदुक्तं **ध्यानशतके** --> जं थिरमज्झवसाणं तं झाणं <-- [ध्या श गा २] इति । समरसापत्तेः समाधित्वमते ध्यानफलरूपताऽपि सङ्गच्छत एव, तदुक्तं **तत्त्वानुशासने** --> सोऽयं समरसीभावस्तदेकीकरणं स्मृतम् । एतदेव समाधिः स्याल्लोकद्वयफलप्रदः ॥१३७॥ <-- इति । मतान्तरे तु ध्यान-समाध्योर्नार्थभेदः कश्चित्, तदुक्तं **आदिपुराणे** --> योगो ध्यानं समाधिश्च धीरोधः स्वान्तनिग्रहः । अन्तःसंलीनता चेति तत्पर्यायाः स्मृता बुधैः ॥ [२१/१२] <-- इति । प्राथमिककक्षायामियं समापत्तिः ध्यानविशेषरूपा उत्तरत्र च समाधिविशेषस्वरूपेति विवेकः । **योगप्रदीपे** च --> ध्यातृ-ध्यानोभयाभावे ध्येयेनैक्यं यदा व्रजेत् । सोऽयं समरसीभावस्तदेकीकरणं मतम् ॥६८॥ <-- इत्येवं समाधिविशेषरूपा समापत्तिरुपदर्शिता ध्येयम् ।

**तथोक्तं योगशास्त्रे** = पातञ्जलयोगसूत्रे --> **क्षीणवृत्तेरभिजात्यस्येव मणेः ग्राह्य-ग्रहीतृ-ग्रहणेषु तत्स्थ-तदञ्जनता समापत्तिः** <-- इति । यद्यपि योगसूत्रे 'ग्रहीतृ-ग्रहण-ग्राह्येषु' इति पाठः तथापि 'सौत्रक्रमात् आर्थक्रमो बलीयान्' इति न्यायेन 'ग्राह्य-ग्रहीतृ-ग्रहणेषु' इत्यत्रोक्तम् । वस्तुतो 'ग्राह्य-ग्रहण-ग्रहीतृषु' इत्येव पाठः समीचीनः, यतो भूमिकाक्रमवशेन प्रथमं ग्राह्यनिष्ठः समाधिः, ततो ग्रहणनिष्ठः, ततोऽस्मितोपरागेण गृहीतृनिष्ठः, केवलस्य पुरुषस्य गृहीतुः भाव्यत्वासम्भवादिति व्यक्तमुक्तं टीकाकृता **द्वात्रिंशिकाप्रकरणे** --> मणेरिवाऽभिजातस्य क्षीणवृत्तेरसंशयम् । तात्स्थ्यात् तदञ्जनत्वाच्च समापत्तिः प्रकीर्तिता ॥२०/१०॥ <-- इति कारिकाव्याख्यायाम् । तद्व्याख्यालेशस्त्वेवम् --> मणेरिव = स्फटिकादिरत्नस्येव, अभिजातस्य = जात्यस्य, क्षीणवृत्तेः = क्षीणमलस्य, असंशयं = निश्चितं, तात्स्थ्यात् = तत्रैकाग्रत्वात्, तदञ्जनत्वाच्च = तन्मयत्वाच्च, न्यग्भूते चित्ते विषयस्य भाव्यमानस्यैवोत्कर्षात् समापत्तिः प्रकीर्तिता । यथा हि निर्मलस्फटिकमणेस्तद्रूपाश्रयवशात् तद्रूपतापत्तिरेवं निर्मलचित्तसत्त्वस्य तत्तद्भावनीयवस्तूपरागात्तद्रूपतापत्तिः इति । तदुक्तं **स्याद्वादकल्पलतायामपि** --> तत्स्थता = तदेकाग्रता, तदञ्जनता = न्यग्भूते चित्ते भाव्यमानोत्कर्षः स्फटिकोपरागस्थानीयः [१/२१] <-- इति । इदञ्च **भोजवृत्तिमवलम्ब्योक्तम्** । तदुक्तं **भोजवृत्तौ** --> क्षीणा वृत्तयो यस्य तत् क्षीणवृत्ति, तस्य ग्रहीतृ-ग्रहण-ग्राह्येषु आत्मेन्द्रियविषयेषु तत्स्थ-तदञ्जनता समापत्तिर्भवति । तत्स्थत्वं = तत्रैकाग्रता, तदञ्जनता = तन्मयत्वं, क्षीणभूते [न्यग्भूते] चित्ते विषयस्य भाव्यमानस्यैवोत्कर्षः **तथाविधा समापत्तिः = तद्रूपः परिणामो भवतीत्यर्थः** । दृष्टान्तमाह - अभिजातस्येव मणेः, यथाऽभिजातस्य = निर्मलस्य स्फटिकमणेस्तत्तदुपाधिवशात्तत्तद्रूपतापत्तिः एवं निर्मलस्य चित्तस्य तत्तद्भावनीयवस्तूपरागात्तत्तद्रूपतापत्तिः । यद्यपि 'ग्रहीतृ-ग्रहण-ग्राह्येषु' इत्युक्तं तथापि भूमिकाक्रमवशात् ग्राह्य-ग्रहण-ग्रहीतृषु इति बोध्यम् । यतः प्रथमं ग्राह्यनिष्ठ एव समाधिस्ततो ग्रहणनिष्ठस्ततोऽस्मितामात्ररूपो ग्रहीतृनिष्ठः, केवलस्य पुरुषस्य ग्रहीतुर्भाव्यत्वाऽसम्भवात् । ततश्च स्थूल-सूक्ष्मग्राह्योपरक्तं चित्तं तत्र समापन्नं भवति । एवं ग्रहणे ग्रहीतरि च समापन्नं तद्रूपपरिणामत्वं बोद्धव्यम् <-- [पा यो सू १/४१ भो वृ पृ ४७] इति ।

भावागणेशवृत्तिकारस्तु --> क्षीणवृत्तेः = निरुद्धध्येयातिरिक्तवृत्तेः निष्पन्नसम्प्रज्ञातयोगस्येति यावत् । एतच्च हेतुगर्भविशेषणम् । **समापत्तिरिति च साक्षात्कारपरिभाषा** । तथा च यतश्चित्तं स्वत एव सर्वार्थग्रहणसमर्थं विषयान्तरव्यासङ्गदोषादेव तत्प्रतिबद्धम्, अतो वृत्त्यन्तरनिरोधरूपे प्रतिबन्धाऽपगमे सति ग्रहीत्रादिषु ध्येयेषु समापत्तिः = साक्षात्काररूपवृत्तिः चित्तस्य स्वत एव भवति । सा च तत्स्थ-तदञ्जनतारूपा तेषु ग्रहीत्रादिषु स्थितस्य चित्तस्याऽशेषविशेषैः सम्यक्कृतदाकारतारूपेत्यर्थः । अत्र दृष्टान्तः अभि-

વ્યક્તિ આગમથી ભાવ અરિહંત બને છે] મન બાહ્ય આલંબનના આકારથી ઉપરક્ત = વ્યાપ્ત થવાથી સમાપત્તિ ધ્યાનવિશેષસ્વરૂપ અથવા ધ્યાનફલસ્વરૂપ કહેવાય છે. યોગશાસ્ત્ર [= પાતંજલ યોગસૂત્ર]માં જણાવેલ છે કે - જેનો મલ ક્ષીણ થયેલ છે તેવા શ્રેષ્ઠ મણિ જેવા [મનમાં] ગ્રાહ્ય, ગ્રહીતા [= ગ્રાહક] અને ગ્રહણને વિશે તાત્સ્થ્ય અને તદંજનતા એ સમાપત્તિ છે. [તાત્સ્થ્યનો અર્થ છે તેમાં એકાગ્રતા અર્થાત્ પ્રસ્તુતમાં ભગવાનમાં એકાગ્રતા તથા તદંજનતા = તન્મયતા. આ વાત ઉપાધ્યાયજી મહારાજે બત્રીશીપ્રકરણમાં કરેલ છે. અન્યમતે 'તાત્સ્થ્ય' એટલે અંતરાત્મામાં પરમાત્માના ગુણોનો સંસર્ગારોપ તથા 'તદંજનત્વ' = અંતરાત્મામાં

(योगसूत्र १/४१) । सा च मयि तद्रूप स एवाहमि त्यादिध्यानोल्लिख्यमान-वैज्ञानिकसम्बन्धविशेषरूपा । सैव

कल्याणकन्दली

जातस्येव मणेरिति यथाऽभिजातस्य = स्वभावतो निर्मलस्य मणे बाह्यमलापगमे सन्निकृष्टवस्त्वाकारता तद्वदित्यर्थ <— [पा यो सू १/४१ भा वृ पृ ४७] इत्याद्याह । नागोजीभट्टवृत्तिरपि प्राय एवंविधैव । चन्द्रिकाकारस्तु —> क्षीणा वृत्तयो यस्य तस्य चेतस स्फटिकमणेरिव ग्रहीतृ-ग्रहण-ग्राह्येषु तत्स्थ=तदेकाग्रता, तदञ्जनता = तन्मयत्व तद्रूपपरिणामो भवतीत्यर्थ <— इति सक्षेपेण प्रोक्तवान् । योगसूत्रभाष्यकारस्तु —> अभिजातमणिकल्पस्य चेतसो ग्रहीतृ-ग्रहण-ग्राह्येषु या तत्स्थ-तदञ्जनता = तेषु स्थितस्य तदाकारतापत्ति सा समापत्तिरित्युच्यते <— इति व्याचष्टे । केचित्तु —> तात्स्थ्य = अन्तरात्मनि परमात्मगुण-ससर्गारोप तदञ्जनत्वञ्च अन्तरात्मनि परमात्माऽभेदारोप <— इत्याचक्षते । मूलकारस्तु —> समापत्ति =ध्यानत स्पर्शना <— [यो दृ समु ६४] इति योगदृष्टिसमुच्चयवृत्तौ व्याचक्षते ।

ज्ञानसारेऽपि —> ध्यातान्तरात्मा ध्येयस्तु परमात्मा प्रकीर्त्तित । ध्यानञ्चैकाग्र्यसवित्ति समापत्तिस्तदेकता ॥ मणाविव प्रतिच्छाया समापत्ति परात्मन । क्षीणवृत्तौ भवेद् ध्यानादन्तरात्मनि निर्मले ॥ आपत्तिश्च तत पुण्यतीर्थकृत्कर्मबन्धत । तद्भावाभिमुखत्वेन सपत्तिश्च क्रमाद् भवेत् ॥ <— [ज्ञा सा ३०/२-३-४] इत्युक्त टीकाकृता । तदुक्त अध्यात्मसारेऽपि —> समापत्तिरिह व्यक्तमात्मन परमात्मनि । अभेदोपासनारूपस्तत श्रेष्ठतरो ह्ययम् ॥ <— [अ सा १८/८९] इति । सोपयोगित्वादत्र पातञ्जलयोगप्रक्रिया लेशतो दर्श्यते —> सप्रज्ञाताऽसप्रज्ञातभेदात् द्विधा योगो भिद्यते । भाव्यस्य भावनाभेदात् सप्रज्ञातश्चतुर्विध । तदुक्त पातञ्जलयोगसूत्रे —> वितर्क-विचाराऽऽनन्दाऽस्मितारूपानुगमात् सप्रज्ञात <— [१/१७] पूर्वापरयो-रर्थयोरनुसन्धानात्ऽल्लोल्लेखशून्यत्वेन भावनाया तु निर्वितर्क समाधि । पञ्चतन्मात्राऽन्त करणयो दिक्कालधर्मावच्छेदेन भावना सविचार समाधि । अस्मिन्नेवालम्बने देश-काल-धर्मावच्छेदभेद विना धर्मिमात्रावभासित्वेन भावनाया निर्विचार समाधि । यदा रजस्तमोलेशानाक्रान्त सत्त्व भाव्यते तदा शुद्धसत्त्वस्याऽनुद्रेकात् चितिशक्तेश्चोद्रेकात् सत्तामात्रावशेषत्वाच्च सास्मित समाधि । सास्मितसमाधिपर्यन्ते विवेकख्यातौ ग्रहीतृसमापत्ति , सानन्दसमाधिपर्यन्ते ग्रहणसमापत्ति , निर्विचारसमाधिपर्यन्ते च ग्राह्यसमापत्ति विश्रान्ता । समापत्तिरपि सवितर्क-निर्वितर्क-सविचार-निर्विचारभेदात् चतुर्विधा । तदुक्त तत्र —> शब्दार्थज्ञान-विकल्पै सवितर्का । महास्मृतिपरिशुद्धौ स्वरूपशून्ये वाऽर्थमात्रनिर्भासा निर्वितर्का । एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ।[यो सू १/४२-४३-४४] इतरासा तिसृणा समापत्तीना निर्विचारफलत्व निर्विचारायाश्च अध्यात्मप्रसाद ऋतम्भरा तत्र प्रज्ञा <— [यो सू १/४८] लभ्यते । ऋतभराजन्य सस्कारान्तरबाधक तत्त्वसस्कारोऽसप्रज्ञात समाधिर्गीयते इति <— । साम्प्रत प्रकृत प्रस्तुम —> सा च = निरुक्तलक्षणा समापत्तिश्च 'मयि तद्रूप = भगवत्स्वरूप', 'स सर्वज्ञ एवाहम्' इत्यादि-ध्यानोल्लिख्यमान-वैज्ञानिकसम्बन्धविशेषरूपा —> वैज्ञानिकसम्बन्धश्च तन्निष्ठतया ज्ञायमानत्वम् <— [त चि चू पृ १०] इति तत्त्वचिन्तामणिचूडामणिकारः । ततश्च 'मयि भगवत्स्वरूपमि'ति ध्याने स्वनिष्ठतया भगवतो ज्ञायमानत्वेन सा ज्ञायमानता भगवत्समापत्तिरभिधीयते इत्यर्थ । विशेषपदोपादानात् दीर्घकालनैरन्तर्यादरगर्भिततादृशध्यानेन भगवतो या ज्ञायमानता सा भगवत्समापत्तिरिति तात्पर्यार्थ । तदुक्त पातञ्जलयोगसूत्रे —> स तु दीर्घकाल-नैरन्तर्य-सत्काराऽऽसेवितो दृढभूमि <— [पा यो सू १/१४] इति । 'धर्मिगतभेदाऽग्रहसहकृत-स्वनिष्ठविशेष्यतानिरूपितप्रकारताया वैज्ञानिकसम्बन्धत्वमि'ति मते 'स एवाहम्' इति ध्याने तत्पदार्थस्य भगवत प्रकारत्वेन स प्रकारताभिधानविषयताविशेषो भगवत्समापत्तिरिति भाव । आदिपदेन भगवद्गुणारोपादिग्रहणम् । तदुक्त श्रीहेमसूरिभिः योगशास्त्रे —> इत्यजस्र स्मरन् योगी, तत्स्वरूपावलम्बन । तन्मयत्वमवाप्नोति, ग्राह्यग्राहकवर्जितम् ॥ अनन्यशरणीभूय स तस्मिन् लीयते तथा । ध्यातृ-ध्यानोभयाभावे ध्येयेनैक्य यथा व्रजेत् ॥ सोऽय समरसीभाव तदेकीकरण मतम् । आत्मा यदपृथक्त्वेन लीयते परमात्मनि ॥ <— [यो शा १०/२-३-४] इति । इदमेव चेतसि-कृत्य श्रीसकलचन्द्रोपाध्यायेनापि ध्यानदीपिकाया —> सर्वज्ञो भगवान् योऽयमहमेवास्मि स ध्रुवम् । एव तन्मयता यात सर्ववेदीति मन्यते ॥१६६॥ येन येन हि भावेन युज्यते यन्त्रवाहक । तेन तन्मयता याति विश्वरूपो मणिर्यथा ॥१६८॥ तत्स्वरूपाऽऽहित स्वान्त तद्गुणग्रामरञ्जितम् । योजयत्यात्मनाऽऽत्मान स्वस्मिन् तद्रूपसिद्धये ॥१७३॥ इत्यजस्र स्मरन् योगी

परमात्मानो अभेदारोप ] तेथी प्रस्तुत भगवत्समापत्तिनो अर्थ छे - 'मारामा भगवाननु स्वरूप छे', 'हु भगवत्स्वरूप ज छु' इत्यादि ध्यानथी जणाता भगवाननो पोतानामा वैज्ञानिकसबधविशेष [विज्ञानिकसबधनो अर्थ छे 'तन्निष्ठतया ज्ञायमानत्व' अर्थात् 'भगवान मारामा रह्या छे' आ रीते जणावापणु आवु भान एकाद वार नहि पण अनेकवार सतत आदरपूर्वक थाय त्यारे

समापत्तिर्योगिनः सम्यक्त्वादिगुणपुरुषस्य माता = जननी **निर्वाणफलप्रदा च प्रोक्ता** तद्वेदिभिराचार्यैः ॥२/१५॥

उपसंहरन्नाह —> **इती**त्यादि ।

**इति यः कथयति धर्मं विज्ञायौचित्ययोगमनघमतिः । जनयति स एनमतुलं श्रोतृषु निर्वाणफलदमलम् ॥२/१६॥**

कल्याणकन्दली

तत्स्वरूपावलम्बितः । तन्मयत्वमवाप्नोति ग्राह्य-ग्राहकवर्जितः ॥१७४॥ यः परात्मा परः सोऽहं योऽहं स परमेश्वरः । मदन्यो न मयोपास्यो मदन्येन च नाऽप्यहम् ॥१७६॥ <— इत्यादि प्रोक्तम् । **आत्मदर्शनगीतायां श्रीबुद्धिसागरसूरिभिरपि** —> आत्मैव परमात्मेति भावनानन्दकारिणी । आत्मदर्शनप्राप्त्यर्थं भावनीया मुमुक्षुभिः ॥३९॥ उन्मनीभावमासाद्य सर्वत्र ब्रह्मनिष्ठया । योगिनो निश्चलं नित्यं प्राप्नुवन्ति शिवं पदम् ॥१५१॥ <— इत्युक्तम् । **रमणगीतायामपि** —> ध्यायतो देवतां मन्त्रमन्यद्वा लक्ष्यमुत्तमम् । ध्येयमात्ममहाज्योतिष्यन्ततो लीनतां व्रजेत् ॥[७/२५] <— इति गदितम् । यथा विशुद्धकरुणा तीर्थङ्करजननी, समित्यादिः प्रवचनमाता, यतना श्रावकाम्बा तथा **समापत्तिः** एव —> सम्यक्त्वज्ञानचारित्रयोगः सद्योग उच्यते । एतद्योगाद्धि योगी स्यात् परमब्रह्मसाधकः ॥ <— [ ] इति वचनात् **योगिनः = सम्यक्त्वादिगुणपुरुषस्य** = नैश्चयिकसम्यग्दर्शन-ज्ञानादिगुणोपेतस्य जननी, गुणकारणस्यैव तादृशगुणविशिष्टहेतुत्वात् । ततश्च समापत्तिः महोदया, नैश्चयिकस्वानुभूत्युपधायकत्वात् । तदुक्तं **प्रवचनसारेऽपि** —> जो जाणदि अरिहंते दव्वत्त-गुणत्त-पज्जवत्तेहिं । सो जाणदि अप्पाणं मोहो खलु जाति तस्स लयं ॥ <— [प्र सा १/८०] इति । **निर्वाणफलप्रदा च प्रोक्ता तद्वेदिभिः** = समापत्तिस्वरूपानुभवितृभिः **आचार्यैः = योगाचार्यैः** । **श्रीसिद्धसेनदिवाकरेणापि कल्याणमन्दिरस्तोत्रे** —> ध्यानाज्जिनेश ! भवतो भविनः क्षणेन देहं विहाय परमात्मदशां व्रजन्ति <— [१५] इत्युक्तम् । **श्रीहेमसूरिभिः योगशास्त्रे** —> मोक्षः कर्मक्षयादेव, स चात्मज्ञानतो भवेत् । ध्यानसाध्यं मतं तच्च तद्ध्यानं हितमात्मनः ॥ <— [४/११३] इति प्रोक्तम् । इत्थञ्च समापत्तिसञ्ज्ञकाऽसङ्गानुष्ठानफलकस्य वचनानुष्ठानस्याऽऽज्ञादरद्वारैवोपपत्तेरयमेव गरीयानिति फलितम् । क्रियान्तरे च नैतदुपपत्तिः । न च तदनन्तरं भगवदनुध्यानादु-पपत्तिः, अनियमात्, अनुषङ्गत एवाऽसङ्गभावाच्चेति व्यक्तं देशनाद्वात्रिंशिकायाम् [द्वा द्वा २/२५]॥२/१५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> इति यः अनघमतिः औचित्ययोगं विज्ञाय धर्मं कथयति सः अतुलं श्रोतृषु अलं निर्वाणफलदं एनं जनयति ॥२/१६॥

તે વિવક્ષિત સંબંધવિશેષસ્વરૂપ બને છે, જેને ભગવત્સમાપત્તિ તરીકે અહીં બતાવેલ છે] આ સમાપત્તિ જ સમ્યક્ત્વાદિગુણયુક્ત એવા યોગી પુરુષની માતા છે અને મોક્ષસ્વરૂપ ફલને આપનાર છે -એમ સમરસાપત્તિના જાણકાર યોગાચાર્યો કહે છે [૨/૧૫]

## ❀ અરિહંતના ધ્યાને અરિહંત બની જશો ❀

**વિશેષાર્થ** - પ્રત્યેક વિચાર, વાણી, વર્તનમાં 'મારા ભગવાને આમ કહ્યું છે' આ રીતે જિનાગમને આગળ કરવાથી ભગવાન હૈયામાં વસી જાય છે અને તે જ વાસ્તવમાં ભગવાનનું ધ્યાન છે. કાળક્રમે દૃઢ બનતા તે સાધકને ભગવાનસમાન બનાવે છે. માટે જ 'અરિહંતના ધ્યાને અરિહંત બની જશો' આવું કહેવામાં આવે છે. જ્ઞાનવિમલસૂરિ મહારાજે પણ આ જ વાત કરી છે કે - ઈલી ભમરીસંગથી, ભમરીપદ પાવે, જ્ઞાનવિમલ પ્રભુધ્યાનથી, જિનઉપમા પાવે. - પ્રારંભમાં જિનાજ્ઞા યાદ કરવા દ્વારા જિનધ્યાન ધરતા ભગવત્સ્વરૂપના ઉપયોગમાં એકાગ્રતા આવે (= तात्स्थ्य) પછી તે જિનધ્યાન દૃઢ બનતા હાલતા, ચાલતા, ખાતા, પીતા પણ ચિત્તમાં ભગવાન સ્ફુરાયમાન થયા કરે. મન ભગવાનમય બની જાય (= तदञ्जनता) આને યોગાચાર્યો સમાપત્તિ કહે છે. જેમ નિર્મલ સ્ફટિકમાં સામે રહેલ વસ્તુનું પ્રતિબિંબ પડે છે તેમ દરેક ક્રિયામાં ભગવાનની આજ્ઞાને યાદ કરવાથી ભગવાન પ્રત્યે વિશિષ્ટ પ્રકારનો અહોભાવ, આદર પ્રગટવાથી મનની મલિન વૃત્તિઓ ક્ષીણ થાય છે અને આ રીતે નિર્મલ બનેલ મનમાં [આત્મામાં] ભગવાન પ્રતિબિંબિત થાય છે. તેથી સાધક 'મારામાં ભગવાનનું સ્વરૂપ રહેલું છે', 'હું જ ભગવત્સ્વરૂપ છું' ઈત્યાદિ પ્રતીતિ - દૃઢ અનુભૂતિ કરે છે. આવી સમાપત્તિ દ્વારા નૈશ્ચયિક સમ્યગ્દર્શન આદિ ગુણોનો પ્રાદુર્ભાવ થાય છે અને તેના દ્વારા જ મોક્ષફલની પ્રાપ્તિ થાય છે. Starting Point છે દરેક ક્રિયા કરતા 'મારા ભગવાને આ કાર્ય આ રીતે કરવાનું કહેલ છે' એવો આદરયુક્ત ઉપયોગ. Ending Point છે મુક્તિપ્રાપ્તિ. Middle Point બને છે નૈશ્ચયિક સમ્યગ્દર્શનનો આવિષ્કાર. કેવો અનોખો છે આ યોગમાર્ગ ! ચાલો, આપણે આ પાવન પથે પ્રગતિશીલ પ્રયાણ કરીએ. [૨/૧૫]

ઉપરોક્ત દેશનાપદ્ધતિનો ઉપસંહાર કરતા મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** - આ પ્રમાણે જે નિર્દોષબુદ્ધિવાળા ગુરુ ઔચિત્યયોગને જાણીને ધર્મ કહે છે તે બેનમુન અને શ્રોતાઓને વિશે આત્યંતિક રીતે નિર્વાણફલદાયી એવા ધર્મને ઉત્પન્ન કરે છે. [૨/૧૬]

इति = उक्तप्रकारेण, यो गुरु धर्मं कथयति विज्ञाय औचित्येन योग = परिणाम, बालादिपरिणामौचित्यमिति यावत्, अनघमति = निर्दोषबुद्धि जनयति स गुरु एन = धर्मं अतुल = अनन्यसदृश, श्रोतृषु = शुश्रूषाप्रवृत्तेषु निर्वाणफलद अल = अत्यर्थं, अवन्ध्यबीजवपनसामर्थ्यादिति ज्ञेयम् ॥२/१६॥

॥ इति द्वितीय षोडशकम् ॥

कल्याणकन्दली

शुश्रूषाप्रवृत्तेषु इति । परमशुश्रूषाशून्यधर्मश्रवणस्य विशिष्टफलाऽदायकत्वात्, विपरीतफलदायकत्वाच्चेति वक्ष्यतेऽग्रे [११/५] । हेतु-स्वरूप-फलशुद्धस्य सद्धर्मोपदेशस्य अवन्ध्यबीजवपनसामर्थ्यादिति अमोघाना मोक्षबीजाना धर्मबीजाना वा आन्तर-परिणामविशेषरूपाणा वपने समर्थत्वादिति हेतूपदर्शन स्वतो ज्ञेयम् । बीजाऽनाधाने तु सुवृष्टेरपि धान्यानुद्भमवत् मोक्षबीज-धर्मबीजाऽनाधाने हेतुसहस्रादपि मोक्षस्य निश्चयधर्मस्य वाऽयोगात् । तदुक्त मूलकारैरेव उपदेशपदे –> अकए बीजक्खेवे जहा सुवासे वि न भवई सस्स । तह धम्मबीयविरहे न सुस्समाए वि तस्सस्स ॥२२४॥ <– इति । ततश्च गुरुणा बीजाधानार्थं सद्धर्मदेशना देयैव किन्तु तदमोघत्वाय श्रोतृभूमिकानुरोधेन तात्त्विककरुणकव्यासहृदयेन विधिवत् सा विधेयेत्युपदेश । तदुक्त-मन्यत्रापि –> मग्गे य जोयइ तहा केई भावाणुवत्तणनएण । बीयाहाण पाय च तदुचियाण कुणइ एसो ॥ <– [ ] इति । एष इति गीतार्थ । सम्यक् व्याख्यानाच्च दीपसम. स ज्ञेय. यथोक्त –> जो सम्म जिणमग्ग पयासए निच्चमेव णिरासंसे । सो भव्वाण जणाण दीवसमो भवसमुद्दमि ॥ <– [ ] इति । षष्टिशतके श्रीनेमिचन्द्रेणापि –> जो देइ सुद्धधम्म सो परमप्पा जयमि न हु अन्नो । कि कप्पदुमसरिसो इयर तरू होइ कइया वि ॥१०१॥ <– इत्युक्तम् । तदुक्त देशनाद्वात्रिंशिकायामपि –> जानाति दातु गीतार्थो य एव धर्मदेशनाम् । कलिकालेऽपि तस्यैव प्रभावाद्धर्म एधते ॥२/३१॥ <– इति । अगीतार्थस्त्वनभिज्ञत्वान्न देशनाधिकारी, तदुक्त उपदेशमालाया –> दव्व खित्त काल भाव पुरिसपडि-सेवणाओ य । नवि जाणइ अगीओ उस्सग्गववाइय चेव ॥[४००] जह नाम कोई पुरिसो नयणविहूणो अदेसकुसलो य । कतारा‌डविभीमे मग्गपणट्ठस्स सत्थस्स ॥४०५॥ इच्छइ य देसियत्त कि सो उ समत्थउ देसियत्तस्स ? दुग्गाइ अयाणतो नयणविहूणो कह देसे ?॥ [४०६] एवमगीयत्थोऽवि हु जिणवयणपईवचक्खुपरिहीणो । दव्वाइ अयाणतो उस्सग्गववाइय चेव ॥४०७॥ <– इत्यादि । –> अन्नाणी वक्खाण करेइ जो तस्स होइ पावफल । नाणीवि जो न भासइ. सो लहए नाणविग्घ तु ॥ [ ] <– इति हितोपदेशमालावचनमपि स्मर्तव्यमत्र इति शम् ॥२/१६॥

इति मुनियशोविजयविरचिताया कल्याणकन्दल्या द्वितीयषोडशक-योगदीपिकाविवरणम् ।

<u>टीकार्थ</u> - ઉપરોક્ત રીતે નિર્દોષબુદ્ધિવાલા જે ગુરુ ઔચિત્યથી પરિણામને એટલે કે બાલાદિ શ્રોતાના પરિણામના ઔચિત્યને વિશેષ રીતે જાણીને ધર્મ કહે છે તે ગુરુ અજોડ એવા ધર્મને ઉત્પન્ન કરે છે કે જે શ્રોતાઓને આત્યંતિક રીતે -અમોઘ રીતે મોક્ષસ્વરૂપ ફલને આપે છે આનુ કારણ એ છે કે આવો ધર્મોપદેશ અવધ્ય એવા બીજની વાવણી કરવામા સમર્થ છે- આ પ્રમાણે જાણવુ [૨/૧૬]

## ❀ અમોઘ ધર્મદેશનાના ઉપાય ❀

<u>વિશેષાર્થ</u> - અહીં ત્રણ વાત ઉલ્લેખનીય છે પ્રથમ એ છે કે બાલ વગેરે શ્રોતાની રુચિને યોગ્ય રીતે જાણવાના લીધે 'તે કેવા ઉપદેશથી મોક્ષમાર્ગે આગળ વધશે ?' તેની ગુરુને બરાબર સમજ મળે છે શ્રોતા કઈ કક્ષાએ રહેલા છે ? એમનામા એમની કક્ષામા આગળ વધવા નજીકનુ ખૂટતુ તત્ત્વ જાણી ધર્મના કયા પગથિએ તે ચડાવવા યોગ્ય છે ? આ વિચારીને તેને અનુસારે ઉપદેશ આપવામા આવે તો જ એ શ્રોતા યોગ્ય રીતે આધ્યાત્મિક વિકાસ પામી શકે ખ્યાલમા રાખવા જેવી બીજી વાત એ છે કે ધર્મના નામે કોઈને એવી સલાહ ન અપાય કે જેથી શ્રોતા ધર્મમાર્ગે આગળ વધવાને બદલે તે જે ધર્મભૂમિકામા રહેલ હોય ત્યાથી નીચે ઉતરે, બુદ્ધિભેદ થાય કે નીચેની કક્ષામા સતોષ માની આગળ વધવાનુ માંડી વાળે તથા ત્રીજી વાત એ છે કે - 'મારા વ્યાખ્યાનથી આકર્ષિત થઈને આ મારો ભગત થઈ જશે, અને મને સારી ગોચરી, ગોલ્ડન પેન, આકર્ષક લેટરપેડ, કિંમતી કામળી, ઈમ્પોર્ટેડ ઘડિયાળ, ગોગલ્સ ચશ્મા વગેરે વહોરાવશે, મારા વખાણ કરશે' - આવી મલિન મનોવૃત્તિથી વેગળા રહીને તથા શ્રોતાના આત્મહિતની ઉદાત્ત ભાવનાથી પ્રેરાઈને સદ્ગુરુ શ્રોતાની ભૂમિકા મુજબ ધર્મોપદેશ આપે છે [=નિર્દોષ બુદ્ધિ] આ ત્રણ મુદ્દાના લીધે ગુરુની ધર્મદેશના અમોઘ બને છે ઉપરની ત્રણ વાતમાથી એક પણ વાતમા જો ગુરુ ગરબડ કરે તો અમોઘદેશનાલબ્ધિ તેને પ્રાપ્ત થતી નથી વર્તમાન કાલમા પ્રવચનકારો આ ત્રણ મુદ્દાનો વ્યવસ્થિત રીતે અમલ કરે તો જિનશાસનની શોભામા ચાર ચાંદ લાગી જાય અસ્તુ [૨/૧૬]

# દ્વિતીય ષોડશકનો સ્વાધ્યાય

(અ) ચારથી પાચ મુદ્દામા નીચેની સમસ્યાનુ સમાધાન આપો

(૧) બાલ જીવને મોક્ષાશયપ્રધાન ધર્મ દેશના આપવામા શુ વાધો ?
(૨) વિહાર કરતા સાધુને ભદ્રક ગામડિયો પૂછે કે 'બાપજી ! તમારો ધર્મ શુ ?' તો સાધુ તેને શુ જણાવશે ?
(૩) સાધુધર્મ વૃદ્ધાવસ્થામા કઈ રીતે હિતકારી બની શકે ?
(૪) અષ્ટપ્રવચનમાતા ત્રિકોટિપરિશુદ્ધ કઈ રીતે ?
(૫) કેવુ આગમગ્રહણ વિશિષ્ટફલદાયી બને ?
(૬) સમરસાપત્તિ એટલે શુ ?
(૭) ધર્મદેશના અમોઘ કેવી રીતે બને ?
(૮) પડિતદેશનાનુ સ્વરૂપ શુ છે ?
(૯) ગુરુપારતત્ર્યનુ હેતુ-સ્વરૂપ-ફલમુખે વર્ણન શુ કરશો ?
(૧૦) અષ્ટ પ્રવચનમાતા ઓળખાવો

(બ) યોગ્ય જોડાણ કરો

| | |
|---|---|
| (૧) અષ્ટપ્રવચનમાતા | (A) પરમગુરુપ્રાપ્તિહેતુ |
| (૨) કેવલ વ્યવહારનયપ્રધાન | (B) મધ્યમ દેશના |
| (૩) નિશ્ચયગર્ભિત આચારશુદ્ધિપ્રધાન | (C) ગોચરી |
| (૪) આજ્ઞાતાત્પર્યપ્રધાન | (D) ખરીદી |
| (૫) બિનશરતી ગુરુપારતત્ર્ય | (E) પડિત દેશના |
| (૬) આગમઆરાધનામાત્રજન્ય | (F) ભાવસયમ યોગ-ક્ષેમકારી |
| (૭) યોગીમાતા | (G) બાલદેશના |
| (૮) ઉદ્‌ગમ શુદ્ધિ | (H) ધ્યાન |
| (૯) ત્રિકોટિ સબધી | (I) સમરસાપત્તિ |
| (૧૦) અત્ય યોગ | (J) શ્રુત-ચારિત્રસ્વરૂપ ધર્મ |

(ક) ખાલી જગ્યા યોગ્ય રીતે પૂરો

૧ બુધને સ્થૂલ બાહ્યાચારપ્રધાન ઉપદેશ આપવો તે ______ છે (ધર્મદેશના, પાપદેશના, ઉચિત)
૨ ગુરુપારતત્ર્યથી ______ થાય છે (સર્વજ્ઞદર્શન, પુણ્ય, દેવલોકપ્રાપ્તિ)
૩ ભવ્યલોકમા પ્રવર્તક અને નિર્વતક ______ નુ વચન છે (અતરાત્મા, આગમ, કલ્યાણમિત્ર)
૪ યોગોદ્વહન કરેલ ______ ને ઠાણાગજી ભણવાનો અધિકાર છે (સાધુ, સાધ્વી, શ્રાવક, શ્રાવિકા)
૫ તાત્ત્વિક ધર્મ ______ થી થાય છે (સાધુજીવન, પ્રભુપૂજા, જિનવચનઆરાધના)
૬ જિનાગમ હૃદયસ્થ હોય ત્યારે વાસ્તવમા ______ હૃદયમા બિરાજમાન થાય છે (ધર્મ, ગુરુ, સર્વજ્ઞ)
૭ એકાગ્રતા = ______ તથા તન્મયતા = ______ (પ્રણિધાન, તદજનતા, અનુપ્રેક્ષા, તાત્સ્થ્ય, ઉપયોગ)
૮ ગુરુપારતત્ર્યનુ તાત્ત્વિક ફળ મુખ્યતયા ______ જીવને જણાવવુ (બાલ, મધ્યમ, પડિત)
૯ ______ નુ વચન પ્રવર્તક છે (ભગવાન, મન, ગુરુ)
૧૦ કષ-છેદ પરીક્ષાથી શુદ્ધ ______ થાય છે (શાસ્ત્ર, પ્રવચનમાતા, ગુરુ)

નોધ આ પ્રશ્નપત્રમા કોઈએ પેન-પેન્સીલ વગેરેથી કોઈ પણ નિશાની વગેરે ન કરવા ખ્યાલ રાખવો

## કલ્યાણકંદલીની અનુપ્રેક્ષા

**(અ) નીચેના પ્રશ્નોના વિસ્તારથી જવાબ આપો**

૧ ગભીરદેશના એટલે શુ ? તે ક્યારે અપાય ?
૨ દ્રવ્ય, ક્ષેત્ર, આદિની અપેક્ષાએ બાલતા સમજાવો
૩ ગ્રથકારશ્રીએ બાલ જીવને શ્રાવકાચારપ્રધાન દેશના આપવાનુ કેમ ન જણાવ્યુ ?
૪ તપના ચાર ભેદ સમજાવો
૫ અષ્ટ પ્રવચનમાતા અનેક દ્રષ્ટિકોણથી સમજાવો
૬ સમ્યક્ત્વ અધ્યયન અનુસાર ત્રણ અવસ્થામા સાધુચર્યા કેવી હોય ?
૭ ૧૦ મી ગાથાના ઉત્તરાર્ધની બન્ને પ્રકારની સભવિત વ્યાખ્યા સમજાવો
૮ ગીતાર્થનિશ્રિત અગીતાર્થને કર્મનિર્જરા કઈ રીતે થાય ?
૯ ઉત્સર્ગ-અપવાદનુ હીનાધિક બળ પંડિતને કેવી રીતે સમજાવશો ?
૧૦ પાતજલ યોગદર્શનાનુસાર સમરસાપત્તિની પ્રક્રિયા જણાવો

**(બ) નીચેના પ્રશ્નોના સક્ષેપમા જવાબ આપો**

૧ શુ બાલ જીવને વ્યવહારપ્રધાન દેશના આપવામા અનેકાતવાદભગ થાય ? શા માટે ?
૨ બાલ જીવને અપાતો ઉપદેશ ધર્મદેશક સ્વય શા માટે આચરે ?
૩ દ્રવ્યપ્રધાન અને પર્યાયપ્રધાન દેશના કોને આપવી ?
૪ ધર્મદેશનાશ્રવણને અયોગ્ય શ્રોતાના ચાર પ્રકાર જણાવો
૫ લોચવિધિ અને વસતિપ્રમાર્જનવિધિ જણાવો
૬ કેવી ધર્માર્થિતા હોય તો બાલ જીવને સાધુઆચારપ્રધાન ધર્મદેશના અપાય ?
૭ 'શીતાપણસહન' કહેવા પાછળ શુ આશય છૂપાયેલો છે ?
૮ સદન્ધન્યાય સમજાવો
૯ સ્થવિરકલ્પીના ૧૪ પ્રકારની ઉપધિ જણાવો
૧૦ દ્રવ્યાદિ અભિગ્રહનુ શાસ્ત્રીય સ્વરૂપ વર્ણવો
૧૧ આધાકર્મનુ સ્વરૂપ જણાવો
૧૨ શાસ્ત્રોક્ત કપાદિ પરીક્ષાથી અષ્ટ પ્રવચનમાતાની શુદ્ધિ કઈ રીતે થાય ?
૧૩ સર્વ શાસ્ત્ર પ્રવચનમાતામા કેવી રીતે રહેલ છે ?
૧૪ નયભેદથી પ્રવચન ક્યા રહેલ છે ?
૧૫ આગમવાચનાગ્રહણનો વિધિ જણાવો
૧૬ વ્યવહારની બળવત્તા સમજાવો
૧૭ મનના પ્રવર્તક-નિવર્તક તરીકે ગ્રથકારશ્રીએ વચન તરીકે જણાવ્યુ તે કેવી રીતે સગત થાય ?
૧૮ અનુષ્ઠાન કરતા આગમપ્રામાણ્ય કેમ બળવાન છે ?
૧૯ ભગવાન ક્ષેમકારક કઈ રીતે બને છે ?
૨૦ વૈજ્ઞાનિક સબધ એટલે શુ ?

**(ક) ખાલી જગ્યા પૂરો**

૧ બાલ અને મધ્યમબુદ્ધિ શ્રોતા ______ નયપ્રધાન દેશનાશ્રવણના અધિકારી નથી (વ્યવહાર, નિશ્ચય)
૨ અપવાદપ્રવૃત્તિ ______ ની સમક્ષ ન કરવી (બાલ, પંડિત, ગૃહસ્થ)
૩ જિનકલ્પીની ઉત્કૃષ્ટ ઉપધિ ______ પ્રકારની હોય (૧૨, ૧૪, ૨૫)
૪ ______ ની રક્ષા માટે જ દ્રવ્યાનુયોગ વગેરે છે (દર્શન, જ્ઞાન, ચારિત્ર)
૫ ______ હોય ત્યારે નિયમા ______ હોય (સમિતિ, ગુપ્તિ, જ્ઞાન, વિનય)
૬ જિનવચનને ______ કરવાનુ (શાસ્ત્રસ્થ, કર્ણસ્થ, કંઠસ્થ, હૃદયસ્થ)

## तृतीय धर्मलक्षणषोडशकम्

सद्धर्मदेशनाविधिरुक्त । अथ धर्मस्यैव स्वलक्षणमभिधित्सुराह --> अस्ये'त्यादि ।

**अस्य स्वलक्षणमिद धर्मस्य बुधैः सदेव विज्ञेयम् । सर्वागमपरिशुद्ध यदादिमध्यान्तकल्याणम् ॥३/१॥**

**अस्य धर्मस्य** लक्ष्यते तदितरव्यावृत्त वस्त्वनेनेति लक्षण, स्वश्च तल्लक्षणश्च = **स्वलक्षण इद** = वक्ष्यमाण **बुधै सदैव विज्ञेय,** लक्षणस्य कदाऽप्यपरावृत्ते । स्वलक्षण कीदृशम् ।? सर्वैरागमै परिशुद्ध, सामान्यत तस्य सार्वतान्त्रिकत्वात् । तथा **यत्** = स्वलक्षण आदि-मध्यान्तेषु कल्याण, अन्तरालाऽप्राप्ते सदा सुन्दरमित्यर्थ ॥३/१॥

### कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> बुधै अस्य धर्मस्य स्वलक्षण इद सदैव विज्ञेयम्, यत् सर्वागमपरिशुद्ध, आदि-मध्यान्तकल्याणम् ॥३/१॥ लक्षणपदस्य व्युत्पत्तिमाह - **लक्ष्यते** = ज्ञायते **तदितरव्यावृत्त** = स्वेतरभिन्नत्वेन रूपेण **वस्तु अनेनेति लक्षण** = लक्षणस्य व्युत्पत्ति । **निशीथचूर्णिकारस्तु** --> लक्खिज्जति ताण सरूवो जेण त लक्खण <--- (नि भा ६४८३) इत्याचष्टे । अव्याप्त्यतिव्याप्त्यसम्भवदोपत्रितयशून्य लक्षणस्य लक्षणमित्येके । लक्ष्यतावच्छेदकसमव्याप्तत्व **तदितीतरे**। कर्मधारयसमासविग्रहप्रदर्शनेन **स्वलक्षण** = स्वस्वरूपभूत लक्षणमित्यर्थ·, न तु सास्नादिमत्त्वादेर्गोलक्षणादेरिव स्वाश्रयैकदेशवृत्तित्वम् । **रत्नाकरावतारिकोक्तदिशा** [रत्ना अव ७/५६] स्वभावस्य कादाचित्कत्व-शाश्वतिकत्वभेदेन द्विविधत्वेऽपि लक्षण लक्ष्याऽनतिरिक्तान्यूनसत्ताकमेकविधमेव, लक्षणस्य **कदाऽप्यपरावृत्तेः** यथा 'उष्णस्पर्शवत्तेज' इति यद्वा 'रूपिण पुद्गला.' इति ।

**स्वलक्षण** = प्रकृते सर्वकालीन धर्मसम्बन्धि-स्वलक्षण **कीदृश** = किस्वरूप स्यात् ? इत्याशङ्कामपाकर्तुमुपक्रमते- **सर्वागमपरिशुद्ध** = **सर्वैरागमैः परिशुद्ध** = अबाधित, न तु केवल स्वाभ्युपगतेनागमेन परिशुद्धम् । कुत ? उच्यते, **सामान्यतः** = धर्माभिलापमात्ररूपमाश्रित्य **तस्य** = धर्मस्य **सार्वतन्त्रिकत्वात्** = सर्वैरेव तन्त्रै स्वीकृतत्वात् ।

नन्वेव सति धर्मस्वलक्षणमसम्भवग्रस्तमेव, जैन-साङ्ख्य-योग-यौग-वेदान्तप्रभृतितन्त्रै परिशुद्धत्वेनाभिमतस्य धर्मस्वलक्षणस्य लोकायतिकतन्त्राऽऽजीवकतन्त्रादिभिर्बाधितत्वात् तै परिशुद्धत्वेनाभिमतस्य च धर्मस्वलक्षणस्य जैन-साङ्ख्य-योग-यौग-वेदान्तप्रभृतितन्त्रैर्बाधितत्वादित्याशङ्कायामाह - **यत्** = **स्वलक्षण आदिमध्यान्तकल्याण** = **आदि-मध्यान्तेषु कल्याण**, कदापि **अन्तरालाऽप्राप्तेः** = कालिकान्तरविरहेण सदा **सुन्दरमित्यर्थः**, लोकायतिकप्रभृतितन्त्रै परिकल्पितस्य धर्मस्वलक्षणस्य केवलमादावेव चारुत्वेन प्रतिभासेऽपि सर्वदा सुन्दरत्वाभावात् । यद्वाऽऽद्ये मध्यमे चरमे च वयसि कल्याणस्वरूपम्, यद्वा श्रोतु प्राथमिक-माध्यमिक-प्रकृष्टधर्मदशानुरूप सुन्दरम्, यद्वा शास्त्रस्याऽऽदौ मध्येऽन्ते च चारुरूपम्, यद्वाऽऽद्यभूमिकाया विकासशीलावस्थाया प्रकृष्टविकसितदशायाश्च सुन्दरमित्यर्थ. । एतावता धर्मस्वलक्षणस्य लक्षणमभिहितम् ।

वस्तुतस्तु त्रैकालिककल्याणकारित्वादेव सर्वागमपरिशुद्धिर्धर्मस्वलक्षणस्य विज्ञेया । अत 'सर्वागमपरिशुद्धमि'त्यस्य

### રતિદાયિની (ગુજરાતી વ્યાખ્યા)

દ્વિતીય ષોડશકમા સદ્ધર્મની દેશનાનો વિધિ કહેવાયો હવે ધર્મના જ વિશેષ લક્ષણને મૂલકારશ્રી જણાવે છે કે ↓

**ગાથાર્થ** - પડિતોએ આ ધર્મનુ નિજ લક્ષણ એ જ હમેશા = સદૈવ જાણવુ કે જે સર્વાગમથી પરિશુદ્ધ હોય તથા આદિ, મધ્ય અને અતકાલે કલ્યાણસ્વરૂપ હોય [૩/૧]

### ❖ ધર્મનું પંડિતગમ્ય લક્ષણ કેવું હોય ? ❖

**ટીકાર્થ** - સ્વેતરથી ભિન્ન = વ્યાવૃત્તરૂપે વસ્તુ જેના વડે જણાય તેને લક્ષણ કહે છે [જેમ કે સાસ્નાદિમત્ત્વ વડે ગાય બકરીથી વ્યાવૃત્તત્વેન = ભિન્નરૂપે જણાય છે અર્થાત્ 'સાસ્નાદિમાન્ હોવાથી આ ગોભિન્ન બકરી વગેરે સ્વરૂપ નથી' આવો બોધ થવાથી સાસ્નાદિમત્ત્વ એ ગાયનુ લક્ષણ કહેવાય] ધર્મનુ આ [જેને હમણા કહેવામા આવશે] સ્વલક્ષણ પડિતોએ સદા માટે જ જાણવુ, કારણ કે લક્ષણ ક્યારેય પણ બદલાતુ નથી [ગાયનુ લક્ષણ ક્યારેક સાસ્નાદિમત્ત્વ અને ક્યારેક સફેદ ચામડી - આવુ ન હોય, લક્ષણ ત્રૈકાલિક એક સ્વરૂપ જ હોય] 'ધર્મનુ સ્વાત્મક લક્ષણ કેવુ હોય ?' આ સમસ્યાનુ સમાધાન એ છે કે ધર્મસ્વલક્ષણ સર્વ [દર્શનોના] આગમોથી પરિશુદ્ધ [માન્ય અથવા અબાધિત] હોય, કારણ કે સામાન્યથી ધર્મ સર્વ દર્શનોનો વિષય છે તથા ધર્મનુ સ્વલક્ષણ તે હોય કે જે પ્રારભે, મધ્યે અને અતે કલ્યાણસ્વરૂપ હોય, મતલબ કે વચ્ચે કાલિક અતર ન પડવાથી સર્વદા સુદર હોય, આ બે શરતનુ જેમા પાલન થતુ હોય તે ધર્મનુ સ્વલક્ષણ બની શકે [૩/૧]

**વિશેષાર્થ** - સર્વ દર્શનકારો ધર્મનો અગીકાર કરે છે ભલે તેનુ નામ બૌદ્ધ, જૈન, સ્વામીનારાયણ, વેદાન્ત વગેરે અલગ

एको हीनो विघ्नजयः, अपरो मध्यमः, अन्यस्तूत्कृष्ट इति । त्रैविध्यमेव निदर्शनगर्भविशेषणेन समर्थयति --> मार्गे प्रवृत्तस्य पुंस इह = जगति ये कण्टक-ज्वर-मोहाः = कण्टकपादवेध-ज्वरोत्पत्ति-दिङ्मोहोत्पादा विघ्ना अस्खलिता-विह्वल-नियतदिक्प्रवृत्तिप्रतिबन्धकाः तज्जयाश्च विशिष्टप्रवृत्तिहेतवः तत्समोऽयं धर्मस्थानेऽपि कण्टकानां (= कण्टक-स्थानीयानां) शीतोष्णादीनां ज्वरकल्पानां शारीररोगाणां दिङ्मोहकल्पस्य च मिथ्यात्वस्य जयः परिषहतितिक्षया आरोग्यहेतुविहिताऽऽहारादिप्रवृत्ति-मनोविभ्रमापनायकसम्यक्त्वभावनया च जनितो यथोत्तरमधिकः त्रिविधोऽपि समुदितः, प्रवृत्तिः अधिकृतधर्मस्थानविषया फलं यस्य स तथा, अल्पस्याऽपि विघ्नस्य सत्त्वे कार्याऽसिद्धेरित्यव-

**कल्याणकन्दली**

न सम्भवतीत्यत 'कण्टकपादवेधे'त्युक्तम्, अग्रेऽस्खलितप्रवृत्तिबन्धकत्वमविह्वलप्रवृत्तिप्रतिबन्धकत्वं नियतदिक्प्रवृत्तिप्रतिबन्धकत्वं यथाक्रमं कण्टकपादवेधादिष्वन्वेति । न च मूलग्रन्थस्थस्य मोहपदस्य योगदीपिकाकृतो दिङ्मोहपरत्वव्याख्यानं कथं युक्तमिति शङ्कनीयम्, समयपरिभाषायाः तथैव व्यवस्थितत्वात्, --> मूढा उ दिसाविभागममुणेता <-- [४३०६] इति निशीथभाष्यस्य धर्मिपरं तद्व्याख्यानमपि संवदत्यत्र । विशिष्टप्रवृत्तिहेतवः इति । जिगमिषोः कण्टकजयोऽस्खलितप्रवृत्तिहेतुः ज्वरजयोऽविह्वलपादन्या-सादिप्रवृत्तिहेतुः दिग्भ्रमात्मकमोहस्य जयो नियताभिप्रेतदिक्प्रवृत्तिहेतुरित्यर्थः । बाह्यविघ्नजयेनाऽऽशयभेदश्चोपलक्ष्यते । अतो नाशयरूपताऽस्य व्याहतेति ध्येयम् । कण्टकानां = कण्टकस्थानीयानां शीतोष्णादीनां आदिपदेन क्षुत्पिपासादीनां ग्रहणम् । समुदितविघ्नविजयत्रितयस्याधिकृतधर्मस्थानप्रवृत्तिफलकत्वे हेतुमाह --> अल्पस्यापि विघ्नस्य सत्त्वे कार्याऽसिद्धेः । तदुक्तं टीकाकृता ऐन्द्रस्तुतिचतुर्विंशतिकावृत्तौ --> न हि सति आधिलेशेऽपि श्रुतपाठो भवति प्रभवति वा कार्याय <-- [७/२] इति । अवशिष्टमतिरोहितार्थम् । तथापि सोपयोगितया टीकाकृन्निर्मिता योगविंशिकावृत्तिर्दर्श्यते । तथाहि --> "विघ्नजयो नाम विघ्नस्य जयोऽस्मादिति व्युत्पत्त्या धर्मान्तरायनिवर्त्तकः परिणामः । स च जेतव्यविघ्नत्रैविध्यात्त्रिविधः । तथाहि 'यथा कस्यचित् कण्टकाऽऽकीर्णमार्गमवतीर्णस्य कण्टकविघ्नो विशिष्टगमनविघातहेतुर्भवति, तदपनयनन्तु पथि प्रस्थितस्य निराकुलगमन-सम्पादकं तथा मोक्षमार्गप्रवृत्तस्य कण्टकस्थानीयशीतोष्णादिपरिषहैरुपद्रुतस्य न निराकुलप्रवृत्तिः, तत्तितिक्षाभावनया तदपाकरणे त्वनाकुलप्रवृत्तिसिद्धिरिति कण्टकविघ्नजयसमः प्रथमो हीनो विघ्नजयः । 'तथा तस्यैव ज्वरेण भृशमभिभूतस्य निराकुलगमनेच्छोरपि तत्कर्तुमशक्नुवतः कण्टकविघ्नादधिको यथा ज्वरविघ्नस्तज्जयश्च विशिष्टगमनप्रवृत्तिहेतुस्तथेहापि ज्वरकल्पाः शारीरा एव रोगा विशिष्टधर्मस्थानाराधनप्रतिबन्धकत्वाद्विघ्नास्तदपाकरणञ्च 'हियाहारा मियाहारा' [पि नि ६४८] इत्यादिसूत्रोक्तरीत्या तत्कारणा-नासेवनेन, 'न मत्स्वरूपस्यैते परिषहा लेशतोऽपि बाधकाः किन्तु देहमात्रस्यैवे'ति भावनाविशेषेण वा सम्यग्धर्माराधनाय समर्थ[त्व]मिति ज्वरविघ्नजयसमो मध्यमो द्वितीयो विघ्नजयः । 'यथा च तस्यैवाध्वनि जिगमिषोर्दिग्मोहविघ्नोपस्थितौ भूयो भूयः प्रेर्यमाणस्याऽप्यध्वनीनैर्न गमनोत्साहः स्यात्तद्विजये तु स्वयमेव सम्यग्ज्ञानात् परैश्चाभिधीयमानमार्गश्रद्धानात् मन्दोत्साहतात्यागेन विशिष्टगमनसम्भवस्तथेहापि मोक्षमार्गे दिग्मोहकल्पो मिथ्यात्वादिजनितो मनोविभ्रमो विघ्नस्तज्जयस्तु गुरुपारतन्त्र्येण मिथ्यात्वादि-

ઉત્કૃષ્ટ વિઘ્નજય જાણવો અર્થાત્ એક હીન વિઘ્નજય, બીજો મધ્યમ વિઘ્નજય, ત્રીજો ઉત્કૃષ્ટ વિઘ્નજય-આમ વિઘ્નજયના ત્રણ ભેદ છે. વિઘ્નજયના ત્રણ ભેદનું જ ઉદાહરણગર્ભિત વિશેષણ દ્વારા સમર્થન કરતા શ્રીમદ્જી જણાવે છે કે દુનિયામાં માર્ગમાં [આગળ વધવા] પ્રવૃત્ત થયેલ પુરુષને પગમાં કાંટો વિંધાઈ જવો, તાવ આવવો અને દિગ્મોહ = દિશાભ્રમ થવો, - આ ત્રણ વિઘ્ન આવી શકે. પગમાં કાંટો લાગે તો તે અસ્ખલિત રીતે માર્ગમાં ગતિસ્વરૂપ પ્રવૃત્તિનો પ્રતિબંધક બને છે. તાવ આવે તો નબળાઈના કારણે શરીર ધ્રૂજવાને લીધે વિહ્વળતા વિના પગ મૂકીને ચાલવામાં તે પ્રતિબંધક બને. તથા જો પશ્ચિમ દિશામાં પૂર્વ દિશાનો ભ્રમ થઈ જાય તો તે દિશાભ્રમ પૂર્વદિશામાં ગમન કરવામાં પ્રતિબંધક બને. ઉગમણી દિશાએ જવા નીકળેલો આથમણી દિશાએ પહોંચી જાય. તે વિઘ્નોનો જય થાય તો તે વિશિષ્ટ પ્રવૃત્તિમાં હેતુ બને. અર્થાત્ પગમાં કાંટો ન લાગે તો અસ્ખલિત રીતે માર્ગમાં આગળ વધી શકાય. તાવ ન આવે તો વિહ્વળતા વિના પથમાં પ્રયાણ થઈ શકે. તથા દિશાભ્રમ ન થાય તો પોતાને જે દિશામાં જવું છે તે જ દિશામાં લક્ષ્ય તરફ આગળ વધાય.

ધર્મસ્થાનમાં પણ કંટકસ્થાનીય ઠંડી, ગરમી વગેરે હીન વિઘ્નો, તાવસમાન શારીરિક રોગાત્મક મધ્યમ વિઘ્નો અને દિગ્મોહતુલ્ય મિથ્યાત્વસ્વરૂપ ઉત્કૃષ્ટ વિઘ્ન સંભવી શકે છે. ઠંડી, ગરમી વગેરે વિઘ્નોને જીતવામાં પરિષહને સહન કરવાની પ્રબળ ઈચ્છા કારણ બને. આરોગ્યનો હેતુભૂત પથ્ય-હિત-મિત એવો શાસ્ત્રવિહિત આહાર લેવાની પ્રવૃત્તિ દ્વારા શારીરિક રોગ વગેરે મધ્યમ વિઘ્નને જીતી શકાય. મનના વિશિષ્ટ ભ્રમોને-શંકાઓને દૂર કરનાર સમ્યક્ત્વની હેયોપાદેયવિષયક યથાર્થ ભાવના દ્વારા મિથ્યાત્વસ્વરૂપ ઉત્કૃષ્ટ વિઘ્નને સરળતાથી જીતી શકાય. આ ત્રણેય વિઘ્નજય ઉત્તરોત્તર અધિક = ચઢિયાતા છે. અર્થાત્ પ્રથમ વિઘ્નજય જઘન્ય કક્ષાનો છે. દ્વિતીય વિઘ્નજય મધ્યમ કોટિનો છે. જ્યારે તૃતીય વિઘ્નજય ઉત્કૃષ્ટ છે. આ ત્રણેય વિઘ્નજય ભેગા થાય તો અધિકૃતધર્મસ્થાનવિષયક પ્રવૃત્તિસ્વરૂપ ફલ ઉત્પન્ન થઈ શકે, કારણ કે અલ્પ પણ વિઘ્ન હોય તો કાર્યસિદ્ધિ થતી નથી- એમ જાણવું. ૩૫૦ ગાથાના

सेयम्' ॥३/९॥

सिद्धिं लक्षयति --> सिद्धि रित्यादि ।

**सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया । अधिके विनयादियुता हीने च दयादिगुणसारा ॥३/१०॥**

**सिद्धि** चतुर्थाशयरूपा **इह** = आशयविचारे **तस्य तस्या**भिप्रेतधर्मस्थानस्याऽहिंसादेरवाप्ति **तात्त्विकी** = स्वानुषङ्गेण नित्यवैराणामपि वैरादिविनाशकत्वेन पारमार्थिकी **ज्ञेया** । सा च सिद्धि अधिके पुरुषविशेष-

कल्याणकन्दली

प्रतिपक्षभावनया मनोविभ्रमापनयनादनवच्छिन्नप्रयाणसम्पादक इत्यय मोहविघ्नजयसम उत्तमस्तृतीयो विघ्नजय । एते च त्रयोऽपि विघ्नजया आशयरूपा समुदिता प्रवृत्तिहेतव, अन्यतरवैकल्येऽपि तदसिद्धेरित्यवधेयम्'' <-- [यो वि १/पृ २/३] इति । उत्तमास्तु विघ्नजयवन्त एव । तदुक्त --> प्रारभ्यते न खलु विघ्नभयेन नीचै, प्रारभ्य विघ्नविहता विरमन्ति मध्या । विघ्न पुनरपि प्रतिहन्यमाना प्रारभ्यमुत्तमजना न परित्यजन्ति ॥ <-- [ ]

इदञ्चात्रावधेयम् - कण्टकस्थानीयाना शीतोष्णादीना विघ्नत्व बाह्यापेक्षयैव । अत उपलक्षणेन मन्दज्वलनकषायाऽनाभोग-मन्दार्त्तध्यान-जघन्याशुभलेश्या-गारव-सज्ञान्तरायानादेयादीनामन्तरङ्गापेक्षया कण्टकस्थानीयविघ्नत्वमवगन्तव्यम् । एवमेवाऽप्रत्या-ख्यान-प्रत्याख्यानकषायाऽविरति-तीव्रार्त्तध्यान-मध्यमाशुभलेश्या-गारव-सज्ञान्तरायादीनामन्तरङ्गत्वेन ज्वरस्थानीयविघ्नत्वमवसेयम् । तथाऽनन्तानुबन्धिकषाय-रौद्रध्यान-तीव्राशुभलेश्या-गारव-सज्ञादीना मिथ्यात्वोपलक्षकानामन्तरङ्गत्वेन दिङ्मोहस्थानीयविघ्नत्वम-वसातव्यम् । अनार्यदेशजन्मातिदारिद्र्य-दूषितहीनाङ्गोपाङ्ग-दुष्कुलजन्म-धर्मद्वेषिकुटुम्बप्राप्ति-कल्याणमित्राप्राप्ति-सद्गुरुविरह-धर्म-साधनाऽयोग-कुगुरुसयोग-प्रचुरपापसाधनसयोगाऽभिनिविष्टसम्प्रदायगृहवासाऽकल्याणमित्रयोगाऽतिदुर्बलशरीरादीना विशिष्टधर्मस्थान-प्राप्तौ बहिरङ्गत्वेन दिङ्मोहस्थानीयविघ्नत्वमवगम्यम् । तज्जयोपायाश्च यथागममूहनीया । प्रकृते मेघकुमारोदाहरण कण्टकविघ्नजये दहनसुरदृष्टान्तो ज्वरविघ्नजये अर्हद्दत्तकथानकञ्च मोहविघ्नजये भावनीयम् । यथोक्त उपदेशपदे --> मेहकुमारो एत्थ इहणसुरो चेव अरिहदत्तो य । आहरणा जहसख विन्नेया समयनीतीए ॥२६३॥ <-- दृष्टान्तस्वरूप तु तद्वृत्तितोऽवसेयम् ॥३/९॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> अधिके विनयादियुता हीने च दयादिगुणसारा तत्तद्धर्मस्थानावाप्ति इह तात्त्विकी सिद्धि ज्ञेया ॥३/१०॥ इयमपि कारिका **योगविंशिकावृत्ति-कूपदृष्टान्तविशदीकरणवृत्त्यादौ** टीकाकृतोद्धृता [यो विं १/पृ ३/कू वि गा १३ वृ] **स्वानुषङ्गेण** = स्वसान्निध्येन **नित्यवैराणामपि** = जात्या बद्धवैराणामपि सर्प-नकुलादीना **वैरादिविनाशकत्वेन** = तत्कालमेव वैरादित्याजनेन **पारमार्थिकी ज्ञेया** । तदुक्त **ज्ञानार्णवे शुभचन्द्रेण** --> सारङ्गी सिहशाव स्पृशति सुतधिया नन्दिनी व्याघ्रपोत, मार्जारी हसबाल प्रणयपरवशा केकिकान्ता भुजङ्गम् । वैरीण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति, श्रित्वा साम्यैकरूढ प्रशमितकलुष योगिन क्षीणमोहम् ॥ <--[ज्ञा २४/२६-पृ २७०] इति । तदुक्त **पातञ्जलयोगसूत्रे**ऽपि --> अहिंसाप्रतिष्ठाया तत्सन्निधौ वैरत्याग <-- [२/३५] इति । **बलभद्रमुनिप्रभृतय**श्चाऽत्र दृष्टान्तत्वेन ज्ञेया । एवमेव सत्यादि-सिद्धौ तत्सामीप्ये स्वरसत सर्वदा मिथ्याभाषिप्रभृतीनामपि मृषाभाषणादित्याग बोध्य । उपलक्षणात् सिद्ध्यन्तरघटनकारित्वेन पारमार्थिकत्वमस्या बोध्यम्, अन्यथा सम्प्रत्यपातेऽपि पातशक्त्यनुवेधेन पात एवासौ । तदुक्त **योगबिन्दौ** --> सिद्ध्यन्तरस्य सद्बीज या सा सिद्धिरिहोच्यते । ऐकान्तिक्यन्यथा नैव, पातशक्त्यनुवेधत ॥ सिद्ध्यन्तर न सन्धत्ते, या साऽवश्य पतत्यत । तच्छक्त्याऽप्यनुविद्धैव, पातोऽसौ तत्त्वतो मत ॥ सिद्ध्यन्तराङ्गसयोगात्, साध्वी चैकान्तिकी भृशम् । आत्मादिप्रत्ययोपेता, तदेषा नियमेन तु ॥ <-- [यो.बि २३३/३४/३५] इति । अत एव प्रथमगुणस्थानवर्तिना परदर्शनिना स्वसान्निध्येनाहिनकुलादि-

स्तवनमा जणावेल छे के --> विना विघनजय साधुने रे, नवि अविच्छिन्न प्रयाण रे, किरियाथी शिवपुरी होय रे, केम जाणे अन्नाण रे <-- आ बहु मार्मिक वात छे [३/९]

सिद्धिनु लक्षण बतावता मूलकारश्री फरमावे छे के –

**गाथार्थ** - अधिक[गुणवान]ने विशे विनयादियुक्त अने हीनने विशे दयादिगुणप्रधान एवी ते ते धर्मस्थाननी प्राप्ति अही तात्त्विक सिद्धि जाणवी [३/१०]

## सिद्धिनिरूपण

**टीकार्थ** - प्रस्तुत आशयविशेषनी विचारणामा चोथा आशयस्वरूप सिद्धि तेने जाणवी के जे अधिकृत अहिंसा वगेरे धर्मस्थाननी प्राप्तिस्वरूप होय जे प्राणीओमा कायम वेर-दुश्मनावट होय तेवा जीवोना पण वेर-दुश्मनावट वगेरेनो पोताना सान्निध्यथी

१ नवमकारिकावृत्तौ ह प्रतौ चत्वारोऽशुद्धा पाठा ।

सूत्रार्थोभयनिष्णाते तीर्थकल्पे गुरौ विनयादिना [1]युता, आदिना वैयावृत्त्य-बहुमानादिग्रह । **हीने च** = स्वापेक्षया हीनगुणे निर्गुणे वा **दयादिगुणेन** = दया-दान-दु खोद्धाराद्यभिलाषेण सारा = प्रधाना । उपलक्षणात् मध्यमोपकारफलवतीत्यप्यवसेयम् ॥३/१०॥

**कल्याणकन्दली**

वैरादिविनाशकानामहिसादिसिद्धेरनुबन्धविकलत्वे तु पारमार्थिकसिद्धित्वहिर्भावोऽवगन्तव्य. ।

इदश्चाऽत्रावधातव्यम् --> इच्छाप्रवृत्तिस्थैर्यसिद्धिभेदेन चतुर्धा योगविभागे त्विय स्थैर्ययोगेऽवतरति, दर्शितहेतुद्वयव्यङ्ग्यपारमार्थिकत्वकलितत्वेनाऽतिचारादिविपक्षचिन्तारहितत्वात् । तदुक्त **योगदृष्टिसमुच्चये** --> विपक्षचिन्तारहित, यमपालनमेव यत् । तत्स्थैर्यमिह विज्ञेय, तृतीयो यम एव हि ॥२१७॥ <-- इति । 'तृतीयो यम' इति स्थिरयम इति । तदुक्त **योगविशिकायामपि** --> तह चेव एयबाहगचितारहिय थिरत्तण नेय <--[यो वि ६] इति । यद्वेच्छादिभेदेन चतुर्धा योगविभागेऽपि तत्सन्निधौ वैरत्यागात् परार्थसाधकत्वेनेय सिद्धिरेवावसेया । तदुक्त **योगदृष्टिसमुच्चये** --> परार्थसाधक त्वेतत्सिद्धि शुद्धान्तरात्मन । अचिन्त्यशक्तियोगेन चतुर्थो यम एव तु ॥२१८॥ इति । 'चतुर्थो यम' <-- इति सिद्धियमाभिधानयोग इत्यर्थ । तदुक्त **योगविशिकायामपि** --> सव्व परत्थसाहगरूव पुण होइ सिद्धि त्ति <--[यो.वि ६] इति । अनेनाऽऽभ्यासिकमात्राऽहिसाद्युपलब्धे तात्त्विकसिद्धिवहिर्भावो द्योतित ।

**गुरो** = स्वापेक्षया गौरवार्हे । **हीने च दयादिगुणेन प्रधानेति**, अन्यथा स्वस्यैव तात्त्विकधर्माऽभाजनत्व स्यात्, कठोरचित्तस्य धर्माऽयोग्यत्वात् । तदुक्त --> दीन हीन जन दृष्ट्वा, कृपा यस्य न जायते । सर्वज्ञभाषितो धर्मस्तस्य चित्ते न विद्यते ॥ <-- [ ] इति । 'आद्यन्तयोर्ग्रहणे तन्मध्यपतितोऽपि गृह्यते' इति न्यायेन **उपलक्षणात्** = अधिक-हीनपदयो उपलक्षणत्वात् = स्वार्थबोधकत्वे सति स्वार्थेतरार्थबोधकत्वात् **मध्यमोपकारफलवती** = मध्यमगुणे स्वापेक्षया तुल्यगुणे वा उपकारान्विता स्वनिष्ठकार्यतानिरूपितकारणतासम्बन्धेन मध्यमगुणोद्देश्यकोपकारविशिष्टेत्यर्थ । तदुक्त टीकाकृता **योगविशिकावृत्तौ** --> अतिचाररहिताधिकगुणे गुर्वादौ विनय-वैयावृत्त्य-बहुमानाद्यन्विता हीनगुणे निर्गुणे वा दया-दान-व्यसनपतितदु खापहारादिगुणप्रधाना मध्यमगुणे चोपकारफलवत्यधिकृतधर्मस्थानस्याऽहिसादे प्राप्ति सिद्धि <--[यो.वि १/पृ ३] इति । तदुक्त **योगलक्षणद्वात्रिशिकायामपि** --> सिद्धिस्तात्त्विकधर्माप्ति साक्षादनुभवात्मिका । कृपोपकारविनयान्विता हीनादिषु क्रमात् ॥ <--[द्वा द्वा.१०/१४] इति । अनुभवात्मिकेत्यनेनाभव्यादिद्रव्यलिङ्गिसन्निधौ वैरत्यागेऽपि तेषा तात्त्विकसिद्धिविरह उपदर्शित. । न हि ते तात्त्विकाहिसादिधर्मस्थान स्वरसेन साक्षादनुभवन्ति ।

इदश्चात्र ध्यातव्यम् --> अधिके विनयादियुक्तत्वेनौद्धत्याहङ्कारादिशून्यत्वमुपदर्शितम्, मध्यमे उपकारान्वितत्वाभिधानेन तस्येर्ष्याऽसुया-मात्सर्य-द्वेष-सन्ताप-कलहवृत्ति-परपरिवादपरिणामादिपरिहारो द्योतित । हीने दयादिसारत्वोक्त्या क्षुद्रता-तुच्छता-निन्दा-तिरस्काराद्यत्यन्तविरहो विद्योतित । न ह्यतात्त्विकधर्मसिद्धेरजीर्णकल्पा औद्धत्याहङ्कारेर्ष्यादय तात्त्विकधर्मसिद्धौ सम्भवन्ति । तदुक्त --> तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगण । तमस कुतोऽस्ति शक्ति दिनकरकिरणाग्रत स्थातुम् ॥ <-- [ ] इति । वस्तुत तस्य सर्वज्ञमतविज्ञानमेव नास्ति । तदुक्त **उपदेशमालाया** --> बत्थिव्व वायुपुण्णो परिभमई जिणमय अयाणतो । थद्धो निव्विन्नाणो, न य पिच्छइ कचि अप्पसम ॥३८१॥ <-- इति । **उत्तराध्ययने**ऽपि --> आयरिय-

નાશ કરવાના લીધે તે સિદ્ધિને તાત્ત્વિક = પારમાર્થિક જાણવી આ પારમાર્થિક સિદ્ધિ સૂત્રાર્થઉભયમા નિપુણાત એવા તીર્થસમાન ગૌરવાર્હ પુરુષને વિશે વિનયાદિથી યુક્ત હોય આદિપદથી વૈયાવચ્ચ, બહુમાન વગેરે પણ સમજી લેવાના તથા પોતાની અપેક્ષાએ હીનગુણવાળા અથવા નિર્ગુણને વિશે દયા, દાન, દુ ખોદ્ધારાદિના અભિલાષથી પ્રધાન હોય [અધિક-હીનના] ઉપલક્ષણથી મધ્યમગુણવાળાને વિશે ઉપકારાત્મક ફલની જનક હોય- એમ જાણવુ [૩/૧૦]

## ❦ ધર્મસિદ્ધિના અજીર્ણથી દૂર રહો ❦

<u>**વિશેષાર્થ**</u> - સિદ્ધિનો અર્થ છે અહિસા વગેરે તે તે ધર્મસ્થાનની પ્રાપ્તિ તે તાત્ત્વિક તો જ કહી શકાય જો તેના સાન્નિધ્યથી દૂર વૈરી એવા જીવોના વેર વગેરે શમી જાય સિદ્ધ થયેલા ધર્મનો પ્રભાવ જ એવો છે કે પોતાની આસપાસના જીવોમા પોતાને પ્રાપ્ત થયેલ ધર્મનો સક્રમ થઈ જ જાય તથા જો સિદ્ધિ પારમાર્થિક ન હોય તો તે સિદ્ધપુરુષ પોતાનાથી અધિકગુણસપન્ન ગૌરવયોગ્ય વ્યક્તિ વિશે પણ ઉદ્ધત, અક્કડ બને આ અભિમાન સિદ્ધિનુ અજીર્ણ છે તેમ જ તે સિદ્ધિની અતાત્ત્વિકતાના લીધે તેને સમાન ગુણવાળા, મધ્યમગુણવાળા જીવોની ઈર્ષ્યા, નિદા વગેરેનો ચેપી રોગ પણ લાગુ પડે અને પોતાનાથી હીનગુણવાળા કે નિર્ગુણ પુરુષનો ધિક્કાર, તિરસ્કાર પણ કરે જો આવુ હોય તો દેખાતી ધર્મસિદ્ધિ ચોક્કસ નકલી જ હોય અસલી ધર્મસિદ્ધિ હોય તો

[1] ह प्रतो 'युता, आदिना' इति नास्ति ।

विनियोगं लक्षयति —> 'सिद्धेश्चे'त्यादि ।

सिद्धेश्चोत्तरकार्यं विनियोगोऽवन्ध्यमेतदेतस्मिन् । 'सत्यन्वयसम्पत्त्या सुन्दरमिति तत्परं यावत् ॥३/११॥

सिद्धेश्च उत्तरकालभावि कार्यं विनियोगो नाम आशयभेदो विज्ञेयः । एतत् = विनियोगाख्यं सिद्ध्युत्तरकार्यं अवन्ध्यं = न कदाचिन्निष्फलम्, एतस्मिन् सति = सञाते अन्वयसम्पत्त्या = भङ्गेऽपि सुवर्णघटन्यायेन सर्वथा फलानपगमात् विनियोजितधर्मापगमेऽपि भूयो झटिति तत्संस्कारोद्बोधसम्भवादनेकजन्मान्तरसन्तानक्रमेणाऽविच्छेद-सम्पत्त्या हेतुभूततया इति हेतोः तत् = सिद्ध्युत्तरकार्यं परं शैलेशीलक्षणं सर्वोत्कृष्टधर्मस्थानं यावत् सुन्दरं

कल्याणकन्दली

उवज्झाणहि, सुय विणय च गाहिए। ते चेव खिसइ बालो, पावसमणुत्ति वुच्चइ ॥[१७/४] <— इति प्रोक्तम् । क्षुद्रादय-स्त्वत्यन्तमयोग्या धर्मस्थानस्य । सिद्धिकृते च विघ्नजयवत् योगशास्त्राचारप्रदीपादिदर्शिता महाव्रत-दर्शन-ज्ञान-चारित्रादिभावना अनित्यादि-मैत्र्यादिभावनाश्चाऽऽसेवनीयाः ॥३/१०॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> सिद्धेश्च उत्तरकार्यं विनियोगः, एतत् अवन्ध्यम्, एतस्मिन् सति अन्वयसम्पत्त्या इति तत् परं यावत् सुन्दरम् ॥३/११॥ इयमपि कारिका योगविंशिकावृत्ति-कूपदृष्टान्तविशदीकरणवृत्त्यादौ सवादित्वेनोद्धृता । योगविंशिकावृत्तौ चास्या व्याख्यालेशस्तट्टीकाकृता —> अवन्ध्यं = न कदाचिन्निष्फलं, एतत् = धर्मस्थानमहिंसादि, एतस्मिन् = विनियोगे सति अन्वयसम्पत्त्या = अविच्छेदभावेन, तत् = विनियोगाख्यं धर्मस्थानं सुन्दरम्, 'इति' भिन्नक्रमः समाप्त्यर्थश्च, यावत्परमित्येव योगः, यावत् 'परं' = प्रकृष्टं धर्मस्थानं समाप्यत इत्यर्थः <— इत्येवमुपदर्शितं । 'सिद्धेश्चोत्तरकार्यमि'त्यनेन स्वस्याऽनुपशान्तत्वे परस्मिन्नुपशमाधानाधिकारित्वमपाकृतम् । तदुक्तं पञ्चकल्पभाष्ये —> जो सगिहं पलित्तं अलसो तु न विज्झवे पमाएण । सो न वि समद्दहियव्वो परघरदाहप्पसमणम्मि ॥ <— [१३०३] इति ।

ननु सिद्धाऽहिंसाना सर्पापि हिंसाशीला अपि हिंसां कर्तुं नालमिति स्वीकुर्मः किन्तु तत्सन्निधानविरहे पुनरपि ते हिंसाव्यापृता भवन्त्येव । न हि समवसरणगताः सिंह-व्याघ्र-सर्प-नकुलादयः तदुत्तरकालं सर्वदा सर्वेऽपि हिंसां त्यजन्त्येवेत्येकान्तो जिनागमवेदिभिरपि स्वीक्रियते । ततश्च विनियोगस्य वन्ध्यत्वमेव विनियोजितधर्मस्य प्रच्यवादिति । एवमेव सिद्धाऽहिंसानामपि योगिनाममुत्र भवितव्यतादिनियोगेन सर्प-सिंहादिगतौ हिंसनशीलत्वमपि सम्भवति । ततश्च न परापेक्षया न वा स्वापेक्षया विनियोगस्याऽवन्ध्यत्वनियमो युक्त इति चेत् ? अत्र वदन्ति-सुवर्णघटन्यायेन सर्वथा = हेतुरूपेण फलानपगमात् = फलाऽवि-नाशात् । घटत्वेन रूपेण सौवर्णघटभङ्गेऽपि सुवर्णत्वेन रूपेण तु सुवर्णघटलक्षणस्य फलस्याऽविनाशवत् तथाविधकषायोदयात् विनियोजितधर्मापगमेऽपि = विनियोजितधर्मत्वेन रूपेण विनियोजितस्य धर्मस्य नाशेऽपि तत्संस्काररूपेणाऽविनाशात् तद्व्यक्त्य-भावेऽपि तच्छक्त्यनपगमात्, भूयो झटिति तत्संस्कारोद्बोधसम्भवात् = विनियोजितधर्मगोचरवासनाभिव्यक्तियोगात् अनेकजन्मा-न्तरसन्तानक्रमेण अविच्छेदसम्पत्त्या = स्व-परयोः पुनर्विनियोजितधर्मघटनसम्पत्त्या हेतुभूततया, एतत् अवन्ध्यमिति बोध्यम् ।

અધિક-ગુણસંપન્ન યોગી પુરુષનો વિનય, ભક્તિ, બહુમાન, વૈયાવચ્ચ વગેરે કરવામાં તે તત્પર હોય તથા સમાન ગુણવાળા કે મધ્યમગુણવાળા પુરુષને સહાય, મદદ કરવામાં તે સંકોચ ન રાખે અને ગુણહીન પુરુષને વિશે કરુણાથી તેનું હૈયું ભીનું હોય. આ પ્રાપ્ત થયેલ તાત્ત્વિક ધર્મસિદ્ધિની ઓળખ છે. ૩૫૦ ગાથાના સ્તવનમાં જણાવેલ છે કે —> વિનય અધિક ગુણ સાધુનો રે, મધ્યમનો ઉપગાર રે, સિદ્ધિ વિના હોવે નહિ રે, કૃપા હીનની સાર રે <— [૩/૧૦]

વિનિયોગનું લક્ષણ બતાવતા મૂલકારશ્રી કહે છે કે —

ગાથાર્થ - સિદ્ધિનું ઉત્તરકાલીન કાર્ય વિનિયોગ છે. આ અમોઘ છે [કારણ કે] આ વિનિયોગ હોતે છતે અવિચ્છિન્નતાની પ્રાપ્તિ થાય છે. એ કારણે તે વિનિયોગ શ્રેષ્ઠ ધર્મસ્થાન સુધી સુંદર છે. [૩/૧૧]

## ❀ વિનિયોગ સ્વરૂપ પ્રતિપાદન ❀

ટીકાર્થ - સિદ્ધિના ઉત્તર કાલમાં થનાર કાર્યને વિનિયોગ નામનો આશયવિશેષ જાણવો. સિદ્ધિનું ઉત્તરકાલીન વિનિયોગ નામનું કાર્ય ક્યારેય પણ નિષ્ફલ જતું નથી. આનું કારણ એ છે કે વિનિયોગ થયે છતે કદાચ તે બાહ્ય ધર્મ અનુષ્ઠાનરૂપે ભાંગી પડે તો પણ સુવર્ણઘટન્યાયથી સર્વથા ફલ ચાલી નથી જતું. જેમ સોનાનો ઘડો ભાંગી જાય તો પણ સુવર્ણરૂપે તો તે હાજર જ રહે છે તેમ અન્યમાં વિનિયોગ કરેલ ધર્મ કદાચ ચાલી જાય તો પણ ફરી ઝડપથી, વિનિયોગ કરેલ ધર્મના સંસ્કારની અભિવ્યક્તિ સંભવ હોવાથી અલગ અલગ અનેક જન્મની પરંપરાથી ક્રમે કરીને અવિચ્છિન્નરૂપે વિનિયોજિત ધર્મ પ્રાપ્ત થાય છે. આમ વિનિયોગ

१ मुद्रितप्रतौ तु 'सत्यन्वयसम्पत्त्या' इत्यशुद्धः पाठः । २ मुद्रितप्रतौ - 'उत्तरकालभावकार्यं' इति पाठः ।

परोपकारगर्भशक्त्या तीर्थकरविभूतिपर्यन्तसुन्दरविपाकार्पकम्[१] । अय विनियोगफलोपदेश । लक्षणन्तु स्वात्मतुल्यपरफलकर्तृत्वमित्यवसेयम् ॥३/११॥

एवमेतान् प्रणिधानादीनुक्त्वा एषा भावत्वसमर्थनायाऽऽह —> 'आशये'त्यादि ।

**आशयभेदा एते सर्वेऽपि हि तत्त्वतोऽवगन्तव्याः । भावोऽयमनेन विना चेष्टा द्रव्यक्रिया तुच्छा ॥३/१२॥**

कल्याणकन्दली

न चान्वयसम्पत्त्या हेतुत्वलाभ कथमिति शङ्कनीयम्, 'हेतु-कर्तृ-करणेत्थम्भूतलक्षणे तृतीया' [सि हे २/२/४४] इति **सिद्धहेमसूत्रेण** प्रकृते तृतीयाया हेतुत्वार्थकत्वाभ्युपगमात् । इत्थञ्च तथाविधकषायोदयात् स्वकीयसदनुष्ठानभङ्गेऽपि भावानुवेधात् सानुबन्ध शुभोदयमेव तदिति दर्शितम् । तदुक्त **योगबिन्दौ** —> भाववृद्धिरतोऽवश्य सानुबन्ध शुभोदयम् । गीयतेऽन्यैरपि ह्येतत्, सुवर्णघटसन्निभम् ॥३५१॥ <— इति । इदमेवाभिसन्धाय टीकाकृताऽपि **योगलक्षणद्वात्रिंशिकाया** —> रसानुवेधात्ताम्रस्य हेमत्व जायते यथा । क्रियाया अपि सम्यक्त्व तथा भावानुवेधत ॥ भावसात्म्येऽत एवास्या भङ्गेऽपि व्यक्तमन्वय. । सुवर्णघटतुल्या ता ब्रुवते सौगता अपि ॥ <— [द्वा द्वा १०/२३-२४] इत्युक्तम् । परापेक्षया विनियोगस्याऽवन्ध्यत्वमुक्तम् । साम्प्रत स्वापेक्षया तदाह - **परोपकारगर्भशक्त्येति** स्पष्टम् । स्वात्मतुल्यपरफलकर्तृत्वाशस्यैव विनियोगलक्षणत्व चेतसिकृत्य **योगलक्षणद्वात्रिंशिकाया-मपि** टीकाकृता —> अन्यस्य योजन धर्मे विनियोगस्तदुत्तरम् । कार्यमन्वयसम्पत्त्या तदवन्ध्यफल मतम् ॥ <— [द्वा द्वा १०/१५] इति प्रोक्तम् । तदुक्त **योगविंशिकावृत्तावपि** —> स्वप्राप्तधर्मस्थानस्य यथोपाय परस्मिन्नपि सम्पादकत्व विनियोग । अयञ्चानेकजन्मान्तरसन्तानक्रमेण प्रकृष्टधर्मस्थानावाप्तेरवन्ध्यो हेतु <— [यो वि.१/पृ ३] इति ।

इदञ्चात्रावधेय यत् स्वय तप प्रमुखधर्मविकला अपि प्रवचनशक्तिपटव परस्मिन् तपोधर्मादिक सम्पादयन्ति तत्र न विनियोगपदप्रवृत्ति , प्राधान्येन देशनामाहात्म्यविजृम्भितत्वात्तस्य । क्वचित् तत्र वक्तु तपोगोचरविशिष्टबहुमानादिक कारण, क्वचित् वक्तुरादेय-सुस्वर-यशोनामादिकर्मोदय कारण, क्वचिच्च श्रोतुरुपदेशकोपदेश्यादिगोचरादरादिर्हेतु । **एतेन** —> अभव्यगुरूपदेशादिकमवलम्ब्याऽनन्तजीवाना धर्मस्थानप्राप्ति-सिद्धि-कर्ममुक्त्यादिकमपि <— **व्याख्यातम्**, भव्यश्रोतृगतयोग्यता-धर्मदेशनागतस्वरूपशुद्ध्यादेरेव तत्र प्रधानहेतुत्वात् । विनियोगे तूपदेशादे गौणी हेतुता, प्राधान्येन स्वगतविनियोज्यधर्मस्थानगोचरतात्त्विकसिद्धेरेव कारणतेति विवेक· ॥३/११॥

અવધ્ય = અમોઘ = અનિષ્ફળ હોવાથી શૈલેશીકરણ નામના અયોગી ગુણસ્થાનક સ્વરૂપ ધર્મસ્થાન સુધી [સુદૃઢ છે અર્થાત્] પરોપકારગર્ભિત શક્તિ દ્વારા તીર્થંકરનો વૈભવ વગેરે સુધીના સુદર વિપાક = અવાન્તર ફલને આપે છે આ વિનિયોગના ફલનુ વિધાન જાણવુ વિનિયોગનુ લક્ષણ તો - પોતાના જેવા ફલને અન્ય વ્યક્તિમા ઉત્પન્ન કરવુ- આ જાણવુ અર્થાત્ પોતાને પ્રાપ્ત થયેલ ધર્મસ્થાનના જેવુ ધર્મસ્થાન અન્ય જીવમા પણ ઉત્પન્ન કરવુ તે વિનિયોગનુ લક્ષણ છે [૩/૧૧]

<u>**વિશેષાર્થ**</u> - જગલમા સિદ્ધયોગી પુરુષની આસપાસ રહેલા વાઘ, વરુ, સિહ, સાપ, નોળીયા, બિલાડી, ઉદર વગેરે ક્રૂર અથવા પરસ્પર દુશ્મનાવટવાળા પ્રાણીઓના વેરભાવ શાત થઈ જાય છે આ છે અહિસાસિદ્ધિનુ કાર્ય, જેને શાસ્ત્રીય પરિભાષા મુજબ વિનિયોગ કહેવાય છે તે હિસક પ્રાણીઓ સિદ્ધયોગી પુરુષથી દૂર ગયા પછી કદાચ કષાયાદિના ઉદયથી ફરીથી હિસા કરે તો વિનિયોજિત અહિસા ધર્મ વ્યવહારથી નાશ પામ્યો તેવુ કહેવાય પરતુ વાસ્તવમા તે નાશ પામેલ હોતો નથી અહિસાના સસ્કાર તે પ્રાણીઓમા જરૂર પડે છે, જેને અભિવ્યક્ત થવાની સામગ્રી મળતા ફરી તે ઝડપથી અનેક ભવની પરપરા પછી પણ પ્રગટ થાય છે અને તે વ્યક્ત થયેલ અહિસાદિ ધર્મ બળવાન બનતા તે જીવો ધર્મમાર્ગે - મોક્ષમાર્ગે આગળ વધે છે માટે વિનિયોગ નિષ્ફળ નથી જેમ સોનાનો ઘડો નાશ પામે તો પણ સોનુ નષ્ટ થતુ નથી તેમ વિનિયોગનુ ફળ સર્વથા નષ્ટ થતુ નથી સસ્કારરૂપે હાજર રહે છે- આ સૂચવે છે કે ધર્મસ્થાનની અનેક કક્ષાઓ હોય છે અન્ય જીવની અપેક્ષાએ આ વિનિયોગનુ ફળ જાણવુ

આ વિનિયોગ પરોપકારગર્ભિત શક્તિવાળો હોવાના લીધે અનેક આગામી ભવોમા આ ધર્મસ્થાનનો પ્રવાહ ચાલે છે અને વિનિયોગથી તે તે ધર્મસ્થાન સબધી વિશુદ્ધ પુષ્ટ સાનુબધ ક્ષયોપશમ થવાના લીધે સિદ્ધ યોગીપુરુષો પ્રકૃષ્ટ પુણ્યબધ કરી તીર્થંકરની વિભૂતિ-ઐશ્વર્યને પામવા ભાગ્યવતા બને છે યાવત્ શૈલેષીકરણસ્વરૂપ સર્વોત્કૃષ્ટ ધર્મસ્થાન સુધી પહોચવા સમર્થ બને છે આ વિનિયોગનુ ફલ વિનિયોગ કરનારની = પોતાની અપેક્ષાએ છે સ્વતુલ્ય ધર્મસ્થાનને અન્યમા ઉત્પન્ન કરવા સ્વરૂપ વિનિયોગ એ પાચમુ અને અતિમ ધર્મસ્થાન છે વિનિયોગને ઉદ્દેશીને ૩૫૦ ગાથાના સ્તવનમા જણાવેલ છે કે —> વિણ વિનિયોગ ન સભવે રે, પરને ધર્મયોગ રે, તેહ વિના જન્માન્તરે રે નહિ સતતિ સયોગ રે <— [૩/૧૧]

આ રીતે પ્રણિધાન વગેરેને જણાવીને તેમા ભાવત્વનુ સમર્થન કરતા મૂલકારશ્રી કહે છે કે —

<u>**ગાથાર્થ**</u> - આ બધા પણ વાસ્તવમા આશયવિશેષસ્વરૂપ જાણવા આ [પ્રણિધાનાદિ] ભાવ છે આના વિના ચેષ્ટા =

१ मुद्रितप्रतौ - 'विपाकार्थकम्' इति पाठ ।

एते = पूर्वोक्ता **सर्वेऽपि** कथञ्चित्क्रियारूपत्वेऽपि **तत्त्वत** = परमार्थत तदुपलक्ष्या **आशयभेदा अवगन्तव्या** । **अयं** = पञ्चप्रकारोऽप्याशयो भाव उच्यते, उपयोगस्य भावनालक्षणत्वात् । **अनेन** = भावेन **विना चेष्टा** काय-वाङ्-मनोव्यापाररूपा **तुच्छा**, द्रव्यक्रियात्वेन फलाऽजननीत्यर्थ ॥३/१२॥

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> एते सर्वेऽपि तत्त्वत आशयभेदा अवगन्तव्या । अयं भाव , अनेन विना चेष्टा तुच्छा [यत ] द्रव्यक्रिया ॥३/१२॥ इयं कारिका कूपदृष्टान्तविशदीकरणवृत्ति-पञ्चविंशत्युत्तरशतगाथाप्रमितसीमन्धरस्वामिस्तवनटिप्पणाद्रो गृहीता । एवमस्या. कारिकाया उत्तरार्द्धं प्रतिमाशतकवृत्तौ द्विर्गृहीतं [प्र श का ६०/९०] । कथञ्चित् = क्वचित् प्रयत्नातिशयजन्यत्वादिना क्रियारूपत्वेऽपि परमार्थतः = ऐदम्पर्यार्थमाश्रित्य तदुपलक्ष्याः = विशिष्टबाह्यक्रियाद्योतिता अनुबन्धजनकत्वादिरूपेण आशयभेदा अध्यवसायविशेषात्मका एव अवगन्तव्याः । अत एव पञ्चप्रकारोऽपि प्रणिधानादिपदप्रतिपाद्य आशयो भाव उच्यते, उपयोगस्य भावनालक्षणत्वात् । अत एव प्रणिधानादिविशिष्टाऽऽवश्यकक्रिया नोआगमतो भावावश्यकमुच्यते । प्रणिधानाद्यात्मकेन भावेन विना कायवाङ्मनोव्यापाररूपा· चेष्टा तुच्छाः = असारा , अत्र मूलकारे हेतुगर्भविशेषणमुक्तंद्रव्यक्रिया इति । ततश्च प्रणिधानादिशून्या चेष्टा द्रव्यक्रियात्वेन तुच्छेत्यर्थ । अत एव प्रणिधानाद्युपयोगविकलाया यथोक्तविधिसमन्विताया अपि षडावश्यकक्रियाया नोआगमतो द्रव्यावश्यकत्वमाम्नात पूर्वाचार्य । तदुक्त अन्यत्रापि --> 'तक्कविहूणो विज्जो लक्खणहीणो अ पंडिओ लोए । भावविहूणो धम्मो तिन्नि वि नूणं हसिज्जंति ॥ <-- [ ] इति । न च द्रव्यक्रियात्वेऽपि तुच्छता कथ ? योग्यतायामपि द्रव्यपदप्रयोगात्, मूलकारैरेव --> समयम्मि दव्वसद्दो पायं ज जोग्गयाइ रूढोत्ति <-- [पंचा ६/१०] इति पञ्चाशके प्रोक्तत्वादिति शङ्कनीयम्, क्रियाया सत्त्वशुद्धिकारणतावच्छेदककोटौ प्रणिधानादिभावपूर्वकत्वस्य निवेशात्, एकान्तेनैव भावशून्याया कारणतावच्छेदकशून्यत्वेन फलजननेऽकिञ्चित्करत्वात् । ततश्च सा फलाऽजननी = शुभानुबन्धप्रभूतनिर्जरादिलक्षणफलजननाऽप्रत्यला इत्यर्थ । द्रव्यशब्दस्याऽत्राऽप्राधान्यपरत्वात् । तदुक्त मूलकार एव पञ्चाशके --> अप्पाहण्णेऽवि इह कत्थइ दिट्ठो उ दव्वसद्दोत्ति । अगारमद्दगो जह दव्वायरिओ सयाऽभव्वो ॥ <-- [६/१३] इति । भावक्रिययो स्वतन्त्रयो स्वरूप **योगदृष्टिसमुच्चये** --> तात्त्विक पक्षपातश्च भावशून्या च या क्रिया । अनयोरन्तरं ज्ञेय भानुखद्योतयोरिव ॥२२३॥ <-- इत्युक्तम् । युक्तञ्चैतत्, द्रव्यक्षेत्रादिसापेक्षत्वेन क्रियाप्रकर्षस्य मर्यादितत्वात्, विशुद्धस्वस्वभावसापेक्षतया भावप्रकर्षस्य निरवधित्वात् भावस्य क्रियातोऽभ्यर्हितता स्पष्टैव । क्रियाया भावार्थत्व, न तु भावस्य क्रियार्थत्वमित्यतोऽपि भावस्य प्राधान्यम् । तद्युक्ततयैव तदाक्षेपकतयैव वा क्रियाया उपादेयतेति निश्चयानुगृहीतव्यवहारपन्था विभावनीय । अत्राऽस्मदीयकारिके --> फल माधुर्यहीन हि, शरीर विगतचेतनम् । सुगन्धविकल पुष्प, निर्लीनाऽऽलोकनाटकम् ॥१॥ भोजन लवणापेत, च्यूतविद्यो हि पण्डित । प्रणिधानादिशून्या हि धर्मक्रिया तथा मता ॥२॥ <-- इति । प्रणिधानादिशून्याया अन्तर्मालिन्यगर्भाया अचरमावर्त्तिकर्तृकाया धर्मक्रियाया प्रत्यपायाऽऽवहत्वमपि । तदिदमभिसन्धाय **योगलक्षणद्वात्रिंशिकायां** --> एतैराशययोगैस्तु विना धर्माय न क्रिया । प्रत्युत प्रत्यपायाय लोभ-क्रोधक्रिया यथा ॥ <-- [द्वा द्वा १०/१६] इति टीकाकृतोक्तम् । लेशतोऽपि प्रणिधानादिभावयुक्ते बाह्यव्यापारे कथञ्चिद्विधिभङ्गे सति प्रयुज्यमानस्य द्रव्यपदस्य तु योग्यतापरत्वमेवेति विवेक ॥३/१२॥

પ્રવૃત્તિ તુચ્છ છે, [કારણ કે તે] દ્રવ્યક્રિયાત્મક છે [૩/૧૨]

## .... તો ક્રિયામાં ભાવને ઉમેરતા જાવ

**ટીકાર્થ** - પૂર્વે જણાવેલ પ્રણિધાન વગેરે બધાય આંશિક રીતે ક્રિયાસ્વરૂપ હોવા છતા વાસ્તવમા તે વિશિષ્ટ બાહ્ય ક્રિયાથી જણાનાર આશયવિશેષાત્મક = અધ્યવસાયવિશેષસ્વરૂપ જાણવા આ પાચેય પ્રકારના પ્રણિધાનાદિ આશય ભાવ કહેવાય છે, કારણ કે ઉપયોગ એ ભાવલક્ષણ = ભાવસ્વરૂપ છે આ પ્રણિધાનાદિ ભાવ વિનાની તન, વચન, મનની ક્રિયા તુચ્છ છે, કારણ કે તે દ્રવ્યક્રિયાત્મક છે માટે તે ફલજનક બનતી નથી [૩/૧૨]

**વિશેષાર્થ** - પ્રણિધાન, પ્રવૃત્તિ, વિઘ્નજય વગેરેના સ્વરૂપમા ક્રિયાત્મકતા હોવા છતા તે પ્રધાન નથી, ગૌણ છે મુખ્ય તો છે વિશિષ્ટ બાહ્ય ક્રિયાથી વ્યક્ત થતો અદરનો પરિણામ-આશય-અધ્યવસાય બહારની ક્રિયા ખોખાના (Box) સ્થાને છે જ્યારે ભાવ એ ખોખાની અદર રહેલ સોનાના હારના સ્થાને છે સુવર્ણહારને સાચવવા માટે ખોખુ છે તેમ અદરના પરિણામને ટકાવવા-વધારવા બાહ્ય ક્રિયાની જરૂર છે પરતુ સોનાનો હાર જેને લાવવો જ ન હોય તેના માટે ખોખા બનાવવાનો પુરુષાર્થ અસાર છે, તેમ જેને ભાવ-પરિણામ પ્રગટાવવાનુ લક્ષ જ નથી તેની બાહ્ય ધર્મક્રિયા તુચ્છ છે, વિશિષ્ટફલદાયી નથી ધર્મક્રિયાને તુચ્છ-અસાર ન બનાવવી હોય તો ધર્મક્રિયામા પ્રણિધાનાદિ ભાવોને ઉમેરવા અત્યત જરૂરી છે ગળપણ વિનાના ગુલાબજાબુ તુચ્છ કહેવાય, સુગધ વિનાનુ ફૂલ અસાર કહેવાય, પ્રાણ વિનાનુ શરીર નિરર્થક કહેવાય, તેમ આંશિક પણ ભાવ વિનાની ક્રિયા

भावाच्च यत् स्यात् तदाह -->'अस्माच्चे'त्यादि ।

**अस्माच्च सानुबन्धाच्छुद्ध्यन्तोऽवाप्यते द्रुत क्रमशः । एतदिह धर्मतत्त्व परमो योगो विमुक्तिरसः ॥३/१३॥**

**अस्माच्च** आशयपञ्चकरूपात् भावात् **सानुबन्धात्** = अव्यवच्छिन्नसन्तानात् **क्रमश** = क्रमेण तस्मिन् जन्मन्य-परस्मिन् **वा द्रुत** = अविलम्बित शुद्धे = कर्मक्षयस्य अन्त = प्रकर्ष **अवाप्यते** । **एतदिह** प्रस्तुत भावस्वरूप [1]**धर्मतत्त्व**, नान्यत् । एतदि त्यत्र विधेयपदलिङ्गविवक्षया नपुसकत्व, तेन न भावस्य प्रस्तुतत्वात् एष इति निर्देशप्राप्ति । अय भाव **परमो योगो** वर्तते, अध्यात्मगर्भत्वात् । कीदृश ? विशिष्टो मुक्तौ रस = अभिलाषो यत्र स तथा । अय भाव [2]एव विशिष्टमुक्ते रस = आस्वाद इति वा व्याख्येयम् ॥३/१३॥

## कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> अस्माच्च सानुबन्धात् क्रमशो द्रुत शुद्ध्यन्तोऽवाप्यते । एतत् इह धर्मतत्त्व, परमो योग, विमुक्तिरस ॥३/१३॥ न च 'क्रमशो' 'द्रुतमि'त्यनयोर्विरोध इति **शङ्कनीयम्**, क्रमपदस्येतरकारणकलापविलम्बप्रयुक्तकार्यविलम्ब-सूचकत्वेऽपि द्रुतमित्यनेनाऽनेकपुद्गलपरावर्तादिदीर्घकालविलम्बव्यवच्छेदात् । **कर्मक्षयस्य प्रकर्षः** = पारम्य = कृत्स्नकर्मविगम-लक्षणो मोक्ष । **'एतदि'त्यत्र विधेयपदलिङ्गविवक्षया** = धर्मतत्त्वप्रतिपादकपदलिङ्गसमानलिङ्गकत्वविवक्षया **नपुसकत्व** = शाब्दिकनपुसकलिङ्गकत्वम् । **तेन** = उद्देश्यवाचकपदे विधेयवाचकपदगतलिङ्गसमानलिङ्गकत्वविवक्षणेन **न** पुल्लिङ्गकपदप्रतिपाद्यस्य **भावस्य** इह **प्रस्तुतत्वात्** उद्देश्यवाचकपदस्य **'एष'** इति एव **निर्देशप्राप्तिः** = उल्लेखापत्ति ।

अय प्रणिधानादिरूप. **भावः परमो योगः**, **अध्यात्मगर्भत्वात्** । न चात्र भावस्याऽध्यात्मगर्भत्व कुत इति **शङ्कनीयम्**, योगतन्त्रे अध्यात्मगोचर एव प्रतिदिन प्रवर्धमानश्चित्तवृत्तिनिरोधयुक्तोऽभ्यासो भावनापदेन प्रतिपाद्यते, योगस्याऽध्यात्म-भावना-ध्यान-समता-वृत्तिसक्षयभेदेन पञ्चविधत्वात् । यद्यपि परमयोगत्व वृत्तिसक्षयस्यैव तथापि कारणे कार्योपचारात् तदभिधानमदुष्टम् । --> योग कल्पतरु श्रेष्ठो योगश्चिन्तामणि पर । योग प्रधान धर्माणा योग सिद्धे स्वयग्रह ॥ <-- [यो बि ३७] इत्यादिना योगमहिमा मूलकारै **योगविन्दौ** विस्तरतो दर्शित । **योगशास्त्रेऽपि श्रीहेमचन्द्रसूरिभिः** योगमहिमा व्यासत प्रदर्शित । यद्वा वक्ष्यमाणरीत्या [३/१५] भावपदस्य सम्यक्त्वादिपरत्वेऽप्यध्यात्मगर्भितत्वन्त्वनाविलमेव भावस्येति ध्येयम् ।

विमुक्तिरसपद व्याख्यानयति **विशिष्टो मुक्तौ रसः** = **अभिलाषः यत्र स तथा** = विमुक्तिरस । तदन्यपरिहारेण तन्मयत्वलक्षण वैशिष्ट्य मुक्तिगोचररसे परमयोगविशेषणीभूते सूचयित्वा साम्प्रत जीवन्मुक्त्यपेक्षया पारम्यरूप वैशिष्ट्य मुक्तावेव कल्पान्तरेण दर्शयति --> **अय भाव एव विशिष्टमुक्तेः रसः** = **आस्वादः** । अत्र कल्पे विमुक्तिरसस्य न परमयोगविशेषणत्वमपि तु निरुक्तभावविशेषणत्वमिति स्पष्टमेव । रसपदमुभयत्र प्रसिद्ध, यथा 'यदि ते रसोऽस्ति कथाया तर्हि रसप्रदा कथा कथयामि' इत्यादौ रसपदस्याभिलाषवाचकत्वम् । 'कोऽप्यनुपमो रसः सहकारफलस्य' इत्यादौ रसपदस्याऽऽस्वादप्रतिपादकताऽपि प्रतीतैव । **सुगमार्थकल्पनाकारस्तु** --> विशिष्टा मुक्ति = विमुक्ति, तद्विषयो रस = प्रीतिविशेषो यस्मिन् योगे स विमुक्तिरस, विमुक्तौ रसोऽस्येति वा गमकत्वात्समासोऽथवा पृथगेव पदान्तर न विशेषण तेनाय भावो विमुक्तौ रस = प्रीतिविशेषो

નિષ્ફળ કહેવાય વળી, ક્રિયામા અમુક કક્ષા સુધી જ આગળ વધવાનુ છે, અમુક કક્ષા પછી આગળ વધી શકાતુ નથી, કારણ કે ક્રિયા તો દ્રવ્ય, ક્ષેત્રાદિને આધીન છે જ્યારે ભાવ-શુદ્ધિ તો અનતગુણ-અનતગુણ વધી શકે છે ક્રિયા ભાવ માટે છે ભાવ એ ક્રિયા માટે નથી માટે પણ ભાવ પ્રધાન છે, ક્રિયા ગૌણ છે [૩/૧૨]

પ્રણિધાનાદિ ભાવથી શુ થાય ? તેને બતાવતા મૂલકારશ્રી કહે છે કે –

**ગાથાર્થ** - સાનુબધ પ્રણિધાનાદિ ભાવથી ક્રમે કરીને ઝડપથી મોક્ષ પ્રાપ્ત થાય છે આ અહીં ધર્મતત્ત્વ છે, પરમ યોગ છે, વિમુક્તિરસ છે [૩/૧૩]

**ટીકાર્થ** - પ્રણિધાનાદિ આશયવિશેષસ્વરૂપ પાચેય ભાવ સાનુબધ થવાથી ક્રમે કરીને તે ભવમા અથવા અન્ય ભવમા વિલબ વિના કર્મક્ષયસ્વરૂપ શુદ્ધિનો પ્રકર્ષ = મોક્ષ પ્રાપ્ત થાય છે પ્રસ્તુત ભાવસ્વરૂપ જ ધર્મનુ તત્ત્વ છે, બીજુ નહિ [અર્થાત્ ધર્મતત્ત્વ ક્રિયાદિસ્વરૂપ નથી, પરતુ ભાવસ્વરૂપ છે ] 'एतत्' શબ્દ ઉદ્દેશ્યવાચક પદ છે વિધેયપદ છે ધર્મતત્ત્વ વિધેયવાચક ધર્મતત્ત્વપદ નપુસકલિગ હોવાની ઉદ્દેશ્યવાચક પદનો નિર્દેશ 'एष' આ રીતે પુલિગમા થવાના બદલે 'एतत्' આ રીતે નપુસકલિગમા થયેલ છે ઉદ્દેશ્યવાચક પદમા વિધેયવાચક પદના લિગનુ સમાન લિગ હોવાની વિવક્ષા આમા કારણભૂત છે આ પ્રણિધાનાદિ ભાવ પરમ યોગ છે, કેમ કે તે અધ્યાત્મ-ગર્ભિત છે [અધ્યાત્મ તો નિર્વિવાદ યોગસ્વરૂપ જ છે, તેથી તેનાથી ઘટિત ભાવ પરમયોગ બને તેમા કોઈ આશ્ચર્ય નથી ] તે પરમ યોગ કેવો છે ? તે જિજ્ઞાસાનુ સમાધાન એ છે કે મુક્તિને વિશે વિશિષ્ટ . છે તેવો તે પરમયોગ છે [અર્થાત્

१ मुद्रितप्रतो 'धमग्य' इति अशुद्ध पाठ । २ 'एतद्विशिष्ट ' इत्यन्यत्र पाठान्तरम् ।

यावत् आसेवित = अभ्यस्त **अपि न जातु** = कदाचित् **बहुमन्यते** = उत्कटेच्छाविषयीकरोति **पाप** = मिथ्यात्वमोहनीय तत्कार्यं वा[१] प्रवचनोपघातादि । इह कुभक्तरसकल्प पाप मिथ्यात्वादि, अमृतरसास्वादकल्पो भाव सम्यक्त्वादिरवसेय ॥३/१५॥

अविरतसम्यग्दृष्टेरपि पापक्रिया दृश्यत एवेति कथ न तद्बहुमान ? इत्यत आह --> **यद्यपी'**त्यादि ।

**यद्यपि कर्मनियोगात् करोति तत्तदपि भावशून्यमलम् । अत एव धर्मयोगात् क्षिप्र तत्सिद्धिमाप्नोति ॥३/१६॥**

**कल्याणकन्दली**

औपशमिक-क्षायोपशमिक-क्षायिकादिसम्यग्दर्शनात्मकामृतगोचरानुभवस्वरूपरसवेदी, तदुक्त **पुष्पमालाया** --> गठि भणति मुणिणो घणरागद्दोसपरिणइसरूव । जम्मि अभिन्ने जीवा न लहति कयावि समत्त ॥९३॥ त गिरिवर व भित्तु अपुव्वकरणुग्गवज्जधाराए । अतोमुहुत्तकाल गतु अनियट्टिकरणमि ॥९६॥ पइसमय सुज्झतो खविउ कम्माइ तत्थ बहुयाइ । मिच्छत्तम्मि उइन्ने खीणेऽणुईअम्मि उवसते ॥९७॥ ससारगिम्हतविओ तत्तो गोसीसचदणुरस व । अइपरमनिव्वुइकर तस्सते लहइ सम्मत्त ॥९८॥ <-- इति । स च **न कदाचित् उत्कटेच्छाविषयीकरोति** = सप्ततिकोटाकोटिप्रमित-स्थितिबन्धनियतकर्मानुभागबन्धोपधायकाभिलाषगोचरीकुरुते **मिथ्यात्वमोहनीय** तद्विपक्षगतोपादेयत्वसवेदनपूर्व, तद्धेयतानुभवात्, **तत्कार्य वा** = मिथ्यात्वकार्य वा **प्रवचनोपघातादि**, तथाविधरुचिविशेषादेव । न हि सुलब्धामृतास्वादो विपमिव विषोद्गारमपि कदाचित् बहुमन्यते, चेत् सकर्ण । तदुक्त मूलकारैरेव **अष्टकप्रकरणे** --> य शासनस्य मालिन्येऽनाभोगेनाऽपि वर्तते । स तन्मिथ्यात्वहेतुत्वादन्येषा प्राणिना ध्रुवम् ॥ बध्नात्यपि तदेवाल पर ससारकारणम् । विपाकदारुण घोर सर्वानर्थविवर्धनम् ॥ <-- [२३/१-२] इति । एतदनुसारेणोक्त टीकाकृता **साधुसामग्र्यद्वात्रिंशिकाया** --> यस्तु शासनमालिन्येऽनाभोगेनाऽपि वर्तते । बध्नाति स तु मिथ्यात्व महानर्थनिबन्धनम् ॥६/३०॥ <-- इति । **भक्तपरिज्ञाप्रकीर्णके**ऽपि --> ससारमूलबीअ मिच्छत्त <-- [५९] इत्युक्तम् । इत्थञ्च शासनापभ्राजनादे मिथ्यात्वजन्यत्वे सति मिथ्यात्वजनकत्व यथा उपाधिजनितस्य ससारसुखस्य उपाधिजनकत्वमिति बोध्यम् ।

इदञ्चात्रावधेयम् --> पाव न तिव्वभावा कुणइ, ण बहुमण्णई भव घोर । उचियट्ठिइ च सेवइ, सव्वत्थ वि अपुणबधोत्ति ॥१३॥ <-- इति **योगशतक**वचनेन मूलकारै अपुनर्बन्धके जन्म-जरा-मरण-रोग-शोकादिदु खमय-भीमभवबहुमानविरह प्रतिपादित प्रकृते च सम्यग्दृष्टौ पापबहुमानविलय प्रदर्शित । युक्तञ्चैतत् सूक्ष्मबोधविरहेणाऽपुनर्बन्धकेऽनिष्टकार्यबहुमानाभावेऽपि तत्कारणपापबहुमानात्यन्तायोगाऽसम्भवात् । **न च** तीव्रभावेन पापाऽकरणादपुनर्बन्धकेऽपि पापबहुमानाऽयोग एवेति **वक्तव्यम्**, मन्दमिथ्यात्वोदयेन पापपक्षपातसम्भवात् । सम्यग्दृष्टेस्तु सूक्ष्मबोधसमन्वितत्वेन भीमभवलक्षणकार्य-तत्कारणपापोभयगोचरबहुमानस्यात्यन्ताऽयोगात् । अत्र चार्थे कुक्कुरमृगारिदृष्टान्तभावना कार्या । यथोक्त **उपदेशमालाया** --> पत्थरेणाऽऽहओ कीवो, पत्थर डक्कुमिच्छइ । मिगारिओ सर पप्प, सरुप्पत्ति विमग्गइ ॥१३९॥ <-- इति । **ऋषिभाषिते**ऽपि --> पत्थरेणाहतो कीवो खिप्प डसइ पत्थर । मिगारिऊ सर पप्प, सरुप्पत्ति विमग्गति ॥[१५/२०] <--इत्युक्तम् । श्वोपमोऽपुनर्बन्धक ,सिहस्थानीय सम्यग्दृष्टि , प्रस्तर-शरतुल्यो भीमभव शरोत्पत्तिस्थानाभिषिक्त पापम् । कर्कशगुरुतरप्रस्तर द्विपन्नपि श्वा मासादिलाभे प्रस्तरक्षेपिण लेढि, सूक्ष्मविवेकविकलत्वात् । सिहस्तु न तथा, तथाविधसूक्ष्मविवेकपरिकलितत्वात्तद्वदेवेदमपि तत्त्व बोध्यम् । अपुनर्बन्धकस्य श्वोपमोपदर्शनेन न तन्निन्दाऽभिप्रायोऽस्माक किन्तु सूक्ष्मविवेकविकलतासादृश्यदर्शने एव तात्पर्यम् ॥३/१५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> यद्यपि कर्मनियोगात् तत् करोति तदपि अल भावशून्य [करोति] । अत एव धर्मयोगात् क्षिप्र तत्सिद्धि आप्नोति ॥३/१६॥ इय कारिका **लोकविंशिकावृत्त्यादौ** [लो वि पृ १६५] समुद्धृता ।

આદિને ક્યારેય પણ ઉત્કટ ઈચ્છાનો વિષય બનાવતો નથી પ્રસ્તુતમા ખરાબ ભોજનના રસ સમાન મિથ્યાત્વ વગેરે છે તથા અમૃતના રસાસ્વાદસમાન સમકિત વગેરે ભાવ છે-એમ જાણવુ [૩/૧૫]

અહીં શકા થાય કે --> અવિરતસમ્યગ્દષ્ટિ જીવની પણ પાપક્રિયા દેખાય જ છે તેથી તેને પાપનુ બહુમાન = ઉત્કટ ઈચ્છા કેમ ન હોય ? <-- આ શકાનુ સમાધાન આપતા મૂલકારશ્રી ફરમાવે છે કે --

**ગાથાર્થ** - જો કે કર્મના બળાત્કારથી તે પાપ કરે છે પરતુ તે પણ અત્યત ભાવશૂન્ય કરે છે માટે જ ધર્મયોગથી તે તુરત ધર્મસિદ્ધિને પામે છે [૩/૧૬]

**.... તો જ સમકિત ટકે**

[१] 'मुद्रितप्रतौ 'वा' नास्ति ।

**यद्यपि** कर्मण = निकाचितचारित्रमोहस्य नियोगात् = व्यापारात् **करोति तत्** = पाप **तदपि** = तथापि अल = अत्यर्थं भावेन = क्लिष्टाध्यवसायेन शून्य **करोति** । तत सम्यग्दृष्टे तप्तलोहपदन्यासतुल्या पापे प्रवृत्ति अस्वारसिकीति न तद्बहुमान इत्यर्थ । **अत एव** = इद न साधु इति पापाऽबहुमानादेव **धर्मयोगात्** = तीव्रधर्मोत्साहात् (**क्षिप्र**=) शीघ्र तस्य = धर्मस्य **सिद्धि आप्नोति** सम्यग्दृष्टि ॥३/१६॥

**कल्याणकन्दली**

निकाचितचारित्रमोहस्य व्यापारात् पाप = स्त्रीभोगादि पारदार्यादिकं वा करोति । तदुक्त उपदेशमालाया —> गुण-दोसबहुविसेस पय पय जाणिऊण निसेस । दोसेसु जणो न विरज्जइत्ति कम्माण अहिगारो ॥ ज न लहइ सम्मत्त लद्धूणवि ज न एइ सवेग । विसयसुहेसु य रज्जइ, सो दोसो राग-दोसाण ॥ <— [उप मा ३१०/१२४] इति । नैषधीयचरिते श्रीहर्षेणापि —> दुर्जया हि विषया विदुषाऽपि <— [०/१००] इति प्रोक्तम् । बाणभट्टेनाऽपि कादम्बर्या —> न हि शक्य दैवमन्यथाकर्तुमभियुक्तेनापि <— [पृ १९३] इत्युक्तम् । निकाचितकर्मापेक्षयेदमपि सम्यक् । तथापि —> यद्यपि निषेव्य-माणा मनसस्तुष्टिकारका विषया । किम्पाकफलादनवद् भवन्ति पश्चादतिदुरन्ता ॥१०७॥ <— इति प्रथमरतिवचनविमर्शादिना अत्यर्थं क्लिष्टाध्यवसायेन शून्य करोति, तदुक्त श्राद्धप्रतिक्रमणसूत्रे —> सम्मदिट्ठी जीवो जइ वि हु पाव समायरे किंचि । अप्पोसि होइ बधो जेण न निद्धधस कुणइ ॥३६॥ <— इति । प्रकृतेऽयमाशय पृष्ठलग्नव्याघ्रस्य पुरो धावत खदिराङ्गार-भृतखातिकाप्राप्तौ तन्मध्यपतिततप्तलोहपिण्डेषु अकामेनापि एक द्वे त्रीणि वा पदानि न्यस्य झटिति तामतिक्रामत पुरुषस्य प्रवृत्त्या सदृशा = तप्तलोहपदन्यासतुल्या सवेगसारा पापे प्रवृत्तिः अस्वारसिकी = स्वरसतोऽप्रयुक्ता इति हेतो न तद्बहुमान = पापपक्षपात । तदुक्त मूलकारैरेव योगदृष्टिसमुच्चये —> अतोऽन्यदुत्तरास्वस्मात् पापे कर्मागसोऽपि हि । तप्तलोहपदन्यासतुल्या वृत्ति क्वचिद्यदि ॥७०॥ वेद्यसवेद्यपदत सवेगातिशयादिति । चरमैव भवत्येषा, पुनर्दुर्गत्ययोगत ॥७१॥ <— इति । अत एव तस्य कायपातित्वमेव, न तु चित्तपातित्वम् । तदुक्त सम्यग्दृष्टिद्वात्रिंशिकाया टीकाकृताऽपि —> तप्तलोहपदन्यासतुल्या वृत्ति क्वचिद्यदि । इत्युक्ते कायपात्येव चित्तपाती न स स्मृत ॥ <— [द्वा द्वा १०/११] इति । अत एव तत्प्रवृत्ति निर्ज्जराफला । इदमेवाभिप्रेत्य समयसारे —> ज कुणदि सम्मदिट्ठी, त सव्व णिज्जरणिमित्त <— [१९३] इत्युक्तम् । अध्यात्म-गीतायामपि —> अध्यात्मज्ञानतो ज्ञानी प्रारब्धकर्मशक्तित । कामभोगे ह्यनासक्तो भोगभोक्ता न बध्यते ॥१८८॥ <— इत्युक्तम् । पञ्चदश्यामपि विद्यारण्येन —> प्रारब्धकर्मप्राबल्याद् भोगेष्विच्छा भवेद्यदि । क्लिश्यन्नेव तदाऽप्येष भुङ्क्ते विष्टिगृहीतवत् ॥ <— [७/१४३] इत्युक्तम् । —> 'एष = आत्मज्ञानी <— इत्यभिमतम् । यद्यपि —> ग्रन्थिभेदेऽपि सम्भाव्या इच्छा प्राग्ब्धदोषत <— [६/१६३] इति पञ्चदश्यादिवचनोक्ता इच्छा कदाचित् सम्यग्दृष्टे स्युस्तथापि 'इद न साधु = सुष्ठु' इति पापाऽबहुमानादेव = 'इद शोभनमि'ति पापपक्षपातप्रच्यवादेव धर्मयोगात् = तीव्रधर्मोत्साहात् शीघ्र धर्मस्य सिद्धिमाप्नोति ।

वस्तुतस्तु मोक्षाकाङ्क्षाव्याप्तचित्तत्वात् सम्यग्दृष्टेर्या या चेष्टा सा सा मोक्षपर्यवसानफला, चित्तानुरूपफलत्वात्सर्वव्यापाराणाम् । अत एव भिन्नग्रन्थे कुटुम्बचिन्तनादिकोऽपि व्यापारो निश्चयतो योगो निर्जराफलश्च । अत एव = सर्वव्यापाराणा चित्तानुरूपफलत्वा-देव धर्मयोगात् = धर्मयोगत्वेन परिणामितात् कुटुम्बचिन्तादिव्यापारा् सकाशात् प्रतिबन्धककर्मापगमेन क्षिप्र तत्सिद्धि = धर्मनिष्पत्ति आप्नोतीत्यर्थ । शङ्कराचार्येणापि गीताभाष्ये —> सम्यग्दर्शनात् क्षिप्र मोक्षो भवति <— [४/३९] इति गदितम् ।

**टीकार्थ** - જે કે નિકાચિત ચારિત્રમોહનીય કર્મની બળજબરીથી સમકિતદષ્ટિ પાપ કરે છે તો પણ અત્યત ક્લિષ્ટ અધ્યવસાયથી શૂન્યપણે કરે છે તેથી સમકિતદષ્ટિની પાપમા પ્રવૃત્તિ તપ્તલોહપદન્યાસતુલ્ય = તપેલ લોખડના ગોળા ઉપર પગ મૂકવા જેવી અત્યત અલ્પ હોય છે તો જ સમકિત ટકી શકે આથી પાપપ્રવૃત્તિ સ્વારસિક = સ્વરસપ્રયુક્ત નથી માટે જ સમકિતીને પાપનુ બહુમાન નથી-એ સિદ્ધ થાય છે 'આ [પાપ] સારુ છે' એવુ પાપનુ બહુમાન = પક્ષપાત ન હોવાથી જ ધર્મના તીવ્ર ઉત્સાહથી શીઘ્ર ધર્મની સિદ્ધિને સમકિતદષ્ટિ જીવ પ્રાપ્ત કરે છે [૩/૧૬]

## ❀ કલ્પના તો કરો ! ❀

**વિશેષાર્થ** - તમે કલ્પના કરો કે તમે જગલમા એકલા જઈ ચઢ્યા છો, સાજનો સમય છે, અધારુ ચારે બાજુ ફેલાઈ રહેલ છે અને તમારી પાછળ એકાએક વાઘની ગર્જના સભળાય છે તમે એકદમ આગળ ખુલ્લા પગે દોડો છો, તમને પકડવા તમારી પાછળ વાઘ દોડી રહ્યો છે દોડતા દોડતા તમને આગળ સળગતા અગારાથી ભરેલી ખાઈ દેખાય છે અને તેની વચ્ચે પગ મૂકવાની જગ્યાએ તપેલા લોખડના લાલચોળ ગોળા ગોઠવાયેલા છે તમે તે વખતે શુ કરો ? [૧] વિકરાળ વાઘને તમારી જાત સોપી દો કે [૨] સળગતા અગારાથી ભરેલી ખાઈમા બળીને ભડથૂ થઈ જાવ કે [૩] તપેલા લોખડના ગોળા ઉપર લાબા લાબા કૂદકાથી

## ॥ इति तृतीय षोडशकम् ॥

### कल्याणकन्दली

न च पापनिवृत्त्यकरणे तत्त्वहानिरिति वाच्यम्, तदानी तस्याऽशक्यत्वेऽपि श्रद्धासाम्राज्यात् धर्मसिद्धेः, अन्यथा --> ज सक्कइ त कीरइ ज च न सक्कइ तयमि सद्दहणा । सद्दहमाणो जीवो वच्चइ अयरामर ठाण ॥ <-- [ ] इत्यस्यानुपपत्ते । दर्शनप्राभृते कुन्दकुन्दस्वामिनापि --> ज सक्कइ त किरइ ज च ण सक्केइ त सद्दहण । केवलिजिणेहि भणिय सद्दहमाणस्स सम्मत्त ॥ <-- [२२] इत्युक्तम् । इदमेवाभिप्रेत्य मूलकारैरेव योगविन्दौ --> भिन्नग्रन्थेस्तु यत्प्रायो मोक्षे चित्त भवे तनु । तस्य तत्सर्व एवेह योगो योगो हि भावत ॥ नार्या यथान्यसक्तायास्तत्र भावे सदा स्थिते । तद्योग पापबन्धश्च तथा मोक्षेऽस्य दृश्यताम् ॥ <-- [यो वि २०३/२०४] इति प्रोक्तम् । 'जे आसवा ते परिसवा' [१/४/२] इति आचाराङ्गसूत्रमप्यत्र सवदति । तदुक्त समयसारेऽपि --> सेवतो वि ण सेवइ <-- [१७९] इति ।

इदञ्चातिनिर्मलाविरतसम्यग्दर्शनयुक्तानधिकृत्याऽवगन्तव्यम्, तेषामेवाश्रवहेतूना सवररूपेण परिणामयितु समर्थत्वात्, यथोक्त वीतरागस्तोत्रे श्रीहेमसूरिभिः --> यदा मरुन्नरेन्द्रश्रीस्त्वया नाथोपभुज्यते । यत्र तत्र रतिर्नाम विरक्तत्व तदाऽपि ते ॥ [वी स्तो १२/४] <-- इति । समारोपमन्तरेण भोगान् स्वरूपत पश्यता तेषामेवाऽसङ्गेन भोक्तृत्व सम्भवेत् । तदुक्त योगदृष्टि-समुच्चये --> मायाम्भस्तत्त्वत पश्यन्ननुद्विग्नस्ततो द्रुतम् । तन्मध्येन प्रयात्येव यथा व्याघातवर्जित ॥ भोगान् स्वरूपत पश्यस्तथा मायोदकोपमान् । भुञ्जानोऽपि ह्यसङ्गस्सन् प्रयात्येव पर पदम् ॥ <-- [यो दृ १६५/१६६] इति । एतदनुसारेण योगसारप्राभृतेऽपि --> मायाम्भो मन्यतेऽसत्य तत्त्वतो यो महामनाः । अनुद्विग्नो निराशङ्कस्तन्मध्ये स न गच्छति ॥ माया-तोयोपमा भोगा दृश्यन्ते येन वस्तुत. । स भुञ्जानोऽपि नि सङ्ग. प्रयाति परम पदम् ॥ <-- [८/२१-२२] इत्युक्तम् । एतेन --> सम्यग्दर्शनसम्पन्न कर्मभिर्न निबध्यते <-- [६/७४] इति मनुस्मृतिवचन व्याख्यातम्, यथोक्त आचाराङ्गेऽपि --> सम्मत्तदसी न करेइ पाव [१०/३/२] इति भावनीय तत्त्वमेतत् ॥३/१६॥

इति मुनियशोविजयविरचिताया कल्याणकन्दल्या तृतीयषोडशक-योगदीपिकाविवरणम् ।

---

કુદકા મારીને ખાઈને સામે પાર જવાનો ભગીરથ પુરુષાર્થ કરી જીવનને બચાવી લો ? આ ત્રણ સિવાય ચોથો વિકલ્પ શક્ય નથી જો તમે બુદ્ધિમાન્ હશો તો 'જીવતો નર ભદ્રા પામે' એ ન્યાયથી તૃતીય વિકલ્પ જ સ્વીકારશો તપેલા લાલચોળ લોખંડના ગોળા ઉપર તમે પગ કેવી કમકમાટી સાથે મૂકતા હશો ! એ વખતની કપારીની/ધ્રૂજારીની કલ્પના પણ ધ્રૂજારી લાવી દે તેવી છે

નિકાચિત ચારિત્ર મોહનીય કર્મની શિરજોરીના લીધે, તેના અત્યાચારનો ભોગ બનવાના લીધે સસારમા પાપ કરતી વખતે સમ્યગ્દષ્ટિને પણ બરાબર આવી જ ધ્રૂજારી અને કપારી હોય પાપ કરતી વખતે આવી ધ્રૂજારી ન હોય તો સમકિત ટકી ન શકે અવિરતિધરના નિર્મલ સમ્યગ્દર્શનનુ અવશ્યભાવી કાર્ય છે પાપપ્રવૃત્તિમા બળાપો, હૈયાનો વલોપાત, કાળો કલ્પાત, પાપપ્રવૃત્તિથી છૂટવાનો મરણિયો પ્રયાસ આવુ હોવાથી ધર્મનો ઉત્કટઉલ્લાસી જીવ ધર્મસિદ્ધિની વરમાળાને વરે તેમા નવાઈ નથી - સમકિત દષ્ટિ જીવડો, કરે કુટુબ પ્રતિપાળ અદરથી ન્યારો રહે, જેમ ધાવ ખેલાવત બાળ - આ ઉક્તિ પણ અહીં અવશ્ય સ્મર્તવ્ય છે આવા નિર્મલ સમ્યગ્દર્શનને કોટિકોટિ વદન [૩/૧૬] તૃતીય ષોડશક અને તેના ઉપર યોગદીપિકા ટીકાનુ વિવરણ પૂરુ થયુ

---

હે દયાસિંધુ !

તને, તારા મોક્ષમાર્ગને-જિનશાસનને, તારા માર્ગે ચાલતા સાધકોને ઓળખી શકુ - ચાહી શકું એવી સદ્બુદ્ધિ મને આપજે, તારા માર્ગે ચાલવાનું મને બળ આપજે તારા શાસનની પ્રકૃષ્ટ સાનુબંધ સેવા પ્રસન્નતાપૂર્વક કરી શકુ એવા શુદ્ધ-વિશુદ્ધ-પરિશુદ્ધ દ્રવ્ય, ક્ષેત્ર, કાળ, ભાવ, ભવનો આપના પ્રભાવે મને યોગ થાવ અને ઉત્સાહથી તેનો સદુપયોગ કરવાનું આત્મબળ મળો

## તૃતીય ષોડશકનો સ્વાધ્યાય

(અ) ચારથી પાંચ મુદ્દામાં નીચેની સમસ્યાનું સમાધાન આપો

૧ તમે કોને ધર્મ માનવાની ભૂલ નહિ કરો ? કેમ ?
૨ પ્રણિધાનનું નિરૂપણ કરો
૩. સિદ્ધિનું સ્વરૂપ શું છે ?
૪ પ્રવૃત્તિનું પ્રરૂપણ કરો
૫ વિનિયોગનું માહાત્મ્ય શું બતાવશો ?
૬ વિઘ્નજયનું પ્રતિપાદન કરો
૭ તપ્તલોહપદન્યાસપ્રવૃત્તિને દષ્ટાંત-દાર્ષ્ટાન્તિક બન્નેમાં સરખાવો
૮ પ્રણિધાન આદિની આવશ્યકતા શા માટે ?
૯ ધર્મનું હેતુ-સ્વરૂપ-ફલ દ્વારા વર્ણન શું કરશો ?
૧૦ ચિત્તની શુદ્ધિ-પુષ્ટિ શેનાથી થાય ? કેવી રીતે ?

(બ) યોગ્ય જોડાણ કરો

| | |
|---|---|
| (૧) પુષ્ટિ | (A) ઘાતિકર્મવિગમથી નિરુપાધિકતા |
| (૨) ધર્મકાર્ય | (B) પ્રવૃત્તિ |
| (૩) સિદ્ધિનું અજીર્ણ | (C) રાગ, દ્વેષ, મોહ |
| (૪) પ્રણિધાનાદિ ભાવ | (D) તીર્થતુલ્ય |
| (૫) ઉત્કૃષ્ટ વિઘ્ન | (E) પરમ યોગ |
| (૬) મલ | (F) આર્તધ્યાન |
| (૭) શુદ્ધિ | (G) દિશામોહ |
| (૮) ઔત્સુક્યરહિત | (H) હીન પુરુષનો તિરસ્કાર, સમકક્ષની નિંદા |
| (૯) ગુરુદેવ | (I) સંવેગ-નિર્વેદાદિ |
| (૧૦) ઔત્સુક્ય | (J) પુણ્યયોગ |

(ક) ખાલી જગ્યા યોગ્ય રીતે પૂરો

૧ ______ પદના યોગદીપિકામાં બે અર્થ બતાવેલા છે (અમૃતઆસ્વાદજ્ઞ, પ્રણિધાન, વિમુક્તિરસ)
૨ અધિકને વિશે વિનય કરવાનો ______ ના લક્ષણમાં પ્રવેશ કરેલ છે (પ્રણિધાન, પ્રવૃત્તિ, સિદ્ધિ, વિનિયોગ)
૩ ધર્મના અન્તરાયના ______ ભેદ છે (૨, ૩, ૫, ૯)
૪ પુષ્ટિ-શુદ્ધિવાળું ______ એ ધર્મલક્ષણ છે (શરીર, વચન, મન, વસ્ત્ર, ઘર)
૫ ______ માં ______ ના ઉપચારથી મલવિગમ સત્ક્રિયાસ્વરૂપ છે (દ્રવ્ય, ભાવ, કાર્ય, કારણ, નિશ્ચય, વ્યવહાર)
૬ પ્રણિધાન વગેરે પાથેય ______ સ્વરૂપ હોય છે (ક્રિયા, દ્રવ્ય, પરિણામ, ભક્તિ)
૭ સમ્મૂર્છિમ જેવી ક્રિયા ______ સ્વરૂપ બને (ધર્મ, પ્રવૃત્તિ, ચેષ્ટા)
૮ અકાળે ફળની ઇચ્છા = ______ (કાંક્ષા, ઔત્સુક્ય, અયોગ્યતા)
૯ દીર્ઘ કાળથી સેવેલા પાપમાં અબહુમાન એ ______ નો પ્રભાવ છે (અપુનર્બંધકતા, સમકિત, ભવિતવ્યતાપરિપાક)
૧૦ નિર્મળ સમકિતીની પાસે જ સાનુબંધ ______ ની સામગ્રી હોય છે (સદ્ગતિ, શુદ્ધિ-પુષ્ટિ, વિધિ)

નોંધ આ પ્રશ્નપત્રમાં ક્યાંએ પેન-પેન્સીલ વગેરેથી કાળીપણ નિશાની વગેરે ન કરવા ખ્યાલ રાખવો આગળ પણ આ વાત ખ્યાલ રાખવી

## चतुर्थं धर्मलिङ्गषोडशकम्

धर्मस्य स्वलक्षणमुक्तम् । अथास्य विस्तरेण लिङ्गान्याह --> 'सिद्धस्य चे'त्यादि ।

**सिद्धस्य चास्य सम्यग्लिङ्गान्येतानि धर्मतत्त्वस्य । विहितानि तत्त्वविद्भिः सुखावबोधाय भव्यानाम् ॥४/१॥**

**सिद्धस्य** = निष्पन्नस्य **चास्य धर्मतत्त्वस्य** = धर्मस्वरूपस्य **सम्यग्** = अवैपरीत्येन **लिङ्गानि** = लक्षणानि **तत्त्वविद्भिः** = परमार्थज्ञैः **विहितानि** = शास्त्रेऽभिहितानि **भव्यानां** = योग्यानां **सुखावबोधाय** = सुखप्रतिपत्तये ॥४/१॥ तान्येव लिङ्गानि सङ्ख्याविशिष्टान्याह --> **'औदार्यमि'**त्यादि ।

**औदार्यं दाक्षिण्यं पापजुगुप्साऽथ निर्मलो बोधः । लिङ्गानि धर्मसिद्धेः प्रायेण जनप्रियत्वञ्च ॥४/२॥**

स्पष्टम् ॥४/२॥ औदार्यं लक्षयति --> **'औदार्यमि'**त्यादि ।

**औदार्यं कार्पण्यत्यागात् विज्ञेयमाशयमहत्त्वम् । गुरु-दीनादिष्वौचित्यवृत्ति कार्ये तदत्यन्तम् ॥४/३॥**

**औदार्यं** कार्पण्यस्य दानादिपरिणामसङ्कोचलक्षणस्य त्यागात् आशयस्य = चित्तस्य महत्त्वं = असङ्कुचित-दानादिपरिणामशालित्वं **विज्ञेयम्** । **तत्** = औदार्यं **अत्यन्तं** = अतिशयेन गुर्वादयः = मातृपितृ-कलाचार्य-तज्ज्ञाति-

### कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> सिद्धस्य चास्य धर्मतत्त्वस्य सम्यग् लिङ्गानि तत्त्वविद्भिः भव्यानां सुखावबोधाय विहितानि ॥४/१॥ भव्यानां = योग्यानां = सहजमलह्रासवताम् । अनेनाऽचरमावर्तिभव्यादीनां व्यवच्छेदः कृतः । अवशिष्टं स्पष्टम् ॥४/१॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> अथ धर्मसिद्धेः लिङ्गानि 'औदार्यं, 'दाक्षिण्यं, पापजुगुप्सा, 'निर्मलो बोधः, प्रायेण जनप्रियत्वञ्च' ॥४/२॥ कारिकाशब्दार्थस्तु स्पष्टः । औदार्यादिलक्षणानि त्वनुपदमेव मूलग्रन्थे दर्शयिष्यते । पञ्चमगुणस्थानकं यावत् अनादेयाद्युदयात् कृतेऽपि तन्निवारणानुकूले यत्ने निरुपक्रमानादेयान्तरायादिकर्मोदयेन कदाचित् जनप्रियत्वं नापि भवेदित्यतः **'प्रायेण'** इत्युक्तमिति ध्येयम् ॥४/२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> कार्पण्यत्यागात् आशयमहत्त्वं औदार्यं विज्ञेयम् । तत् गुरु-दीनादिषु कार्ये अत्यन्तं औचित्य-वृत्ति ॥४/३॥ इयं कारिका **अधिकारविंशिकावृत्तौ** [१९] समुद्धृता । कार्पण्यत्यागादिति तात्पर्यग्राहकम् । लक्षणन्तु चित्तस्या-ऽसङ्कुचितदानादिपरिणामशालित्वम् । आदिपदेन गुर्वादिसेवा-विनय-परोपकारादिग्रहणम् । **अनेन** --> क्षुद्रतारूपस्य भवाभिनन्दि-लक्षणस्याऽभावो <-- **द्योतितः** । औदार्यपरिज्ञानोपायश्च **श्रीशान्तिसूरिभिः उत्तराध्ययनबृहद्वृत्तौ** --> परोपकारपूर्विकैव च स्वोपकारप्रवृत्तिरुदाराशयतां ख्यापयति <-- [पृ.१] इत्येवमावेदितः । **गुर्वादयः = मातृ-पितृ-कलाचार्य-तज्ज्ञाति-वृद्ध-धर्मोपदेष्टारः** इति । तेषां मातृप्रभृतीनां ज्ञातयो भ्रातृ-भगिन्यादयः । वृद्धपदेन श्रुत-वयोवृद्धा ग्राह्याः । तदुक्तं **योगबिन्दौ** --> माता पिता कलाचार्य एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ <-- [यो.बि.११०] इति ।

### રતિદાયિની (ગુજરાતી વ્યાખ્યા)

તૃતીય ષોડશકમાં ધર્મનું સ્વલક્ષણ જણાવ્યું. હવે મૂલકારશ્રી ધર્મના લિંગોને વિસ્તારથી જણાવે છે કે —

**ગાથાર્થ** - તત્ત્વવિદોએ સિદ્ધ થયેલ આ ધર્મતત્ત્વના સમ્યક્ લિંગોને ભવ્ય જીવોને સુખેથી જાણવા માટે કહેલા છે [૪/૧]

**ટીકાર્થ** - પરમાર્થવેદી મહર્ષિઓએ નિષ્પન્ન થયેલ પ્રસ્તુત ધર્મસ્વરૂપના અવિપરીતરૂપે લક્ષણો યોગ્ય જીવોને સુખેથી સમજવા માટે શાસ્ત્રમાં કહેલા છે [૪/૧]

તે લક્ષણોને જ સંખ્યાયુક્ત રીતે મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** - ઉદારતા, દાક્ષિણ્ય, પાપજુગુપ્સા, નિર્મલ બોધ અને પ્રાયઃ જનપ્રિયત્વ એ ધર્મસિદ્ધિના લિંગ છે [૪/૨]

ગાથાર્થ સ્પષ્ટ હોવાથી ટીકાકારશ્રી ન્યાયવિશારદજીએ તેની ટીકા [વિવેચના] કરેલ નથી.

મૂલકારશ્રી હવે ઉદારતાનું લક્ષણ બતાવતા કહે છે કે —

**ગાથાર્થ** - લોભના ત્યાગથી મનની મહાનતા એ ઉદારતા જાણવી. ગુરુ, દીન = ગરીબ વગેરે સંબંધી કાર્યને વિશે તે ઉદારતા અત્યંત ઔચિત્યથી પ્રવૃત્તિવાળી હોય [૪/૩]

### ⁂ ઉદારતામાં ઔચિત્ય કેળવો ⁂

**ટીકાર્થ** - લોભનો મતલબ છે દાન વગેરે પરિણામમાં સંકોચ, તેનો ત્યાગ કરવાથી ચિત્તમાં અસંકુચિતદાનાદિપરિણામયુક્તતાસ્વરૂપ મહત્ત્વ પ્રગટે છે. તેને ધર્મસિદ્ધિના લક્ષણભૂત ઉદારતા જાણવી. તે ઉદારતા ગુરુ-દીન વગેરે સંબંધી દાનાદિ કાર્યને વિશે અત્યંત ઔચિત્યથી પ્રવર્તનારી હોય. ગુરુ શબ્દનો અર્થ છે માતા, પિતા, કલાચાર્ય, તેઓના ભાઈ-બહેન વગેરે જ્ઞાતિજન, શ્રુતવૃદ્ધ-વયોવૃદ્ધ વડીલવર્ગ તથા ધર્મોપદેશક [આ બધા શિષ્ટપુરુષોમાં ગુરુ તરીકે માન્ય છે-જુઓ યોગબિંદુ ગાથા-૧૧૦] તથા દીનાદિનો મતલબ છે ગરીબ, આંધળા, લોભીયા [ભિખારી,

मदीयागम समीचीन अकरणनियमादिप्रतिपादकोऽन्याऽऽगमो न समीचीन' इत्यस्य'दुराऽऽग्रहत्वात्, सर्वस्यापि

कल्याणकन्दली

तृतीयकल्पमाविष्करोति यद्वेति । 'मदीयागमः एव समीचीन' इति । परमतमात्सर्यप्रयुक्तमेतत् । तदुक्त योगसारे --> मदीय दर्शन मुख्य पाखण्डान्यपराणि तु । मदीय आगमः सारः परकीयास्त्वसारका. ॥ तात्त्विका वयमेवान्ये भ्रान्ता सर्वेऽप्यतात्त्विकाः । इति मत्सरिणो दूरोत्सारितास्तत्त्वसारतः ॥ <-- [२/९-१०] इति । नयतत्त्वानवबोधविजृम्भितमेतत् । इदमेवाभिप्रेत्य अध्यात्मगीताया --> सर्वनयोक्ततत्त्वाना बोध विना जगज्जनाः । परस्परश्च युध्यन्ति क्लिश्यन्ति धर्मभेदत. ॥ <-- [११७] इत्युक्तम् । अकरणनियम-महाव्रतादिस्वपरिभाषाभेदेनेति । अकरणनियमलक्षणन्तु --> पावे अकरणनियमो पायं परतन्निवित्तिकरणाओ । नेयो य गठिभेए, भुज्जो तदकरणरूवो उ ॥६१५॥ <-- इत्येव उपदेशपदे वर्तते । प्रकृत प्रक्रियते- अन्यै अकरणनियमपदेन अहिंसादय. परिभाष्यन्ते, जैनैश्च महाव्रतशब्देनाभिधीयन्ते । व्रतप्रातिपदिकेन च भागवतैः, यदाहुस्ते "पञ्च व्रतानि पञ्चोपव्रतानि", व्रतानि = यमा , उपव्रतानि = नियमा इति । विष्णुभक्तिचन्द्रोदये --> ब्रह्मचर्यमहिसा च सत्यमामिषवर्जनम् । व्रते चैतानि चत्वारि चरितव्यानि नित्यश· ॥ <-- इत्युक्तम् । साङ्ख्यैः व्यासानुसारिभिश्च यमपदेना- भिलप्यन्ते 'पञ्च यमा·, पञ्च नियमाः' । तत्र यमाः अहिंसा सत्यमस्तेय ब्रह्मचर्यव्यवहारश्चेति, नियमास्तु --> 'अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् । अप्रमादश्चेति <-- [ ] । याज्ञवल्क्यस्मृतौ तु --> ब्रह्मचर्यं दया क्षान्तिर्दान सत्यमकल्कता । अहिसाऽ-स्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ स्नान मौनोपवासेज्या स्वाध्यायोपस्थनिग्रहाः । नियमा गुरुशुश्रूषा शौचाऽक्रोध- प्रमादता ॥ [प्राय.३१२/३१३] <-- इत्युक्तम् । पाशुपतैः धर्मपदेनोच्यन्ते, यतस्ते दश धर्मानाहु· "अहिसा सत्यवचनमस्तैन्य चाप्य-कल्पना । ब्रह्मचर्यं तथाऽक्रोधो ह्यार्जव शौचमेव च । सन्तोषो गुरुशुश्रूषा इत्येते दश कीर्त्तिता· ॥" <-- [ ] इति । बौद्धैस्तु कुशलधर्मपदेन प्रोच्यन्ते । यदाहुस्ते --> 'दशाऽकुशलानि, तद्यथा-हिंसा स्तेयाऽन्यथाकाम पैशून्य परुषानृतम् । सम्भि-न्नालाप व्यापादमभिध्या दृग्विपर्ययम् ॥ पापकर्मेति दशधा काय-वाङ्-मानसैस्त्यजेत् ।' [ ] <-- इति । अत्र अन्यथा- काम. = पारदार्य, सम्भिन्नालापोऽसम्बद्धभाषण, व्यापाद = परपीडाचिन्तनम्, अभिध्या = धनादिष्वसन्तोष , परिग्रह इति यावत्, दृग्विपर्ययो = मिथ्याभिनिवेश· एतद्विपर्ययाच्च दश कुशलधर्मा भवन्तीति । वैदिकादिभिश्च ब्रह्मादिनाम्ना निरूप्यन्ते । वस्तुतस्तु यमादय एव दशाविशेषमापन्ना महाव्रतादिपदेनोच्यन्ते, तदुक्त पातञ्जलयोगसूत्रे --> अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा [२/३०] जाति-देश-काल-समयानवच्छिन्ना.सार्वभौमा महाव्रतम् <-- [२/३१] । आत्मनो नित्यत्वानित्यत्व-विभुत्वाणुत्वा- बद्धत्व-बद्धत्वादिगोचरमतभेदस्य सत्त्वेऽपि अहिसा-सत्यादिस्वरूपचारित्राभ्युपगमस्तु सर्वेषु तन्त्रेषु निर्विवाद एव । तदेव च ज्ञानफलमिति न नामभेदादिकमवलम्ब्य तत्र द्वेष उचित । तदुक्त न्यायविजयेन अध्यात्मतत्त्वालोके --> ज्ञानस्य शाखा भुवि भिन्नभिन्नाश्चारित्रतत्त्व पुनरेकमेव । तदेव च ज्ञानफल विधेय न धर्मभेदे विषमाशय स्यात् ॥ <-- [८/३५] योगप्रदीपेऽपि --> धर्ममार्गा घना. सन्ति दर्शनाना विभेदत. । मोक्षार्थ समता यान्ति समुद्र सरितो यथा ॥८७॥ <-- इत्युक्तम् । इदमेवाभिप्रेत्य टीकाकृता अध्यात्मोपनिषत्प्रकरणे --> तेन स्याद्वादमालम्ब्य सर्वदर्शनतुल्यताम् । मोक्षोद्देशाविशेषेण य पश्यति स शास्त्रवित् ॥ <-- [१/७०] इत्युक्तम् । तथाऽपि नाममात्रभेदपुरस्कारेण स्वकीय-परकीययो. सम्यक्त्व-मिथ्यात्वाभिप्रायस्य दुराग्रहत्वात् = आभिग्रहिकमिथ्यात्वरूपत्वात्, अहिसादीना सर्वेषामेव धर्मत्वेनेष्टत्वात्, यथोक्त याज्ञवल्क्यस्मृतौ एव --> अहिंसा सत्यमस्तेय शौचमिन्द्रियनिग्रह । दान दया दम क्षान्ति· सर्वेषा धर्मसाधनम् ॥ <-- [५/१२२] इति । तदुक्त नीतिशतके भर्तृहरिणाऽपि --> प्राणाऽऽघातान्निवृत्ति· परधनहरणे सयम. सत्यवाक्य, काले शक्त्या प्रदान युवतिजनकथामूकभाव. परेषाम् । तृष्णास्रोतो- विभङ्गो गुरुषु च विनय सर्वभूतानुकम्पा, सामान्य सर्वशास्त्रेष्वनुपहतविधि श्रेयसामेष· पन्था ॥ [२६] <-- ।

प्रत्यन्तरे --> आग्रहत्वात् <-- इति पाठ । स चाशुद्ध । तत्त्वाभिनिवेशस्य कर्तव्यत्वात् । तदुक्त धर्मबिन्दौ --> तथा तत्त्वाभिनिवेश इति <-- [ध बि ५/४९] । वक्ष्यति चाग्रे --> 'श्रवण तत्त्वाभिनिवेशपरमफल <-- [११/४] इति। तदुक्त योगदृष्टिसमुच्चयेऽपि --> कुतर्केऽभिनिवेशस्तत्र युक्तो मुक्तिवादिनाम् । युक्त पुन· श्रुते शीले समाधौ च महात्मनाम् ॥८८॥ <-- इति । श्रुतपदेनात्राऽर्थाऽऽगमो बोध्यो न तु सूत्रागम इति ध्येयम् । तदेव स्पष्टयति --> सर्वस्यापि सद्वचनस्य

અથવા અન્ય વ્યાખ્યા એવી થઈ શકે કે ગુણ = શબ્દાર્થ શબ્દના અર્થની અપેક્ષાએ તત્ત્વ સમાન હોવા છતા અહિંસા વગેરેના નામભેદથી શાસ્ત્રોને વિશે વિપરીતદૃષ્ટિવાળો પુરુષ જેનાથી થાય છે તે દૃષ્ટિમોહ દોષ જાણવો જેમ કે સાખ્યના આગમમા હિંસાની નિવૃત્તિને 'નિયમ' કહે છે, જૈનાગમમા મહાવ્રત કહે છે અન્યના શાસ્ત્રોમા અકરણનિયમ પણ કહે છે દરેક સપ્રદાયના આગમોમા આ રીતે એક જ હિંસાનિવૃત્તિ અલગ અલગ પારિભાષિક શબ્દો દ્વારા જણાવેલ છે દૃષ્ટિસમોહ દોષના લીધે પુરુષને એવો ખોટો આગ્રહ થાય છે કે 'અહિંસાને ઉદ્દેશીને મહાવ્રત

१ मुद्रितप्रतौ 'चाग्रहत्वादि'ति पाठ ।

सद्वचनस्य परसमयेऽपि स्वसमयाऽनन्यत्वात् ।

कल्याणकन्दली

= निरुपचरितरीत्या युज्यमानार्थकस्य वचनस्य परसमयेऽपि स्वसमयाऽनन्यत्वात् = जिनवचनानतिरिक्तत्वात् ।

अत एव तस्याऽपि ग्राह्यत्वमेव । तदुक्तं विष्णुपुराणेऽपि --> युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः <--[३/१८/२०] इति । तदुक्तं योगबिन्दौ --> आत्मीयः परकीयो वा कः सिद्धान्तो विपश्चिताम् । दृष्टेष्टाऽबाधितो यस्तु युक्तस्तस्य परिग्रहः ॥५२५॥ <-- इति । लोकतत्त्वनिर्णयेऽपि --> पक्षपातो न मे वीरे न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥३८॥ <-- इत्युक्तम् । अन्यत्रापि --> निकषच्छेदतापेभ्यः सुवर्णमिव पण्डितैः । परीक्ष्य भिक्षवो ! ग्राह्यं मद्वचो न तु गौरवात् ॥ <-- [ ] इति प्रोक्तम् । सम्मतितर्केऽपि --> भद्दं मिच्छादंसणसमूहमइयस्स अमयसारस्स । जिणवयणस्स भगवओ संविग्गसुहाहिगम्मस्स ॥ [३/६९] इत्युक्तम् । तदुक्तं उपदेशपदे --> इत्तो अकरणनियमो अन्नेहि वि वण्णिओ ससत्थम्मि । सुहभावविसेसाओ न चेवमेसो न जुत्तोत्ति ॥६९२॥ जं अत्थओ अभिन्नं अण्णत्था सद्दओ वि तह चेव । तम्मि पओसो मोहो विसेसओ जिणमयठियाण ॥६९३॥ <-- इति । ततः तदपलापे परमार्थतो द्वादशाङ्ग्याशातनाऽऽपात इति तादृशः सम्मोहो विदुषा त्याज्य इत्युपदेशः । योगदीपिकायां अहिंसादीनामित्यत्र आदिपदेन सजातीयत्वात् सत्याऽस्तेयादीनां ग्रहणम् ।

उपलक्षणाच्च मुक्ति-देवादीनामुपग्रहः कार्यः । यथा कैश्चित् सदाशिवपदेन, वैदिकैः 'परं ब्रह्म' इत्युक्त्या, अन्यैः 'सिद्धात्मा' इत्येव, अपरैः 'तथाते'त्येव निर्वाणतत्त्वमभिधीयते । तदुक्तं योगदृष्टिसमुच्चये --> सदाशिवः परं ब्रह्म, सिद्धात्मा तथातेति च । शब्दैस्तदुच्यतेऽन्वर्थादेकमेवैवमादिभिः ॥१३०॥ <-- इति । एवं परमोपास्यतया जैनैः जिनोऽभिधीयते, नैयायिकैः महेश्वरः, वेदान्तिभिः ब्रह्म, क्षणिकवादिभिश्च बोधिसत्त्व इत्युच्यते, उपास्यतावच्छेदकञ्च सर्वत्र रागादिक्लेशराहित्यमेवेति न तत्त्वतो देवोऽपि भिद्यते । अयोगव्यवच्छेदद्वात्रिंशिकायामपि --> यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया । वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तु ते ॥३१॥ <-- इत्युक्तम् । तदुक्तं टीकाकृतैव परमज्योतिःपञ्चविंशतिस्तोत्रे --> बुद्धो जिनो हृषिकेशः, शम्भु-ब्रह्मादिपुरुषः । इत्यादिनामभेदेऽपि नार्थतः स विभिद्यते ॥७॥ <-- इति । अध्यात्मसारेऽपि --> मुक्तो बुद्धोऽर्हन्नन् वाऽपि यदैश्वर्येण समन्वितः । तदीश्वरः स एव स्यात् संज्ञाभेदोऽत्र केवलम् ॥ <-- [१५/६९] इत्युक्तम् । स्वसम्प्रदायप्राप्तत्वेनाभिनिवेशादेव देवग्रहो महामोह एव । तदुक्तं योगसारे --> बुद्धो वा यदि वा विष्णुः यद्वा ब्रह्माथवेश्वरः । उच्यतां स जिनेन्द्रो वा नार्थभेदस्तथापि हि ॥ [१/३६] ममैव देवो देवः स्यात् तव नैवेति केवलम् । मत्सरस्फुर्जितमेतदज्ञानानां विजृम्भितम् ॥ <-- [१/३७] । अतो नान्धश्रद्धयैव देवः उपास्यत्वेन स्वीकर्तव्यः । तदुक्तं श्रीसिद्धसेनदिवाकरसूरिभिरपि --> न केवलं श्राद्धतयैव नूयसे गुणज्ञपूज्योऽसि यतोऽयमादरः [ ] <-- । श्रीहेमचन्द्रसूरिभिरपि --> न श्रद्धयैव त्वयि पक्षपातो, न द्वेषमात्रादरुचिः परेषु । यथावदाप्तत्वपरीक्षया तु, त्वामेव वीर ! प्रभुमाश्रिताः स्म ॥२९॥ <-- इत्येवं अयोगव्यवच्छेदद्वात्रिंशिकायां प्रत्यपादि । तदुक्तं श्रीहेमचन्द्रसूरिवरेणैव महादेवद्वात्रिंशिकायां --> एकमूर्त्तिस्त्रयो भागा ब्रह्म-विष्णु-महेश्वराः । तान्येव पुनरुक्तानि ज्ञान-दर्शन-चारित्रैः ॥२०॥ ज्ञानं विष्णुः सदा प्रोक्तं, चारित्रं ब्रह्म उच्यते । सम्यक्त्वमीश्वरः प्रोक्तः, अर्हन्मूर्त्तिस्त्र्यात्मिका ॥२७॥ अकारेण भवेद् विष्णू रेफे ब्रह्मा व्यवस्थितः, हकारेण हरः प्रोक्तः तस्यान्ते परमं पदम् ॥३०॥ भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य । ब्रह्मा वा विष्णुर्वा महेश्वरो वा नमस्तस्मै ॥३३॥ <-- इति । अर्हन्नामसहस्रसमुच्चयेऽपि --> महाजिनो महाबुद्धो महाब्रह्मा महाशिवः । महाविष्णुर्महाजिष्णुर्महानाथो महेश्वरः ॥ [६/२] <-- इत्युक्तम् । तदुक्तं मूलकारैरपि लोकतत्त्वनिर्णये --> यस्य निखिलाश्च दोषा न सन्ति सर्वे गुणाश्च विद्यन्ते । ब्रह्मा वा विष्णुः वा हरो जिनो वा नमस्तस्मै ॥४०॥ परमात्मद्वात्रिंशिकायां श्रीसिद्धसेनदिवाकरसूरिभिरपि --> विधि-ब्रह्म-लोकेश-शम्भु-स्वयम्भू-चतुर्वक्त्रमुख्याभिधानां विधानम् । ध्रुवोऽथ य ऊचे जगत्सर्गहेतुः स एकः परात्मा गतिर्मे जिनेन्द्रः ॥७॥ <-- इत्युक्तम् । श्रीमुनिसुन्दरसूरिभिरपि गुर्वावल्यां --> त्वं शङ्करः सर्वजनेष्टकर्ता, ब्रह्मा त्वमेवाखिलब्रह्मनिष्ठः <-- [२४७] इत्युक्तम् । तदुक्तं योगप्रदीपेऽपि --> शङ्करो वा जिनेशो वा यो यस्याभिमतः सदा । एक एव प्रभुः शान्तो निर्वाणस्थो विलोक्यते ॥२४॥ ब्राह्मणैर्लक्ष्यते ब्रह्मा विष्णुः पीताम्बरैस्तथा । रुद्रस्तपस्विभिर्दृष्ट एष एव निरञ्जनः ॥३३॥ जिनेन्द्रो जल्प्यते जैनैः बुद्धः कृत्वा च सौगतैः । कौलिकैः कौल आख्यातः स एवायं सनातनः ॥३४॥ स्फटिको बहुरूपः स्याद्यथैवोपाधिवर्जितः । स तथा दर्शनैः षड्भिः ख्यात एकोऽप्यनेकधा ॥३५॥ <-- इति । भक्तामरस्तोत्रे श्रीमानतुङ्ग-सूरिभिरपि --> बुद्धस्त्वमेव विबुधार्चित ! बुद्धिबोधात्, त्वं शङ्करोऽसि भुवनत्रयशङ्करत्वात् । धाताऽसि धीर ! शिवमार्गविधेर्विधा-

વગેરે પ્રતિપાદક માત્ર આગમ જ સાચા છે. અકરણનિયમ વગેરેના પ્રતિપાદક અન્ય દર્શનકારોના આગમ સાચા નથી' ખરેખર આ કદાગ્રહ-ખરાબ આગ્રહ જ છે, કારણ કે પરદર્શનના આગમમાં રહેલા પણ દરેક સત્ય વચન = અબાધિત વાક્યો જૈનાગમથી અભિન્ન જ છે.

उक्तञ्च उपदेशपदे --> सव्वप्पवायमूल दुवालसग जओ जिणक्खाय । रयणागरतुल्ल खलु तो सव्व सुदर तम्मी ॥६९४॥ इत्यन्यत्र विस्तर ॥४/११॥

**कल्याणकन्दली**

नात्, व्यक्त त्वमेव भगवन् ! पुरुषोत्तमोऽसि ॥२५॥ <-- इत्येवमुक्तम् । अत्र चार्थे --> य शैवा. समुपासते शिव इति ब्रह्मेति वेदान्तिनो, बौद्धा बुद्ध इति प्रमाणपटव. कर्तेति नैयायिका. । अर्हन्नित्यथ जैनशासनरता कर्मेति मीमासका·, सोऽय मे विदधातु वाञ्छितफल त्रैलोक्यनाथो हरि. ॥ <-- [सुभाषितरत्नमाला-१३१] इत्येव परोक्तिरप्यनुसन्धेया मनीषिभिः । --> त्वामेव वीततमस परवादिनोऽपि नून विभो ! हरिहरादिर्धिया प्रपन्नाः <-- [१८] इति **कल्याणमन्दिरस्तोत्रवचनमप्यत्रानु**-सन्धेयम् । --> केनाऽपि हरि· केनाऽपि हर. प्रोच्यते पर त्वमेव स वीतराग· <-- इति **तद्वृत्तौ श्रीसमयसुन्दरोपाध्यायः**। ततश्च शब्दविशेषवाच्यतावच्छेदेन न केषामपि शिष्टाना परमोपास्यताऽभिमता किन्तु ध्वस्तदोषत्वावच्छेदेनैव दोषशून्यत्वावच्छेदेनैव वेति हृदयम् । तथापि तत्र 'जिनादिप्रतिपादको मदीयागम एव समीचीनः, महेश्वरादिप्रतिपादको नैयायिकाद्यागमो न समीचीन' इत्यस्य कदाऽऽग्रहत्वात् दृष्टिसम्मोहत्वमेव । एव सम्प्रदायकदाग्रहोऽपि त्याज्य एव, मोक्ष प्रति तस्यानुपयोगात् । तदुक्त **सम्बोधप्रकरणे** --> सेयबरो य आसबरो य बुद्धो य अहव अन्नो वा । समभावभाविअप्पा लहेइ मुक्ख न सदेहो ॥३॥ इति । --> न श्वेताम्बरत्वे न दिगम्बरत्वे न तत्त्ववादे न च तर्कवादे । न नैयायिके न मीमासके च कषायमुक्तिरेव किल मुक्ति. ॥ <-- [ ] इत्यपि विभावनीय पर्युपासितगुरुकुलै ।

उक्तञ्च मूलकारै **उपदेशपदे** --> 'सव्वप्पवाये'त्यादि । **मुनिचन्द्रसूरिकृता** तद्व्याख्या चैव --> सर्वप्रवादमूल = भिक्षु-कणभक्षाक्षपादादितीर्थान्तरीयदर्शनप्रज्ञापनानामादिकारणम् । कि तदित्याह - द्वादशाङ्ग द्वादशाङ्गानामाचारादीनामङ्गाना प्रवचनपुरुषा-वयवभूताना समाहार , यत कारणात् समाख्यात = सम्यक्प्रज्ञप्त **सिद्धसेनदिवाकरादिभि.** । यत. पठ्यते --> उदधाविव सर्वसिन्धव समुदीर्णास्त्वयि नाथ ! दृष्टय· । न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधि· ॥ <-- [श्रीसिद्धसेनसूरिकृत-द्वात्रिंशिका-४/१५] । अत एव रत्नाकरतुल्य क्षीरोदधिप्रभृतिजलनिधिनिभ, खलु = निश्चयेन, तत् । तस्मात् सर्व = अपरिशेष सुन्दर यत् किञ्चित् प्रवादान्तरेषु समुपलभ्यते तत् तत्र समवतारणीयम् । इत्यकरणनियमादीन्यपि वाक्यानि तेषु तेषु योगशास्त्रेषु व्यास-कपि[लका]लातीत-पतञ्जल्यादिप्रणीतानि जिनवचनमहोदधिमध्यलब्धोदयान्येव दृश्यानीति । तेपामवज्ञाकरणे सकलदु ख-मूलभूताया भगवदवज्ञाया प्रसङ्गान्न काचित्कल्याणसिद्धिरिति <-- [उ.प ६९४ वृत्ति] । इयञ्च गाथा **चेत्यवन्दनमहाभाष्येऽपि** दृश्यते [२१] । तदुक्त **धर्मबिन्दुवृत्तावपि** --> यच्च यदृच्छाप्रणयनप्रवृत्तेषु तीर्थान्तरीयेषु रागादिमत्स्वपि घुणाक्षरोत्किरणन्यवहारेण क्वचित्किञ्चिदविरुद्धमपि वचनमुपलभ्यते मार्गानुसारिबुद्ध्यैव वा प्राणिनि क्वचित् तदपि जिनप्रणीतमेव, तन्मूलत्वात्तस्येति [१/गा ३] <-- । युक्तश्चैतत् सापेक्षसर्वनयसमूहस्यैव स्वसमयत्वात्, यथोक्त **विशेषावश्यकमहाभाष्ये** --> मिच्छत्तमयसमूह सम्मत्त <-- [९५४] ।

इदञ्चात्रावधेय मुख्यविषये सज्ञाभेदो नागमे बाधक किन्त्वमुख्यविषये सज्ञाभेदस्तु बाधक एव, अन्यथा तत्त्वव्यवस्थाविप्ल-

मूलकारश्रीએ જ **ઉપદેશપદ** ગ્રથમા જણાવેલ છે કે --> જે કારણે રત્નાકરતુલ્ય જિનોક્ત દ્વાદશાગી સર્વ દર્શનોનુ મૂળ છે, તે જ કારણે તેમા સર્વ વસ્તુ સુદર છે <-- આ વિષયનો વિસ્તાર અન્યત્ર બતાવેલ છે [૪/૧૧]

**વિશેષાર્થ** - અહીં ધ્યાનમા રાખવા જેવી વાત એ છે કે શ્રીમદ્જીએ દૃષ્ટિસમોહ દોષની જુદા જુદા પ્રકારની ત્રણ વ્યાખ્યા કરી છે પ્રથમ વ્યાખ્યામા દૃષ્ટિસમોહ દોષનો ભોગ બનનાર મિથ્યાદૃષ્ટિ જાણવો અને તેનાથી બચનાર સમકિતદૃષ્ટિ જાણવો સસારમા રહીને સસારના ભોગસુખને બાહ્ય દૃષ્ટિએ સમાનતયા ભોગવવા છતા મિથ્યાદૃષ્ટિ તેને સારા માને છે, નિર્દોષ માને છે, કર્તવ્ય માને છે આ દુર્બુદ્ધિ દૃષ્ટિસમોહની પેદાશ છે જ્યારે સમકિતી ભોગ ભોગવવા છતા તેને ખરાબ માને છે, પાપ માને છે છોડવા જેવા માને છે તે સમ્યગ્દર્શનની નિપજ છે તેમ જ ઇતર લોકોની દ્વિવિધ હિસાપ્રવૃત્તિમા પણ આ વાત લાગુ પડી શકે દા ત સ્વૈચ્છિક હિસા અને યજ્ઞસબધી હિસા- આ બનેમા ફલ તરીકે માસભક્ષણ સમાન છે, છતા યજ્ઞીય હિસાની પ્રવૃત્તિને વિધિપ્રવૃત્તિ-વેદોક્ત ક્રિયા તરીકે જુદુ નામ આપી એમા નિષિદ્ધ પાપરૂપ સ્વૈચ્છિક હિસાથી વિપરીતદૃષ્ટિ અર્થાત્ નિર્દોષ તરીકેની દૃષ્ટિ રાખે અર્થાત્ યજ્ઞસ્થલીય હિસાને લેશ પણ પાપરૂપ ન માનતા એવી હિસા આચરે એ દૃષ્ટિનો સમોહ છે

બીજી વ્યાખ્યામા દુન્યવી સુખની લાલસાથી યજ્ઞમા નિર્દોષ પશુ વગેરેની હિસા કરનાર અને જિનપૂજામા અથવા દેરાસરની દેખભાળ વગેરે કરવામા યતનાપૂર્વક, ભાવવિશુદ્ધિથી, આગમાનુસારે, લાલસા વિના વ્યવહારથી સાવદ્ય પ્રવૃત્તિ કરનાર ઉત્સર્ગમાર્ગે શ્રાવક તથા અપવાદમાર્ગે સાધુ લઈ શકાય જેમાથી યજ્ઞહિસા કરનારની હિંસા અનુબધહિસા છે અને તે દૃષ્ટિનમોહ દોષથી પ્રયુક્ત છે કારણ કે સ્વૈચ્છિક હિસાની જેમ વૈદિક = યજ્ઞસ્થલીય હિસાની પાછળ પણ કષાયકલુષિત ક્લિષ્ટ આશય જ છે પરતુ તેનુ નામ 'વેદવિહિત' સમજી યજ્ઞીય હિસાને વિપરીત દૃષ્ટિથી નિર્દોષ દૃષ્ટિથી જુએ છે જ્યારે વિવેકી શ્રાવક વગેરેને દેરાસરના મકાન, ખેતર, ગામડા વગેરેને સાચવવામા થતી હિંસા સ્વરૂપહિસા છે અને તે દૃષ્ટિનમોહ દોષથી પ્રયુક્ત નથી કારણ કે સાસારિક-કૌટુબિક આરભ-સમારભવાળા કાર્યોની પાછળ શ્રાવકનો સ્વાર્થનો ભાવ છે અને દેરાસરના મકાન વગેરે સાચવવાની પાછળ દેવદ્રવ્યરક્ષા-વૃદ્ધિથી સ્વ-પરના ભાવ રોગના નિવાર [illegible] ણાશૂન્ય-મલિનસ્વાર્થવૃત્તિરહિત અધ્યવસાય છે તેમ જ તેમા ફલની સમાનતા પણ નથી સાસારિક આરભનુ ફળ સ્વમાલિકીનુ છે [illegible] છે, જ્યારે જિનમદિરસબ

धर्मपथ्याऽरुचिं लिङ्गद्वारा लक्षयति --> 'धर्मे'त्यादि ।

धर्मश्रवणेऽवज्ञा तत्त्वरसाऽऽस्वादविमुखता चैव । धार्मिकसत्त्वाऽसक्तिश्च धर्मपथ्येऽरुचेर्लिङ्गम् ॥४/१२॥

धर्मस्य श्रवणं = अविपरीतार्थमाकर्णनम्, तत्र अवज्ञा = अनादरः । तत्त्वे = परमार्थे' रसः तस्य आस्वादः = अनुभवः तस्मिन् विमुखता चैव । धार्मिका ये सत्त्वाः = प्राणिनः तैः सह असंवित् = असंयोगः च । धर्म एव पथ्यं, पापव्याध्यपनायकत्वात्, तत्र अरुचेः लिङ्गं, भवेदिति प्रत्येकमभिसम्बन्धनीयम् ॥४/१२॥

कल्याणकन्दली

वात् । इदमेवाभिप्रेत्य योगबिन्दौ --> अमुख्यविषयो यस्स्यादुक्तिभेदः स बाधकः । हिंसाऽहिंसादिवद्यद्वा तत्त्वभेदव्यपाश्रयः ॥ मुख्ये तु तत्र नैवासौ, बाधकः स्याद्विपश्चिताम् । हिंसादिविरतावर्थे, यम-व्रतगतो यथा ॥ <-- [२८/२९] इति दिक् । इदञ्चात्रावधेयम् - सर्वज्ञापलापादयः दृष्टिसमोहाश्रवत्वेनाभिमता । तदुक्तं --> सर्वज्ञ-सिद्ध-देवापह्नवो धार्मिकदूषणम् । उन्मार्गदेशनानर्थाग्रहोऽसंयतपूजनम् ॥ असमीक्षितकारित्वं गुर्वादिष्ववमानता । इत्यादयो दृष्टिमोहस्याऽऽश्रवाः परिकीर्त्तिताः ॥ <-- [ ] ॥४/११॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> धर्मश्रवणेऽवज्ञा, तत्त्वरसास्वादविमुखता चैव, धार्मिकसत्त्वाऽसक्तिश्च धर्मपथ्ये अरुचेः लिङ्गम् ॥४/१२॥ पाखण्डि-निह्नवादिगते धर्मश्रवणाभिलापेऽव्याप्तिवारणायाह - अविपरीतार्थ = जिनतात्पर्याऽनुसार्यर्थकं आकर्णनमिति, पाखण्डिप्रभृतीनान्तु स्वाभिप्रायानुसार्यर्थाऽऽकर्णने एवादरः, अन्यनयसापेक्षस्य स्याद्वादमुद्राङ्कितस्य केवलितात्पर्याऽऽलिङ्गितस्य धर्मतत्त्वस्य श्रवणे त्वनादर एवेति नाऽव्याप्तिः । अनादरः निद्रादिभिर्व्यङ्ग्यः । तदुक्तं धनविजयगणिना आभाणशतके --> धर्मोपदेशसमये धर्मं न शृणोति यश्च निद्राति । स्वर्णनिधिलब्धिसमये चक्षुर्विकलत्वमाप्नोति ॥ <-- [८] इति ।

उपसर्जनीकृतपरनयाभिप्रायेऽनुपसर्जनीकृतस्वाभिप्रेतनयाभिप्राये तादृशधर्मकथादिश्रवणे आदरो भवाभिनन्दिना कदाचित् स्यादित्यतः तृतीयस्य पापविकारस्य द्वितीयं लिङ्गमाह --> तत्त्वरसास्वादविमुखतेति । असंयोग इति । दर्शितलिङ्गद्वयविनिर्मुक्तोऽपि यदि साधर्मिकसङ्गपराङ्मुखस्स्यात्तदा तस्य धर्मपथ्ये परमार्थतोऽरुचिरेवाऽवगन्तव्या, धर्म्यविनाभावित्वात् धर्मतत्त्वस्य । तदुक्तं --> न धर्मो धार्मिकैर्विना <-- [ ] इति । अत एव साधर्मिकदर्शने न यस्य रोमोद्भेदः तस्य सम्यक्त्वेऽपि सशयः --> साहम्मियम्मि पत्ते नियगेहे जस्स होइ न हु नेहो । जिणसासणभणियमिणं, सम्मत्ते तस्स संदेहो ॥ <-- [ ] इत्यादिनोक्तं ॥४/१२॥

આરંભનું ફળ શ્રીસંઘની માલિકીનું છે, શાસ્ત્રીય રીતે સકલ શ્રીસંઘ હસ્તક છે

શ્રીજી વ્યાખ્યામાં 'મારું તે સાચું' આવો કદાગ્રહ દૃષ્ટિસંમોહ દોષનું કટુ ફલ છે અને 'સાચું તે મારું' આવી તટસ્થ સત્યનિષ્ઠ નિર્મલ પ્રજ્ઞા તે માર્ગસ્થ ક્ષયોપશમનું સ્વાદુ ફલ છે. સીધી વાત છે કે પોતાના બગીચામાં જે ઉગે તેને ગુલાબ કહીને બીજાના બાગમાં ઉગેલ ગુલાબને ધતુરો કહે તે કદાગ્રહ જ કહેવાય - આવું બતાવવાનો શ્રીમદ્જીનો આશય છે. [૪/૧૧]

ધર્મપથ્યને વિશે અરુચિસ્વરૂપ તૃતીય પાપવિકારને લિંગ દ્વારા જણાવતા મૂલકારશ્રી ફરમાવે છે કે —

<u>ગાથાર્થ</u> - ધર્મ સાંભળવાના વિશે અવજ્ઞા, તત્ત્વરસાસ્વાદથી વિમુખતા અને ધાર્મિક જીવો સાથે સત્સંગનો અભાવ- આ ધર્મપથ્યને વિશે અરુચિના લિંગ છે. [૪/૧૨]

## ॐ ધર્મની અરુચિને ઓળખીએ ॐ

<u>ટીકાર્થ</u> - અવિપરીતાર્થવાળું ધર્મનું શ્રવણ કરવાને વિશે અનાદર-એ ધર્મપથ્યઅરુચિનું પ્રથમ લિંગ છે. પરમાર્થને વિશે રસનો જે અનુભવ થાય તેનાથી પરાઙ્મુખતા આ ધર્મપથ્યઅરુચિનું દ્વિતીય લિંગ છે. તેમ જ ધાર્મિક જીવોની સાથે અસહવાસ - આ ધર્મપથ્યને વિશે અરુચિનું તૃતીય લિંગ છે. ધર્મને પથ્યની ઉપમા આપવાનું કારણ એ છે કે પથ્ય જેમ વ્યાધિને દૂર કરે છે તેમ ધર્મ પાપરૂપી રોગને હટાવે છે. મૂળ ગ્રંથમાં લિંગ શબ્દ એક જ છે. પરંતુ તેનો પ્રત્યેક સ્થાને સંબંધ જોડવો [જેને અમે તે રીતે જ દર્શાવેલ છે] [૪/૧૨]

<u>વિશેષાર્થ</u> - પાપી જીવો પણ ધર્મને એટલા માટે ધ્યાનથી સાંભળે કે તેમાંથી ભૂલ કાઢી શકાય, દોષારોપણ કરી શકાય. તેવું વિપરીત અર્થઘટનવાળું ધર્મશ્રવણ વ્યવસ્થિત રીતે થાય તેનો કોઈ મતલબ નથી. માટે જે તાત્પર્યાર્થને ઉદ્દેશીને તારક ધર્મ પરમાત્માએ ભાખેલો છે તેને જરા પણ બાધ ન આવે તે રીતે ધર્મનું વ્યવસ્થિત શ્રવણ ન થાય તો સમજવું કે હજુ સુધી ધર્મની અરુચિ જીવતી જાગતી અંદરમાં બેઠેલી છે. તે જ રીતે ધર્મશ્રવણમાં મજા આવવા છતાં માત્ર કથા વગેરેમાં જ રસ આવે અને જ્યાં તત્ત્વની વાત આવે કે ઝોકા આવે, તત્ત્વશ્રવણમાં કંટાળો આવે, તત્ત્વની વાતોથી ભાગવાનું મન થાય તો પણ સમજી લેવાનું કે ધર્મની અરુચિ અંદરમાં અકબંધ રહેલી છે. કદાચ ભગવાને જે ભાવથી ધર્મ બતાવેલો છે તેને તે જ રીતે આદરથી સાંભળે, તેમ જ તત્ત્વશ્રવણમાં પણ મજા આવે પરંતુ ધાર્મિક જીવો - સાધર્મિકોનો સંગ ન ગમે, સાધર્મિકથી દૂર રહેવાનું મન થાય તો સમજી લેવાનું કે અંદરમાં ધર્મની અરુચિનો વિપાક દૂર નથી થયો. અહીં એ પણ ધ્યાનમાં રાખવું કે શ્રાવક માટે જેમ શ્રાવક સાધર્મિક છે તેમ સાધુ માટે સાધુ સાધર્મિક છે અને સાધ્વી માટે સાધ્વી સાધર્મિક થાય. તેથી શ્રાવકને બીજા શ્રાવકનો સંગ ન ગમે, સાધુને બીજા સાધુનો સહવાસ ન ગમે, પોતાના આસન પાસે બીજા સાધુ પોતાનું આસન બેઠક માટે ગોઠવે તે ન ગમે, બીજા સાધુ જે રસ્તેથી આવતા હોય તે રસ્તો છોડીને બીજે રસ્તે જવાનું મન થાય, એક સાધુને બીજા સાધુનું દર્શન પણ ન ગમે ... તો આ બધા ધર્મની અરુચિના લક્ષણ જાણવા. આ ધર્મઅરુચિ જ્યાં સુધી દૂર ન થાય ત્યાં

' मुद्रितप्रतौ - 'वा' इत्यशुद्धोऽधिकः पाठः ।

अथ क्रोधकण्डूतिं चिह्नद्वारा लक्षयति --> **सत्ये**'त्यादि ।

**सत्येतरदोषश्रुतिभावादन्तर्बहिश्च यत्स्फुरणम् । अविचार्य कार्यतत्त्वं तच्चिह्नं क्रोधकण्डूतेः ॥४/१३॥**

सत्येतरदोषाणां = यथास्थिताऽसद्भूतापराधानां श्रुतिभावात् अन्तः प्रज्वलनद्वारा बहिश्चाऽप्रसन्नताव्यञ्जकाऽऽकारद्वारा **यत्स्फुरणं** = वृद्धिश्चलनं वा **अविचार्य** = अनालोच्य **कार्यतत्त्वं** = स्वात्मनोऽत्यन्ताऽहितं दुर्गतिविपाकलक्षणं क्रोधकार्यपरिणामं **तत् चिह्नं** = लक्षणं **क्रोधकण्डूतेः** = क्रोधकण्ड्वाः ॥४/१३॥

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> सत्येतरदोषश्रुतिभावात् कार्यतत्त्वं अविचार्य अन्तः बहिश्च यत् स्फुरणं तत् क्रोधकण्डूतेः चिह्नम् ॥४/१३॥

**यथास्थिताऽसद्भूतापराधानामिति** । ततश्च यथास्थितापराधश्रवणाज्जायमान ईषत्क्रोधस्तु विवक्षितक्रोधकण्डूतिविलक्षणः कदाचित् प्रशस्तोऽपि स्यात्, अयन्त्वेकान्तेनाऽप्रशस्त इति व्यज्यते । **एतेन विष्णुकुमार-सुनक्षत्र-सर्वानुभूतिप्रभृतीनामेतादृशक्रोधकण्डूतिबहिर्भावो ध्वनितः** ।

**अनालोच्य स्वात्मनोऽत्यन्ताऽहितं दुर्गतिविपाकलक्षणमिति** । यथा पूर्वभवे साधुताडनपरिणामः **चण्डकौशिकजीवस्य, स्कन्दकसूरेः पालककदाहपरिणामः, अग्निशर्मणो गुणसेनमारणपरिणामो** वा । प्रथमो मन्दानुबन्धी, द्वितीयस्तु मध्यमानुबन्धी, तृतीयश्चोत्कृष्टानुबन्धीति विभागः । दर्शितक्रोधपरिणतिश्च क्वचित् देशभेदमूला यथा हिन्दुकेषु मूलाणकादीनां, क्वचिद्देहवर्णभेदनिमित्ता यथा पश्चिमदेशीयानां पूर्वदेशीयेषु, क्वचिच्चापमानालम्बना यथा **हिटलरस्य** यहुदीप्रजासु । यद्वा विवक्षितक्रोधकण्डूतिः निवर्तनीयाऽनिवर्तनीयभेदाद् द्वेधा भिद्यते । यथा **युगबाहोर्मणिरथोपरि** क्रोधकण्ड्वा **मदनरेखोपदेशान्निवर्तनीयत्वम्** । अनिवर्तनीयक्रोधकण्डूतिश्च क्वचित् पराभवनिमित्ता यथाऽभव्यपालकस्य **स्कन्धकसूर्युपरि**, क्वचित् आजीविकोच्छेदनिबन्धना यथा **स्थूलभद्रजनक शकटालं** प्रति पुरोहितस्य, क्वचित् ईर्ष्याहेतुका यथा **चाणक्यप्रतिद्वेषिणः सुबन्धोः** मन्त्रिणः, क्वचित् जातिभेदप्रयोज्या यथा सर्पनकुलादीनां इत्यादिकं द्रव्य-क्षेत्राद्यनतिक्रमेण यथागममूहनीयमवहितमानसैः । स्वसमये चायं कषायमूढत्वेन परिभाष्यते, तदुक्तं **निशीथचूर्णौ** --> कसायमूढो कसायोदया हिताहितं इहपरलोगेसु कज्जमकज्जं वा न याणति <-- [नि.भाष्य-३७००-भाग-३-पृ.२६९]। अत एव न स धर्मयोग्यः, तदुक्तं **धर्मरत्नप्रकरणे** --> कूरो किलिट्ठभावो सम्मं धम्मं न साहिउं तरइ । इय सो न इत्थ जोगो, जोगो पुण होइ अक्कूरो ॥ <-- [१२] इति । कृत्वा च कोपं स माद्यति, बालत्वात् । यदुक्तं **सूत्रकृताङ्गे** --> बाले पावेहिं मिज्जती <-- [१/२/२/२१] इति ।

क्रोधस्य विपर्यासकारित्वं तु प्रसिद्धमेव । तदुक्तं **पुष्पमालायां** --> मित्तंपि कुणइ सत्तुं, पेच्छइ अहियं हियंपि परिहरइ । कज्जाऽकज्जं न मुणइ कोवस्स पसंगओ पुरिसो ॥ धम्मत्थकामभोगाण हारणं, कारणं दुहसयाणं । मा कुणसु कयभवोहं कोहं जइ जिणमयं मुणसि ॥ इह लोइ च्चिय कोवो सरीरसंताव-कलह-वेराइं । कुणइ पुणो परलोगे नरगाइसु दारुणं दुक्खं ॥ [२९१-९२-९३] <-- इत्यादि । संयमिना तु विशेषतो वैश्वानरस्त्याज्यः, अन्यथा दीर्घचारित्रस्याप्युच्छेदापत्तेः । यथोक्तं **निशीथभाष्ये बृहत्कल्पभाष्ये सम्बोधसप्ततिप्रकरणे** च --> जं अज्जियं चरित्तं देसूणाए वि पुव्वकोडीए । तं पि कसाइयमेत्तो नासेइ नरो मुहुत्तेणं ॥ <-- [नि.भा.२७९३ बृ.भा.२७१५ सं.स.६८] इति । --> जं अइतिक्खं दुक्खं जं च सुहं उत्तमं तिलोईए । तं जाण कसायाणं वुड्ढिक्खयहेउअं सव्वं ॥१५२॥ <-- इति **भक्तपरिज्ञाप्रकीर्णकवचनमप्यत्रानुसन्धेयम्** । **वाल्मीकीरामायणेऽपि** --> नाऽकार्यमस्ति क्रुद्धस्य नाऽवाच्यं विद्यते क्वचित् <-- [सुन्दरकाण्ड-५५/५] इत्येवं क्रोधस्यात्यन्तहेयतोक्ता । **चरकसंहितायामपि** --> नाकार्यमस्ति क्रुद्धस्य नावाच्यमपि विद्यते । कुशलान्नाभिनन्दन्ति कलहं समितौ सताम् ॥ <-- [३/८/२३] इत्युक्तम् । ततः क्रोधे एव क्रोधः कार्यः, यदुक्तं **याज्ञवल्क्योपनिषदि** --> अपकारिणि कोपश्चेत् कोपे कोपः कथं न ते ? <-- [२९] । यद्यपि कषायसजातीयत्वात् मान-मायादीनामपि पापविकारत्वमविशिष्टमेव तथापि प्राधान्यात् वैश्वानरस्य

સુધી તાત્ત્વિક રીતે જિનશાસનમાં પ્રવેશ મળી ન શકે. સંયોગવશ સત્સંગ ન થાય તેવું બને પણ સત્સંગ ન ગમે- તે તો હરગીજ ન ચાલે. સાંપ્રતકાલે દરેક ધર્માત્માએ આ વાત ઉપર વિશેષ રીતે ગંભીરતાથી વિચાર કરવાની આવશ્યકતા છે [૪/૧૨]

હવે ક્રોધસ્વરૂપ ખજવાળને ચિહ્ન દ્વારા મૂલકારશ્રી બતાવે છે

<u>ગાથાર્થ</u> - સાચા કે ખોટા દોષ સાંભળવાથી, કાર્યતત્ત્વનો વિચાર કર્યા વિના, અંદર અને બહાર જે સ્ફુરણ થાય તે ક્રોધરૂપી ખજવાળનું ચિહ્ન છે [૪/૧૩]

## ❈ પ્રશસ્ત-અપ્રશસ્ત ક્રોધની ભેદરેખા ❈

<u>ટીકાર્થ</u> - સાચા કે ખોટા અપરાધોને સાંભળવાથી અંદર પ્રજ્વલન દ્વારા અને બહાર અપ્રસન્નતાસૂચક આકાર દ્વારા જે સ્ફુરણ-વૃદ્ધિ-ચલન-કંપન થાય અને તે પણ ક્રોધ કરવાના પરિણામે દુર્ગતિમાં પડવારૂપી પોતાના અત્યંત અહિતનો વિચાર કર્યા વિના-આ ક્રોધરૂપી ખજવાળનું

निगमयति -> 'एत' इत्यादि ।

एते पापविकारा न प्रभवन्त्यस्य धीमतः सततम् । धर्माऽमृतप्रभावाद् भवन्ति मैत्र्यादयश्च गुणाः ॥४/१४॥

**एते** = विषयतृष्णादयः पूर्वोक्ताः **पापविकारा न प्रभवन्ति** = न जायन्ते **अस्य** पुरुषस्य **धीमतः** = बुद्धिमतः **सततं** = अनवरतम् । धर्ममेव यत् अमृतं पापविषनाशकत्वात्, तस्य प्रभावात् । तथा चैतानि दोषाभावरूपाणि धर्मतत्त्वलिङ्गान्युक्तानि । अथाभ्यासिकगुणरूपाणि तल्लिङ्गान्याह -> **मैत्र्यादयश्च गुणा** वक्ष्यमाणस्वरूपा **धर्मामृतप्रभावात्** एव (**भवन्ति** =) सम्पद्यन्ते ॥४/१४॥ मैत्र्यादिलक्षणमाह -> **'परे'**त्यादि ।

**कल्याणकन्दली**

शृङ्गग्राहिकया निर्देशोऽकारि । नीतिविदस्तु -> उत्तमस्य क्षणं कोपः, मध्यस्य प्रहरद्वयम् । अधमस्य त्वहोरात्रं, नीचस्य मरणं ध्रुवम् ॥ [ ] <- इत्याहुः । तथा -> क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः । स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ <- [२/६३] इत्येवं भगवद्गीतायामपि क्रोधस्य सर्वनाशप्रयोजकत्वमावेदितम् । निशीथभाष्येऽपि -> कोहाति अणिग्गहिया सचंति भवं निरवसेसं <- [६२७०] इत्येवं क्रोधादेः भववर्धकत्वमुक्तम् । प्रकृते च 'तद्ग्रहणे तत्सजातीयोऽपि गृह्यते' इति न्यायात् मानादिकमपि ग्राह्यम् । तदुक्तं दशवैकालिके -> कोहो य माणो य अणिग्गहीया, माया य लोभो य पवड्ढमाणा । चत्तारि एते कसिणा कसाया सिंचंति मूलाइ पुणब्भवस्स ॥ <- [८/४०] इति । ततश्च -> सत्येतरगुणश्रुतिभावादन्तर्बहिश्च यत्स्फुरणम् । अविचार्य कार्यतत्त्वं तदिह मानकृन्दूते ॥ <- इत्यादिकमुन्नेयं स्वधियेति दिक् ॥४/१३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> सततं धर्मामृतप्रभावात् एते पापविकारा अस्य धीमतः न प्रभवन्ति मैत्र्यादयश्च गुणा भवन्ति ॥४/१४॥

यथा भेषजात् पूर्वरोगनाशे बल-पुष्ट्यादयो गुणा भवन्ति तथा सद्धर्मौषधात् पूर्वोक्तपापज्वरप्रध्वंसे मैत्र्यादिगुणाः प्रादुर्भवन्तीति तुल्यमेव । अमृतस्य परमौषधत्वात् धर्मौषधप्रभावादित्यनुक्त्वा धर्मामृतप्रभावादित्युक्तं, पूर्वं [४/८] तु कार्ये कारणोपचारात् 'धर्मारोग्ये' इत्युक्तमिति न पूर्वापरविरोधलेशोऽपीति ध्येयम् ।

आभ्यासिकगुणरूपाणीति । इदञ्चावधेयमत्र प्रीति-भक्ति-वचनाऽसङ्गभेदादनुष्ठानं चतुर्धा भिद्यते । तत्राऽऽद्ये आभ्यासिकरूपे, अभ्यस्तदशायामुत्तरकाले चान्त्ये ज्ञेये । आद्ययोः धर्मानुष्ठानत्वसम्पादनाय मैत्र्यादयश्च गुणा उपयुज्यन्ते, तद्वैकल्ये तत्त्वानुपपत्तेः । इदमेवाभिप्रेत्य धर्मबिन्दौ मूलकारैः -> वचनाद्यदनुष्ठानमविरुद्धाद्यथोदितम् । मैत्र्यादिभावसंयुक्तं तद्धर्म इति कीर्त्यते ॥ <-[१/३] इति कथितम् । तन्त्रान्तरीयाणामपि मैत्र्यादिभावेषु निःश्रेयसाभ्युदयफलकधर्मकल्पद्रुममूलत्वमभीष्टमिति दिक् । शिष्टं स्पष्टम् ॥४/१४॥

વિક છે [૪/૧૩]

<u>**વિશેષાર્થ**</u> - કષાયમાત્ર ભૂંડા છે છતા તેમા ક્રોધ પ્રધાન હોવાથી, તેમ જ સરળતાથી ઓળખી શકાય તેવો હોવાથી અહીં ક્રોધનો નિર્દેશ કરવામા આવેલ છે ક્રોધ અને બેલગામ ક્રોધ અથવા તો પ્રશસ્ત ક્રોધ અને અપ્રશસ્ત ક્રોધ - આ બે વચ્ચે આકાશ-પાતાળ જેટલુ અતર છે જે ક્રોધ અલ્પકાલીન હોય, અલ્પ પાવરવાળો હોય, હકીકતમા ભૂલ હોય તો જ સામેની વ્યક્તિને [કે જે મધુર વચન દ્વારા સુધરવાની શક્યતા ન હોય અને જે અનેકને નુકશાન કરનાર હોય તેને] સુધારવાની દૃષ્ટિથી અધિકૃત માણસથી વિવેકપૂર્ણ સભાનપણે થાય અને ગુસ્સાની આગળ-પાછળ કે ગુસ્સાના સમયે સામેની વ્યક્તિ ઉપર દ્વેષ ન હોય તો તેને પ્રશસ્ત ક્રોધ કહેવાય, જે પ્રસ્તુતમા પાપવિકારરૂપે માન્ય નથી પરતુ સામેની વ્યક્તિનો વાક હોય કે ન હોય, કોઈ સાચા કે ખોટા દોષ બતાવે કે તુરત ભડકો થાય, આખ લાલ થાય, હોઠ-હાથ-પગ ધ્રૂજે, મોઢાની રેખા વિકરાળ બની જાય, અને ક્રોધ કર્યા પછી પણ સ્વભાવસ્થ બનતા વાર લાગે થોડા ગુસ્સાથી કામ પતી જવા જેવુ હોય ત્યા બેહદ ગુસ્સો થાય, ક્રોધના પરિણામનો વિચાર કર્યા વિના બેભાનપણે-ક્રોધાધ થઈને જે વૈશ્વાનરની જ્વાળા પ્રગટે તે અપ્રશસ્ત કષાય કહેવાય તે પ્રસ્તુતમા પાપવિકારરૂપે માન્ય છે આ ક્રોધની ભૂતાવળમાથી સાચો ધર્મી મુક્ત હોય [૪/૧૩]

પ્રસ્તુત પાપવિકારનિરૂપણનો ઉપસહાર કરતા મૂલકારશ્રી જણાવે છે કે —

<u>**ગાથાર્થ**</u> - નિરતર ધર્મામૃતના પ્રભાવથી આ પાપવિકારો પ્રસ્તુત બુદ્ધિશાળીને થતા નથી અને મૈત્રી વગેરે ગુણો પ્રગટ થાય છે [૪/૧૪]

<u>**ટીકાર્થ**</u> - પાપરૂપી ઝેરનો નાશ કરવાના લીધે ધર્મ એ અમૃત છે સતત તેના સેવનના પ્રભાવથી પૂર્વોક્ત વિષયતૃષ્ણા વગેરે પાપવિકારો પ્રસ્તુત બુદ્ધિશાળી જીવને થતા નથી આ રીતે ધર્મતત્ત્વના દોષાભાવસ્વરૂપ લિગોને શ્રીમદ્જીએ જણાવ્યા હવે આભ્યાસિક ગુણસ્વરૂપ ધર્મતત્ત્વલિગોને જણાવતા શ્રીમદ્જી કહે છે કે- ધર્મામૃતના પ્રભાવથી જ મૈત્રી વગેરે ગુણો સપન્ન થાય છે મૈત્રી વગેરેનુ સ્વરૂપ આગળના શ્લોકમા કહેવાશે [૪/૧૪]

<u>**વિશેષાર્થ**</u> - જેમ દવાના કે અમૃતના સતત સેવનથી પૂર્વોત્પન્ન રોગો નાશ પામે છે અને ત્યાર બાદ તદુરસ્તી, બળ, સ્ફુર્તિ-ઓજસ વગેરે ગુણો પ્રગટે છે તો જ તે દવા-અમૃતનુ સેવન સાર્થક બને તેમ ધર્મના સતત સેવનથી વિષયવાસના વગેરે દોષો નાશ પામે અને મૈત્રી વગેરે ગુણો પ્રગટે તો જ તે ધર્મ તાત્ત્વિક કહેવાય, બાકી નહિ [૪/૧૪]

परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥४/१५॥

परेषां प्राणिनां हितचिन्ता मैत्री ज्ञेया । परेषां यत् दुःखं तद्विनाशिनी परिणतिः करुणा । परेषां यत् सुखं

## कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> परहितचिन्ता मैत्री, परदुःखविनाशिनी करुणा, परसुखतुष्टिर्मुदिता तथा परदोषोपेक्षणं उपेक्षा ॥४/१५॥ इयञ्च कारिका अध्यात्मकल्पद्रुम-धर्मबिन्दुवृत्ति-धर्मरत्नप्रकरणवृत्त्यधिकारविंशिकावृत्ति-योगसूत्रटिप्पणादौ [अ.क.१२ ध.र.पृ.२८८ ध.बि.३/९३ वृ.पृ.१०५ अ.विं.गा.१९ यो.सू.१/३३] समुद्धृता वर्तते ।

**परहितचिन्ता मैत्रीति** । परपदेन सर्वे प्राणिनो ग्राह्याः । तदुक्तं **उत्तराध्ययनसूत्रे** --> सव्वपाणभूअजीवसत्तेसु मित्तीभावं उप्पाएइ <-- [२८/१७-पृ.५२४]। तदुक्तं **आवश्यकसूत्रे** --> मित्ती मे सव्वभूएसु' <-- [४९] । **वैराग्यकल्पलतायामपि** --> मैत्री समस्तसत्त्वेषु भावनीया प्रयत्नतः <-- [९/३६८ पृ.२१०] इत्युक्तम् । **शास्त्रवार्तासमुच्चयेऽपि** --> मैत्री सत्त्वेषु भावतः <-- [१/६] इत्युक्तम् । **उत्तराध्ययने** [६/२] **सूत्रकृताङ्गेऽपि**--> मेत्तिं भूएसु कप्पए <-- [१/१५/३] इत्युक्तम् । **प्रतिमाशतकेऽपि** --> मैत्री सत्त्वेष्वनेन विधिना भव्यः सुखी स्यादिति <-- [३३] प्रोक्तम् । **समरादित्यकथायामपि** --> मेत्ती सव्वेसु चेव जीवेसु <-- [भव-१ पृ.७० गाथा-१९] इत्युक्तम् । **पञ्चाशकेऽपि** --> मेत्तादिगुणण्णिया य णियमेण सत्ताइसु होति दढं <-- [४२] इत्युक्तम् । **वीतरागस्तोत्रावचूरिकारः सोमोदयगणी** अपि --> मैत्री = हितबुद्धिः <-- [१७/६] इत्याह । हितचिन्ता च --> जीवन्तु जन्तवः सर्वे क्लेशव्यसनवर्जिताः । प्राप्नुवन्तु सुखं त्यक्त्वा, वैरं पापं पराभवम् ॥ <-- [२७/७] इत्येवं **ज्ञानार्णवे शुभचन्द्रेण** प्रदर्शिता । **कालिदासेन विक्रमोर्वशीये** --> सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यन्तु । सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥ <-- [५/२५] इत्येवं हितचिन्तोक्ता । तदुक्तमन्यत्रापि --> सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥ [ ] <-- इति । **भक्तपरिज्ञायां** --> जह ते न पिअं दुक्खं जाणिअ एवमेव सव्वजीवाणं । सव्वायरमुवउत्तो अत्तोवमेण कुणसु दयं ॥९०॥ <-- इत्येवं मैत्रीभावनोक्ता । **निशीथचूर्णिकारमते** --> मित्तभावो मैत्री <-- [नि.भा.गा.२७३४ भा.३-पृ.३०] **सर्वार्थसिद्धिकारस्तु**--> परेषां दुःखानुत्पत्त्यभिलाषा मैत्री <-- [७/११/३८९] इत्याह । **तत्त्वामृते** --> सर्वसत्त्वे दया मैत्री <-- [२६३] इत्युक्तम् । **स्याद्वादकल्पलतायां** प्रोक्तं --> मैत्री = प्रत्युपकारनिरपेक्षा प्रीतिः <-- [१/६] । **पुष्पमालायान्तु** --> सीलधम्मं सव्वजीवेसु निरीहभावेण मेत्तीकरणं <-- [ ] इत्युक्तम् । **तत्त्वार्थसिद्धसेनीयवृत्तौ** च --> मिद्यतीति मित्रं, स्निह्यतीत्यर्थः । तस्य भावः समस्तसत्त्वविषयः स्नेहपरिणामो मैत्री <-- [७/६] इत्युक्तम् । **आयुर्वेददीपिकाभिधानायां चरकसंहितावृत्तौ चक्रपाणिदत्तेन** --> मैत्री च सर्वप्राणिष्वात्मनीव बुद्धिः <-- [१/३१] इत्युक्तम् । ततश्च समाधिप्राप्तिः, यथोक्तं **विसुद्धिमग्गग्रन्थे** --> मेत्ता-विहारिनो खिप्पमेव चित्तं समाधीयति <-- [९/७३] । शुद्धप्रेमलभ्या मैत्री समाधये उपयुज्यते । तदुक्तं **प्रेमगीतायां** --> सर्वजीवैः सह प्रेम मैत्रीभावाय जायते । ततः समत्वसंलाभात् समाधिर्जायते सताम् ॥ <-- [१५५] इति । विशेषतः इयं शत्रुप्रभृतौ भावनीया । तदुक्तं **योगवाशिष्ठे व्यासेन** --> अमृतत्वं विषं याति सदैवाऽमृतवेदनात् । शत्रुर्मित्रत्वमायाति, मित्रसंवित्तिवेद-नात् ॥ <-- [ ] इति । **विष्णुपुराणेऽपि** --> मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम् <-- [३/८/२४] इत्युक्तम् । ब्राह्मणस्तु --> योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम् ॥ <-- [६/२०] इति **वशिष्ठस्मृतिदर्शितो**, यद्वा --> न जटाहि न गोत्तेहि न जच्चा होति ब्राह्मणो । यम्हि सच्चं च धम्मो च सो सुची सो च ब्राह्मणो ॥ [२६/११] इति **धम्मपदोक्तो**, यद्वा --> न ब्राह्मणो बहिवण्णो अन्तो वण्णो हि ब्राह्मणो [२/१४०] इति **थेरगाथादर्शितः**, यद्वा --> अलोलुयं मुहाजीविं अणगारं अकिंचणं । असंसत्तं गिहत्थेहिं तं वयं बूम माहणं ॥ [२५/२८] इति **उत्तराध्ययनसूत्रप्रदर्शितः** ज्ञेयः ।

**परदुःखविनाशिनी करुणेति** । तदुक्तं **तत्त्वार्थराजवार्त्तिके** --> दीनानुग्रहभावः कारुण्यम् <-- [७/११/३/५३८/१९] इति । **मूलाराधनायां** हि --> शारीरं, मानसं, स्वाभाविकञ्च दुःखमसह्यमाप्नुवतो दृष्ट्वा 'हा ! वराकाः ! मिथ्यादर्शनेनाऽ-

મૂલકારશ્રી મૈત્રી વગેરેના લક્ષણ જણાવતા કહે છે કે —

**ગાથાર્થ** - પરહિતચિંતા = મૈત્રી. પરદુઃખનાશક પરિણતિ = કરુણા. બીજાના સુખમાં આનંદ = મુદિતા [પ્રમોદ] તથા બીજાના દોષની ઉપેક્ષા કરવી તે ઉપેક્ષા = મધ્યસ્થતા [૪/૧૫]

### ⋙ મૈત્રી વગેરે ધર્મફળ છે ⋘

**ટીકાર્થ** - બીજા પ્રાણીઓની હિતચિંતા કરવી તે મૈત્રી જાણવી. બીજા પ્રાણીઓનું જે દુ... નાશ કરનાર પરિણતિ એટલે

तेन तस्मिन् वा तुष्टि = अप्रीतिपरिहारो मुदिता । परेषा दोषा अविनयादयोऽप्रतीकार्यास्तेषा उपेक्षण = अवधीरण उपेक्षा । सम्भवत्प्रतीकारेषु तु दोषेषु सापेक्षयतिना नोपेक्षा विधेया ॥४/१५॥ उपसहरन्नाह –> 'एतत्' इत्यादि ।

कल्याणकन्दली

विरत्या कषायेणाऽशुभेन योगेन च समुपार्जिताशुभकर्मपर्यायपुद्गलस्कन्धतदुपोद्भवा विपदो विवशा प्राप्नुवन्ति इति करुणा <– [१६९६/१०१६/१३] इति प्रोक्तम् । परसुखतुष्टिः = मुदिता इति । तदुक्त सर्वार्थसिद्धौ –> वदनप्रसादादिभिरभिव्यज्यमानान्तर्भावित-राग प्रमोद <– [७/११/३४०] इति । तत्त्वार्थस्वोपज्ञभाष्ये तु –> गुणाधिकेषु प्रमोदो नाम विनयप्रयोग. <– [७/६] इत्युक्तम् । साम्प्रत गुणदुर्लभे काले तु विशेषत इय भावना कार्या, यथोक्त –> सपइ दुसमसमए, दीसइ थोवो वि जस्स धम्मगुणो । बहुमाणो कायव्वो, तस्स सया धम्मबुद्धिए ॥ <– [ ] इति ।

तेषा = अप्रतीकार्याणा परदोषाणा उपेक्षणम्, जमालि प्रति जगद्गुरोरिव । तदुक्त शान्तसुधारसे –> मिथ्या शसन् वीरतीर्थेश्वरेण रोद्धु शेके न स्वशिष्यो जमालि । अन्य को वा रोत्स्यते केन पापात्तस्मादौदासीन्यमेवात्मनीनम् ॥[१६/३] <– इति । प्रभानन्दसूरिभिरपि वीतरागस्तोत्रविवरणे –> नास्तिक-निस्त्रिशादिनिर्गुणजनमाध्यस्थ्य = उपेक्षा <– [३/१०] इत्युक्तम् । 'सापेक्षयतिना' इत्यनेन निरपेक्षयतीना जिनकल्पप्रभृतीना व्यवच्छेद कृत । ततश्च सापेक्षयत्यपेक्षया उपेक्षाया सावच्छिन्नत्व निरपेक्षयत्यपेक्षया च निरवच्छिन्नत्वमिति भास्वान् भगवान् स्याद्वाद एवात्राऽपि विजयी । अनधिकारिण प्रवर्त्तने दोष अधिकारिणश्चाऽप्रवर्तने दोष इति भाव । नोपेक्षा विधेयेति । तथा च चिकित्स्यस्योपेक्षणे चिकित्सकस्य दोष, अचिकित्स्यस्य चिकित्साकरणे च केवल क्लेश इति तत्रोपेक्षा एव । यथोक्त धर्मरत्नप्रकरणे –> अचताऽजोग्ग पुण अरत्तदुट्ठो उवेहेइ <– [१२४] । तदुक्त पञ्चवस्तुकेऽपि –> जह लोअम्मि वि विज्जो, असज्जवाहीण कुणइ जो किरिय । सो अप्पाण तह वाहिए अ पाडेइ केसम्मि ॥४७॥ <– इति । इत्थमेव स्वस्य विज्ञत्वोपपत्ते । तदुक्त आचाराङ्गे –> उवेहेण ण बहिया य लोग से सव्वलोगम्मि जे विण्णू <– [१/४/३] इति । न च तत्र द्वेष-निन्दादिक कार्यं, सम्यग्दर्शनव्याघातापत्ते, तदुक्त पुष्पमालाया –> सव्वत्थ उचियकरण गुणाणुराओ रई य जिणवयणे । अगुणेसु य मज्झत्थ, सम्मद्दिट्ठिस्स लिगाइ ॥१११॥ <– इति । साम्प्रत तु विशेषत उपेक्षाऽऽत्मसात् कर्तव्या । तदुक्त योगसारे –> असदाचारिण प्रायो लोका कालानुभावत । द्वेषस्तेषु न कर्तव्य सविभाव्य भवस्थितिम् ॥ <– [३/२८] इति भावनीयम् ।

मैत्र्यादिकमुद्दिश्य योगशास्त्रेऽपि श्रीहेमचन्द्रसूरिभिः –> मा कार्षित् कोऽपि पापानि, मा च भूत् कोऽपि दु खित. । मुच्यता जगदप्येषा मतिर्मैत्री निगद्यते ॥ अपास्ताशेषदोषाणा, वस्तुतत्त्वावलोकिनाम् । गुणेषु पक्षपातो य, स प्रमोद प्रकीर्त्तित. ॥ दीनेष्वार्त्तेषु भीतेषु, याचमानेषु जीवितम् । प्रतीकारपरा बुद्धि, कारुण्यमभिधीयते ॥ क्रूरकर्मसु नि शङ्क देवतागुरुनिन्दिषु । आत्मशसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥ <– [४/११८-११९-१२०-१२१] इति । अध्यात्मतत्त्वालोकेऽपि –> भवन्तु सर्वे सुखिनोऽसुभाजो मा कोऽपि पापाचरणानि कार्षीत् । एव जगज्जन्तुषु चित्तवृत्ति कल्याणभावा प्रवदन्ति मैत्रीम् ॥ देदीप्यमाना गुणगौरवेण महाशया ये सुजना जगत्याम् । गुणेषु तेषा बहुमानभाजो यस्त प्रमोद परिकीर्त्तयन्ति ॥ दीनेषु दारिद्र्यपराहतेषु क्लिष्टेषु भीतेषु च रोगितेषु । वृत्ति प्रतीकारपरायणा या कारुण्यभाव परिकीर्त्तिता सा ॥ जगद् विचित्र भविभिर्विचित्रैर्विचित्रकर्मैरितवृत्तिभाग्भि । भजन्ति माध्यस्थ्यमवेक्ष्य धीरा दुष्टेषु दुष्टाचरणस्य कोऽर्थ ? ॥ <– [६/१५-१८] इत्येव न्यायविजयेन भावनाचतुष्कस्वरूपवर्णनमकारि । ज्ञानार्णवे शुभचन्द्रेणाऽपि विस्तरतो मैत्र्यादिभावनाचतुष्टयस्वरूपमुपदर्शित तत्तत [ज्ञाना २७/४-१५] विज्ञेयम् । उपमितिभवप्रपञ्चाभिधानाया कथाया श्रीसिद्धर्षिगणिना –> जीवेन सत्त्व-गुणाधिक-क्लिश्यमानाऽविनेयेषु मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि समाचरणीयानि <– [पृ ७३] इति तद्विषयमुक्त्वा बुद्धसूरिदेशनाया तत्रैव –> अनुकूलचारिणी मैत्री अकारणवत्सला करुणा । सदानन्ददायिनी मुदिता सर्वोद्वेगविघातिनी उपेक्षेति ॥ <– [पृ ५१७] तत्स्वरूपमुक्तम् । आत्मदर्शनगीताया श्रीबुद्धिसागरसूरिभि –> मित्रभावश्च जीवेषु प्रमोद सज्जनेषु च । कृपादृष्टिश्च दीनेषु माध्यस्थ्य भावयेच्छुभम् ॥२६॥ इत्येवमुक्तम् । भावदेवसूरिभि पार्श्वनाथचरित्रे –> मैत्री परहिते चिन्ता, परार्तिच्छेदधी

કરુણા બીજા જીવોનુ જે સુખ હોય તેનાથી અથવા તો તેના વિશે આનદ થવો-અપ્રીતિ ન થવી તે મુદિતા = પ્રમોદ ભાવ જાણવો જેનો પ્રતીકાર થઈ ન શકે, તેને દૂર કરવાનો કોઈ ઉપાય ન હોય તેવા પરકીય અવિનયાદિ દોષની ઉપેક્ષા કરવી, તેના પ્રત્યે તટસ્થ રહેવુ તે ઉપેક્ષા = મધ્યસ્થતા જે દોષોને દૂર થવાના ઉપાય વિદ્યમાન હોય તેવા પરકીય દોષોની ઉપેક્ષા સાપેક્ષ યતિ = સ્થવીરકલ્પી સાધુએ ન કરવી અર્થાત્ તે તે ઉપાયોમા પ્રવૃત્તિ કરીને પ્રતીકાર્ય પરકીય દોષને દૂર કરવા [જિનકલ્પી = નિરપેક્ષ સાધુ તો તેની પણ ઉપેક્ષા કરે ][૪/૧૫]

**एतज्जिनप्रणीतं लिङ्गं खलु धर्मसिद्धिमज्जन्तोः । पुण्यादिसिद्धिसिद्धेः सिद्ध सद्धेतुभावेन ॥४/१६॥**

**एतत्** पूर्वोक्त औदार्यादि सर्वमेव **जिनप्रणीत** = जिनोक्त **लिङ्ग** = लक्षण, खलुशब्दो वाक्यालङ्कारे **जन्तो**

**कल्याणकन्दली**

कृपा । मुदिता सद्गुणे तृष्टिर्माध्यस्थ्य पाप्युपेक्षणम् ॥ <-- [सर्ग-६ गा ३८३] इत्युक्तम् । **तत्त्वार्थसूत्रे**ऽपि --> मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि सत्त्व-गुणाधिक-क्लिश्यमानाऽविनेयेषु <-- [७/६] इत्युक्तम् । **योगविन्दावपि** --> मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यपरिचिन्तनम् । सत्त्व-गुणाधिक-क्लिश्यमानाऽप्रज्ञाप्यगोचरम् ॥४०२॥ <-- इत्युक्तम् । **योगशतके**ऽपि --> सत्तेसु ताव मेत्ति, तहा पमोय गुणाहिएसु ति । करुणा-मज्झत्थत्ते किलिस्समाणाऽविणेएसु ॥७९॥ <-- इति प्रोक्तम् । **शान्तसुधारसे**ऽपि --> मैत्री परेषा हितचिन्तन यत् भवेत् प्रमोदो गुणपक्षपात । कारुण्यमार्ताङ्गिरुजा जिहीर्षेत्युपेक्षण दुष्टधियामुपेक्षा ॥<-- [१३/३] इति **विनयविजयवाचकेनोक्तम्** । **परमात्मद्वात्रिंशिकाया** --> सत्त्वेषु मैत्री, गुणिषु प्रमोद, क्लिष्टेषु जीवेषु कृपा-परत्वम् । माध्यस्थ्यभाव विपरीतवृत्तौ, सदा ममात्मा विदधातु देव ! ॥ [१]<-- इति **अमितगति**वचनमप्यत्रैवानुपतति । **धर्मविन्दो** अपि --> तथा सत्त्वादिषु मैत्र्यादियोग. <-- [३/९३] इत्युक्तम् । **ध्यानदीपिकाया श्रीसकलचन्द्रवाचकेन** --> प्राणभूतेषु सर्वेषु सुख-दु खस्थितेषु च । वैरिमित्रेषु जीवेषु मैत्री स्यात् हितधी सताम् ॥१०८॥ वध-बन्धनरुद्धेषु निस्त्रिंशै· पीडितेषु च । जीवित याचमानेषु दयालो· करुणा मता ॥१०९॥ जिनधर्मजुषा ज्ञानचक्षुषा च तपस्विनाम् । नि कषायजिताक्षाणा गुणे मोद प्रमोदता ॥११०॥ देवगुर्वागमाचारनिन्दकेष्वात्मशसिषु । पापिष्ठेषु च माध्यस्थ्य सोपेक्षा च प्रकीर्तिता ॥१११॥ <-- इत्येव मैत्र्यादिस्वरूपमावेदितम्। **योगसारे** --> परे हितमतिर्मैत्री मुदिता गुणमोदनम् । उपेक्षा दोषमाध्यस्थ्य करुणा दु ख-मोक्षधी । मैत्री निखिलसत्त्वेषु प्रमोदो गुणशालिषु । माध्यस्थ्यमविनेयेषु करुणा दु खदेहिषु ॥ <-- [२/५-६] इत्येव भावना-चतुष्कस्वरूपमावेदितम् । **अध्यात्मकल्पद्रुमे मुनिसुन्दरसूरिभि·** --> मैत्री परस्मिन् हितधी· समग्रे भवेत्प्रमोदो गुणपक्षपात । कृपा भवार्ते प्रतिकर्तुमिहोपेक्षैव माध्यस्थ्यमवार्यदोषे ॥ <-- [१/११] इत्युक्त सक्षेपत· । **योगसारसङ्ग्रहे** तु **विज्ञानभिक्षुणा** --> सुखितेषु मैत्री, दु खितेषु करुणा, पुण्यशीलेषु हर्ष., पापशीलेषूपेक्षा <-- [अ २. पृ २७] इति कथितम् । तदुक्त **पातञ्जल-योगसूत्रे**ऽपि --> मैत्री-प्रमोद-मुदितोपेक्षाणा सुखदु ख-पुण्याऽपुण्यविषयाणा भावनात चित्तप्रसादनम् <-- [१/३३] इति । धर्मध्यानाधिकारिविशेषणविधया **स्याद्वादकल्पलतायामपि** --> मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यपवित्रितचित्त <--[पृ ३३६] इत्युक्तम् । **वराहोपनिषदि** --> मुदिता करुणा मैत्री उपेक्षा च चतुष्टयम् <-- [१/१३] इति क्रमभेदो दृश्यते । इमाश्चतस्रोऽपि भावना सुगतमतेऽप्रमादादिपदेन प्रोच्यन्ते । तदुक्त **'अभिधम्मत्थसङ्गहे' अनुरुद्धाचार्येण** --> मेत्ता करुणा मुदिता, उपेक्खा चेति इमा चतस्सो । अप्पमञ्ञायो नाम, ब्रह्मविहारा ति पि वुच्चन्ति ॥ <-- इति । --> मैत्री कारुण्यमार्त्तेषु शक्ये प्रीतिरुपेक्षणम् । प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधा ॥ <-- [१०/२६] इति **चरकसहितावचनात्** मैत्र्याद्युपयोगो वैद्यकशास्त्रेऽपि व्यापक. ।

भक्तपरिज्ञायामपि मैत्र्यादिभावना प्रत्याख्याताशनादिना भावयितव्या । तदुक्त **चतुःशरणप्रकीर्णके**ऽपि --> अन्नेसु अ जीवेसु मित्तीकरुणाइगोयरेसु कय । परितावणाइ दुक्ख इण्ही गरिहामि त पाव ॥५३॥ <-- इति । तदुक्त **पञ्चवस्तुके** --> मेत्तादी सत्ताइसु, जिणिदवयणेण तह य अचत्थ । भावेइ तिव्वभावो परम सवेगमावण्णो ॥१६७३॥ <-- इति । ततश्चैतासाम-नुबन्धशुद्धिकारितयाऽत्युपयोगित्वमिति ध्येयम् । तदुक्त **मुक्तिकोपनिषदि** अपि --> मानसीर्वासना पूर्व त्यक्त्वा विषयवासना । मैत्र्यादिवासनानाम्नीर्गृहाणामलवासना ॥ <-- [२/३९] इति । युक्तश्चैतत् तासा तरणतुल्यत्वात्, यथोक्त **सूत्रकृताङ्गे** --> भावणाजोगसुद्धप्पा जले णावा व आहिआ ॥ <-- [१५/५] इति । **धर्मसङ्ग्रहे** --> मैत्र्या सर्वसत्त्वेषु प्रमोदेन गुणाधिके । माध्यस्थ्येनाऽविनीतेषु कृपया दु.खितेषु च ॥ सतत वासित स्वान्त कस्यचित्पुण्यशालिन. । वितनुते शुभ कर्म द्विचत्वारिंशदात्मकम् ॥ <-- इत्येव पुण्याश्रवहेतुता मैत्र्यादीनामुक्ता **श्रीमानविजयवाचकेन** । **अमितगतिना सुभाषितसन्दोहे** --> मैत्री सत्त्वेषु मोद गुणवति करुणा क्लेशिते देहभाजि, मध्यस्थत्व प्रतापे <-- [ ] इत्युक्तम् । **सिहसूरिणा साम्यशतके** --> मैत्र्यादिवासना-मोदसुरभिकृतदिङ्मुखम् । पुमास ध्रुवमायाति सिद्धिभृगाङ्गना स्वयम् ॥९८॥ <-- इत्युक्तम् । अध्यात्मसम्पादकतयाऽपि मैत्र्या-दिकमुपयुज्यते प्रत्येक चतुर्विधत्वादिना विभज्यते च । यथा चैतत्तत्त्व तथा त्रयोदशे षोडशके स्पष्टीभविष्यति ॥४/१५॥

પ્રસ્તુત વિષયનો ઉપસહાર કરતા મૂલકારશ્રી કહે છે કે —

<u>ગાથાર્થ</u> - જીવનુ આ જિનપ્રણીત લિગ ખરેખર ધર્મસિદ્ધિયુક્ત છે પુણ્યાદિસિદ્ધિ નિષ્પન્ન થવાથી તે અવધ્યહેતુરૂપે સિદ્ધ થાય છે [૪/૧૬]

= प्राणिना धर्मसिद्धिमत् = व्यञ्जकतासम्बन्धेन धर्मनिष्पत्तिमत् । पुण्यस्य आदय = उपाया -> दया भूतेषु वैराग्य विधिदान यथोचितम् । विशुद्धा शीलवृत्तिश्च पुण्योपाया प्रकीर्तिता ॥ इति श्लोकोक्ताश्चत्वार त एव सिद्धय, परमैश्वर्यरूपत्वात् तासा सिद्धे = निष्पत्ते सद्धेतुभावेन = अवन्ध्यहेतुत्वेन सिद्धम् । पुण्यादी त्यादिना ज्ञान-योगग्रहोऽग्रिमसिद्धिशब्दश्चोपायार्थ इत्यन्ये ॥४/१६॥

॥ इति चतुर्थं षोडशकम् ॥

## कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> जन्तो एतत् जिनप्रणीत लिङ्ग खलु धर्मसिद्धिमत् पुण्यादिसिद्धिसिद्धे सद्धेतुभावेन सिद्धम् ॥४/१६॥ व्यञ्जकतासम्बन्धेन = स्वनिष्ठव्यङ्ग्यतानिरूपितव्यञ्जकतासंसर्गेण । स्वपदेन धर्मनिष्पत्तिग्रहणम्, तस्या औदार्यादिव्यङ्ग्यत्वात् । ततश्च धर्मनिष्पत्तिनिष्ठव्यङ्ग्यता औदार्यादिनिष्ठव्यञ्जकता निरूपयतीति धर्मनिष्पत्तिनिष्ठव्यङ्ग्यतानिरूपित-व्यञ्जकता औदार्यादौ वर्तते । यदपेक्षया यस्मिन् यद्धर्मो वर्तते स तस्य तत्र वृत्तित्वे सम्बन्धो भवतीति नियमेन स्वनिष्ठव्यङ्ग्यतानिरू-पितव्यञ्जकतासम्बन्धेन धर्मनिष्पत्तिमत् औदार्यादि भवति । धर्मस्येव धर्मिणोऽपि निरूपकत्वात् सङ्क्षेपेण स्वनिरूपितव्यञ्जकता-सम्बन्धेन स्वीयव्यञ्जकतासंसर्गेण स्वव्यञ्जकतासंसर्गेण वा धर्मनिष्पत्तिमत् औदार्यादि इत्यपि वक्तु युज्यत एव, अर्थस्तु नैकत्राऽपि भिद्यते । भवति हि सर्वत्रापि कार्य स्वजनकनिष्पत्तेर्व्यञ्जकम् ।

आदीयते गृह्यते यै इति व्युत्पत्त्या आदयः = उपाया इत्युक्तम् । 'दये'ति । दयादीना चरमावर्तकाले पुण्यानुबन्धिपुण्य-साधकतामभिप्रेत्य मूलकारैरेव अष्टकप्रकरणे -> दया भूतेषु वैराग्य विधिवद्गुरुपूजनम् । विशुद्धा शीलवृत्तिश्च, पुण्य पुण्यानु-बन्ध्यद. ॥ <- [२४/८] इत्युक्तम् । मेघकुमारजीवेन गजभवे पालिता दया, तामलितापसगतो वैराग्यभाव , शालिभद्रजीवेन सङ्गमभवे कृत निर्दोषपरमान्नदानलक्षण गुरुपूजन, वङ्कचूलस्य च काकमासभक्षण-राजपत्नीभोगविरतिलक्षणा विशुद्धशीलवृत्ति पुण्यानुबन्धिपुण्यकारणमिति शास्त्रप्रसिद्धमेव । सिद्ध = आगमप्रमाणत प्रसिद्धम् । अग्रिमसिद्धिशब्दः = 'पुण्यादिसिद्धिसिद्धे ' इत्यत्र प्रथम सिद्धिशब्द ।

अन्ये = सुगमार्थकल्पनावृत्तिकारा श्रीयशोभद्रसूरयः । सिद्धिपदस्योपायार्थकत्वे विरुद्धलक्षणाया आपातात्स्वकीयाऽस्वरस प्रदर्शित , ऋजुगत्या सिध्यतोऽर्थस्य वक्रेण साधनाऽयोगात् ॥४/१६॥

इति मुनियशोविजयविरचिताया कल्याणकन्दल्या चतुर्थषोडशक-योगदीपिकाविवरणम् ।

## ❀ લક્ષણ પણ ધર્મનિષ્પત્તિયુક્ત બને ❀

ટીકાર્થ - પ્રાણીના પૂર્વે બતાવેલ ઔદાર્ય વગેરે બધા જ જિનોક્ત લક્ષણ ખરેખર વ્યંજકતાસંબંધથી ધર્મનિષ્પત્તિયુક્ત જાણવા [ધર્મનિષ્પત્તિનું વ્યંજક = જ્ઞાપક ઔદાર્ય વગેરે છે તેથી ઔદાર્યાદિમા ધર્મનિષ્પત્તિની વ્યંજકતા રહે છે કે જે ઔદાર્યાદિમા ધર્મનિષ્પત્તિને રહેવા માટે સંબંધનુ કામ કરે છે આમ સ્વવ્યંજકતાસંબંધથી ધર્મનિષ્પત્તિવિશિષ્ટ ઔદાર્યાદિ બને છે વળી, અહીં એ પણ ખ્યાલમા રાખવા જેવુ છે કે] '[૧] જીવો ઉપર દયા, [૨] વૈરાગ્ય, [૩] વિધિયુક્ત દાન અને [૪] વિશુદ્ધ શીલવૃત્તિ- આ પુણ્યના ઉપાયો કહેલા છે ' આ શ્લોકમા બતાવેલ પુણ્યના ચાર ઉપાયો પરમૈશ્વર્યસ્વરૂપ હોવાના લીધે સિદ્ધિસ્વરૂપ છે પુણ્યોપાય-સ્વરૂપસિદ્ધિની નિષ્પત્તિના અવંધ્યહેતુરૂપે ઔદાર્યાદિ લિંગ સિદ્ધ થાય છે

અન્ય આચાર્ય ભગવત એમ કહે છે કે - મૂળ ગ્રંથમા રહેલ 'पुण्यादि' પદમા જે 'આદિ'પદ છે તેનાથી જ્ઞાનયોગનુ ગ્રહણ કરવું અને 'पुण्यादिसिद्धिसिद्धे ' મા જે પ્રથમ સિદ્ધિ પદ છે તેનો અર્થ ઉપાય જાણવો [આ મુજબ મૂળ શ્લોકના ઉત્તરાર્ધનુ અર્થઘટન એવુ ફલિત થશે કે પુણ્ય અને જ્ઞાનયોગના ઉપાયોની સિદ્ધિના = નિષ્પત્તિના અવંધ્યહેતુરૂપે ઔદાર્યાદિ સિદ્ધ થાય છે ] [૪/૧૬]

દેવાધિદેવનું શરણ (માત્ર દર્શન નહિ)
ગુરુદેવનું શ્રવણ (દલીલ નહિ)
જિનધર્મનું ગ્રહણ (ચર્ચા નહિ)

## ચતુર્થ ષોડશકનો સ્વાધ્યાય

**(અ) ચારથી પાચ મુદ્દામા નીચેની સમસ્યાનુ સમાધાન આપો.**

૧ ઉચિત ઉદારતાના ઉદાહરણો કેવા અને કયા હોઈ શકે ?
૨ દાક્ષિણ્યનુ તાત્ત્વિક સ્વરૂપ શુ છે ?
૩ ધર્મમાર્ગે જનપ્રિયત્વનુ માહાત્મ્ય કેવુ છે ?
૪ દષ્ટિસમોહનુ લક્ષણ-સ્વરૂપ શુ છે ?
૫ તીક્ષ્ણ બુદ્ધિ અને નિર્મલ બુદ્ધિનો હેતુ-સ્વરૂપ-ફલથી ભેદ જણાવો
૬ યજ્ઞસ્થલીય હિસા અને જિનાયતનની દેખભાળસબધી હિસામા શુ ભેદ છે ?
૭ ધર્મની અરુચિને કેવી રીતે ઓળખશો ?
૮ મૈત્રી આદિ ચાર ભાવનાને ઓળખાવો
૯ પ્રશસ્ત-અપ્રશસ્ત કષાયની ભેદરેખા વર્ણવો
૧૦ પાપ જુગુપ્સા ત્રૈકાલિક કઇ રીતે બને ?

**(બ) યોગ્ય જોડાણ કરો**

| | |
|---|---|
| (૧) માતા-પિતા | (A) પાપવિકાર |
| (૨) પાપજુગુપ્સા | (B) પુણ્યાનુબધી પુણ્ય વાવણી |
| (૩) ધર્મની અરુચિ | (C) અગમ્ય |
| (૪) મારુ તે સાચુ | (D) રત્નાકર |
| (૫) જીવદયા | (E) અન્યને ધર્મમા પ્રવર્તક |
| (૬) જનપ્રિયત્વ | (F) પુણ્યોપાય |
| (૭) બહેન | (G) દષ્ટિસમોહ |
| (૮) બીજાધાન | (H) ઉપાય |
| (૯) દ્વાદશાગી | (I) ગુરુ |
| (૧૦) આદિ | (J) ત્રિવિધ |

**(ક) ખાલી જગ્યા યોગ્ય રીતે પૂરો**

૧ ધર્મતત્ત્વના ભાવાત્મક લિગ ______ છે અને અભાવાત્મક લિગ ______ છે (૨, ૩, ૪, ૫, ૬)
૨ ધૈર્ય = ______ (નિર્ભયતા, ધીટતા, ગભીરતા, કુતુહલનો ત્યાગ)
૩ ______ પદના યોગદીપિકામા બે અર્થ બતાવેલ છે (દાક્ષિણ્ય, માત્સર્ય, પાપોદ્વેગ વિષયતૃષ્ણા)
૪ નિર્મલ બોધનુ અતરગ કારણ ______ છે (શાસ્ત્રશ્રવણ, શાસ્ત્રલેખન, શાસ્ત્રપ્રકાશન, શુશ્રૂષા)
૫ દાક્ષિણ્ય ______ સ્વરૂપ છે (પ્રવૃત્તિ, પરિણામ, પ્રતિજ્ઞા, નમ્રતા)
૬ ક્રોધને ______ ની ઉપમા આપવામા આવેલી છે (અગ્નિ, ખજવાળ, શલ્ય, ચાડાલ, સાપ)
૭ ______ કાલની અપેક્ષાએ પાપની નિદા = પાપજુગુપ્સા (વર્તમાન, ભૂત, ભવિષ્ય, આદિ)
૮ ______ મા ગભીરતા-ધીરતા નડાયક છે (ઉદારતા, દાક્ષિણ્ય, નિર્મલ બોધ)
૯ ગમ્યાગમ્ય વિભાગને તોડવો તે ______ ની નિશાની છે (અજ્ઞાન, ધર્મઅરુચિ, વિષયતૃષ્ણા)
૧૦ પાપજુગુપ્સા વગેરે ધર્મતત્ત્વના ______ ગુણસ્વરૂપ લિગ છે (પ્રાથમિક, મધ્યમ, ઉત્તમ)

નોંધ આ પ્રશ્નપત્રમા કોઈએ પેન-પેન્સીલ વગેરેથી કોઈ પણ નિશાની વગેરે ન કરવા ખાસ ધ્યાન રાખવુ

## કલ્યાણકંદલીની અનુપ્રેક્ષા

**(અ) નીચેના પ્રશ્નોના વિસ્તારથી જવાબ આપો**

૧ ઔચિત્ય એ ઉદારતાનો પ્રાણ કઇ રીતે બને ?
૨ પૂજ્ય જયઘોષસૂરિજી મ ના અભિપ્રાયથી જનપ્રિયત્વના લાભ કેટલા છે ? સમજાવો
૩ દેવ અને ધર્મ સબધી દષ્ટિસમોહ સમજાવો તેના ત્યાગના ઉપાય જણાવો
૪ લોકપક્તિ અને જનપ્રિયત્વની ભેદરેખા સ્પષ્ટ કરો
૫ સાધુ ચૈત્યદ્રવ્યવિનાશની ઉપેક્ષા કરી શકે ? શા માટે ? તે સબધી વિધિ શુ છે ?
૬ અન્ય દર્શનના શાસ્ત્રોનો દ્વેષ કરાય ? શા માટે ?
૭ ક્રોધના બે કે ત્રણ ભેદ ઉદાહરણસહિત સમજાવો
૮ મૈત્રી વગેરે ૪ ભાવનાનુ નિરૂપણ અલગ-અલગ પાચ ગ્રથના આધારે કરો
૯ તાત્ત્વિક પરમાત્મા કોને કહેવાય ?
૧૦ શ્રાવકો દેરાસરની બરાબર સભાળ ન રાખે તો સાધુનુ કર્તવ્ય શુ ? તે જયણા-વિધિપૂર્વક જણાવો

**(બ) નીચેના પ્રશ્નોના સક્ષેપમા જવાબ આપો**

૧ દીક્ષા એ ગયા ભવના પાપનુ પ્રાયશ્ચિત્ત કેવી રીતે બને ?
૨ મહાપુરુષોનો દાક્ષિણ્ય-ખજાનો કેવો હોય ?
૩ ગભીરતા અને ધીરતાનુ સ્વરૂપ જણાવો
૪ ધર્મબીજની વાવણી, અકુર, પત્ર, ફૂલ, ફળ ઓળખાવો
૫ ધર્મશ્રવણમા શુશ્રૂષા શા માટે જરૂરી ?
૬ ક્રોધને ખજવાળની ઉપમા શા માટે આપી ?
૭ શ્રીમત માણસ શા માટે આડબરપૂર્વક સામાયિક વગેરે સ્વીકારે ?
૮ શુ પ્રાણીઅગ હોવાના લીધે દૂધ-ભાત વગેરે ભક્ષ્ય છે ? શા માટે ?
૯ વ્યાસના અભિપ્રાય મુજબ તાત્ત્વિક અગ્નિહોત્ર યજ્ઞનુ સ્વરૂપ શુ છે ?
૧૦ મહાવ્રતસબધી અન્યદર્શનકારોની સજ્ઞા શુ શુ છે ?
૧૧ કઇ વસ્તુમા આગ્રહ રાખવો યોગ્ય કહેવાય ?
૧૨ ક્રોધથી વિનિપાતનો ક્રમ અલગ અલગ દષ્ટિએ સમજાવો
૧૩ આઠમી અને ૧૪ મી ગાથામા વિરોધ જેવુ શુ છે ? તેનુ નિરાકરણ કરો
૧૪ તાત્ત્વિક બ્રાહ્મણ કોને કહેવાય ?
૧૫ ઉદારતા વગેરે ધર્મનિષ્પત્તિવાળા કયા સબધથી બને ? કેવી રીતે ?
૧૬ અપ્રતિકાર્યદોષવાળા જીવો પ્રત્યે ઉપેક્ષા ભાવના શા માટે રાખવી ?
૧૭ ઔચિત્ય ગુણ ક્યારથી શરૂ થાય અને ક્યા સુધી હોય ?
૧૮ ત્રિપદીશ્રવણથી ગણધરને દ્વાદશાગીનો ક્ષયોપશમ થાય અને આપણને ન થાય-આમ કેમ ?
૧૯ સ્કદપુરાણ મુજબ સિદ્ધિનુ શુ લક્ષણ છે ?
૨૦ કોના કોના અભિપ્રાય મુજબ સસારનુ મૂળ તૃષ્ણા છે ?

**(ક) ખાલી જગ્યા પૂરો**

૧ પોતાના ______ સિવાય સકટમાથી બચાવનાર બીજુ કોઈ નથી (પુણ્ય, ગુરુ, ધૈર્ય)
૨ દશવૈકાલિકચૂર્ણિ મુજબ સાધુ ______ હોય (ઉદાર, ગભીર, દાક્ષિણ્યવાળા)
૩ રાજશેખર મતાનુસાર શુદ્ધ બુદ્ધિ ______ સમાન છે (રાજરાણી, કામધેનુ, શેઠાણી)
૪ મૈત્રી વગેરે ભાવના માટે બૌદ્ધ દર્શનમા ______ શબ્દ પ્રસિદ્ધ છે (અપ્રમાદ, વિપશ્યના, ઝેન)
૫ તાત્ત્વિક અગ્નિહોત્ર યજ્ઞમા અગ્નિ = ______ (જ્ઞાન, ધ્યાન, દયા)
૬ ______ ગમ્યઅગમ્યવિભાગ માનતા નથી (બૌદ્ધ, મડલતત્રવાદી, શુદ્ધાદ્વૈતવાદી)

## पञ्चम लोकोत्तरतत्त्वसप्राप्तिषोडशक

एव सामान्येन सलिङ्गधर्मसिद्धिमुक्त्वा ततो यत्स्यात् तदाह -> 'एवमि'त्यादि ।

**एव सिद्धे धर्मे सामान्येनेह लिङ्गसयुक्ते । नियमेन भवति पुसां लोकोत्तरतत्त्वसम्प्राप्तिः ॥५/१॥**

**एव** = प्रागुक्तनीत्या, **सामान्येन** = लोक-लोकोत्तराऽप्रविभागेन **इह** प्रक्रमे **लिङ्गसयुक्ते धर्मे सिद्धे नियमेन** = निश्चयेन **भवति पुसा** = तत्तत्तन्त्रोक्तमुमुक्षुजनयोग्याचारप्रणेतृनानाऽवस्थाऽपुनर्बन्धकापेक्षया शुद्धाना स्वतन्त्र-व्यवहारस्थाऽपुनर्बन्धकाना सम्यग्दृशाश्च सर्वेषामेव लोकोत्तरस्य = लोकानवगतेतिकर्त्तव्यताकस्य तत्त्वस्य = परमार्थस्य सप्राप्ति ॥५/१॥

### कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> एव इह सामान्येन लिङ्गसयुक्ते धर्मे सिद्धे नियमेन पुसा लोकोत्तरतत्त्वसप्राप्ति भवति ॥५/१॥ **सामान्येन = लोकलोकोत्तराऽप्रविभागेनेति** । **एतेन** सामान्यधर्मसाधकस्यैव विशेषधर्मसाधनयोग्यत्वमावेदितम्, तथैव तद्गुणलाभसामर्थ्यनिष्पत्ते । इदमेवाभिप्रेत्य **जीवोपदेशपञ्चाशिकाया** -> दुममि पुप्फ च फल च पच्छा जहा कमेणेव रसप्पसिद्धि । भव्वे तहा लोयगुणा तओ य लोगुत्तरा सिद्धिसुह च तत्तो ॥ <- [३२] इत्युक्तम् । अत एवान्यत्रादौ गृहस्थधर्म. सम्मत. । तदुक्त मूलकारैरेव **धर्मविन्दौ** -> स्तोकान् गुणान् समाराध्य, बहूनामपि जायते । यस्मादाराधनायोग्यस्त-स्मादादावय मत ॥ <- [३/१८] इति । **अनेन** व्यवहारधर्म मुक्त्वा निश्चयनयमवलम्बमानाना द्रव्यस्तवमपहाय च भावस्तवमा-श्रयतामबलानामुभयतो भ्रष्टत्व **योतितम्** ।

**तत्तत्तन्त्रेति** । वेदान्त-बौद्धादिदर्शने प्रतिपादिताना शम-दम-तितिक्षादिलिङ्गाऽऽलिङ्गितमुमुक्षुजनोचितसदाचाराणा प्रणेतार. = कर्तार तथाऽनेकावस्थाविशेषभाजो येऽपुनर्बन्धका: तदपेक्षया **शुद्धाना स्वतन्त्रव्यवहारस्थापुनर्बन्धकाना** = स्वकीयजैन-दर्शनदर्शिते प्रबलविशुद्धिप्रापके सदनुष्ठानात्मके व्यवहारविशेषे स्थितानामासन्नग्रन्थीनामपुनर्बन्धकाना **सम्यग्दृशा** चेति । मुख्यत· स्वतन्त्रे स्थितानामपुनर्बन्धकाना सम्यग्दृशा च झटिति लोकोत्तरतत्त्वसप्राप्ति , जिनोक्ताचारपालनादिप्रभावात् । सामान्यतस्तु परतन्त्रस्थानामपुनर्बन्धकाना शुद्धितारतम्यानुसारेण विलम्बेन दीर्घकालेन वाऽमुत्र लोकोत्तरतत्त्वसम्प्राप्तिरिति भावनीयम् । तदुक्त **योगविन्दो** -> अपुनर्बन्धकस्यैव सम्यग्नीत्योपपद्यते । तत्तत्तन्त्रोक्तमखिलमवस्थाभेदसश्रयात् ॥ स्वतन्त्रनीतितस्त्वेव, ग्रन्थिभेदे तथा सति । सम्यग्दृष्टिर्भवत्युच्चै , प्रशमादिगुणान्वित· ॥ <- [२५१/२५२] इति ।

अपुनर्बन्धकस्य विशिष्य लक्षण तु -> पाव न तिव्वभावा कुणइ, ण बहुमण्णई भव घोर । उचियट्ठिइ च सेवइ, सव्वत्थ वि अपुणबधो त्ति <- ॥१३॥ इत्येव **योगशतके पञ्चाशके** [३/४] चोक्तमिति प्रागुक्तम् [पृ ८५] । **योगविन्दौ** तु -> भवाभिनन्दिदोषाणा प्रतिपक्षगुणैर्युत । वर्धमानगुणप्रायो ह्यपुनर्बन्धको मत ॥१७८॥ <- इति सामान्यतोऽ-पुनर्बन्धकलक्षणमुक्तमिति न विरोध· ।

**लोकानवगतेतिकर्तव्यताकस्य** = लौकिकै अनवगता 'इद कर्तव्य' इत्याकारिका इतिकर्तव्यता यस्य तत्त्वस्य तत्तथा तस्य **तत्त्वस्य** = परमार्थस्य **सम्प्राप्तिः** = समीचीनोपलब्धि । न हि लौकिका लोकोत्तरतत्त्वमवगन्तु समर्था·, लौकिकमर्यादा-स्थितत्वेन तथाविधक्षयोपशमविरहात् ॥५/१॥

### रतिदायिनी (ગુજરાતી વ્યાખ્યા)

આ રીતે ચોથા પોડશકમા સામાન્યથી લિગસહિત ધર્મસિદ્ધિને જણાવીને ત્યાર બાદ જે થાય છે તેને મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** - આ રીતે પ્રસ્તુતમા સામાન્યથી લિગયુક્ત ધર્મ સિદ્ધ થયે છતે નિયમા જીવોને લોકોત્તરતત્ત્વની સપ્રાપ્તિ થાય છે [૫/૧]

### ❋ લોકોત્તરતત્ત્વ સંપ્રાપ્તિ ❋

**ટીકાર્થ** - પૂર્વોક્ત રીતે, લૌકિક-લોકોત્તર વિભાગ વિના, પ્રસ્તુતમા લિગસયુક્ત ધર્મ સિદ્ધ થયે છતે નિશ્ચયથી જીવોને લોકોત્તર પરમાર્થની સપ્રાપ્તિ થાય છે તે જીવો ભલે તે તે દર્શન-સપ્રદાયમા બતાવેલ મુમુક્ષુ જીવોને ઉચિત આચારના પ્રણેતા = કરનારા-પાળનારા અલગ-અલગ અવસ્થાવાળા અપુનર્બંધક જીવોની અપેક્ષાએ શુદ્ધ એવા જૈનદર્શનના વ્યવહારમા રહેલા અપુનર્બંધક અને સમકિતદષ્ટિ જીવો હોય. તે બધાને જ લોકોત્તરતત્ત્વની પ્રાપ્તિ થાય જે પરમાર્થને લોકો = મિથ્યાત્વથી આવરાયેલા અન્યદર્શનીઓ કર્તવ્યરૂપે ન જાણી શકે તે તત્ત્વ લોકોત્તર પરમાર્થ કહેવાય [૫/૧]

**વિશેષાર્થ** - ઔદાર્ય, દાક્ષિણ્ય, પાપભીરુતા, નિર્મલ બુદ્ધિ વગેરે ગુણોથી યુક્ત જીવ ચાહે અન્યમતમા રહીને મુમુક્ષુયોગ્ય

इयञ्च यद्रूपा यस्मिंश्च काले स्यात्तदभिधातुमाह --> 'आद्य मि'त्यादि ।

आद्य भावारोग्य बीज चेषा परस्य तस्यैव । अधिकारिणो नियोगाच्चरम इय पुद्गलपरावर्त्ते ॥५/२॥

आदौ भव = आद्य भावरूप आरोग्य एषा सम्यक्त्वस्पर्शात् बीज च परस्य = प्रधानस्य तस्य' एव = भावारोग्यस्य मोक्षरूपस्य, तस्य रागादिभावरोगाभावत पापाऽप्रसिद्धे इय अधिकारिण = क्षीणप्रायससारस्य नियोगात्

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> एषा आद्य भावारोग्य, तस्यैव च परस्य बीज, अधिकारिणो नियमात् चरमे पुद्गलपरावर्त्ते इय [भवति] ॥५/२॥ इय कारिका श्रावकधर्मविधिवृत्त्यादौ [गा २] समुद्धृता वर्तते ।

एषा = प्रक्रान्ता लोकोत्तरतत्त्वसम्प्राप्ति सम्यक्त्वस्पर्शात् = सम्यग्दर्शनानुवेधात् प्रधानस्य भावारोग्यस्य मोक्षरूपस्य बीजमित्यन्वय । मोक्षस्य प्रधानभावारोग्यत्वे हेतुमाविष्करोति --> तस्य = मोक्षस्य रागादिभावरोगाऽभावतः = राग-द्वेष-मोहलक्षणभावरोगशून्यत्वात् । अत्राऽपि हेतुमाह - पापाप्रसिद्धेः = रागाद्यनुबन्ध-तत्संस्कार-लक्षणदोषाणा मोक्षेऽप्रसिद्धत्वात् । तदुक्त उमास्वातिवाचकै. तत्त्वार्थकारिकाया मूलकृद्भिश्च शास्त्रवार्तासमुच्चये --> दग्धे बीजे यथाऽत्यन्त, प्रादुर्भवति नाऽङ्कुर । कर्मबीजे तथा दग्धे न रोहति भवाङ्कुर ॥ <-- [त.उत्त.का ८ शा वा ६१३] इति । श्रावकप्रज्ञप्तौ --> दद्धमि जहा बीए न होइ पुण अकुरस्स उप्पत्ती । तह चेव कम्मबीए भवकुरस्सावि पडिकुट्ठा ॥३९६॥ <-- इति प्रोक्तम् । औपपातिकसूत्रेऽपि --> बीयाण अग्गिदड्ढाण पुणरवि अकुरुप्पत्ति ण भवइ । एवमेव सिद्धाण कम्मबीए दड्ढे पुणरवि जम्मुप्पत्ति ण भवइ ॥ <-- [पृ १११] इत्युक्तम् । दशाश्रुतस्कन्धेऽपि --> जहा दड्ढाण बीयाण ण जायति पुणकुरा । कम्मबीएसु दड्ढेसु न जायति भवकुरा ॥ [९/८] <-- इत्युक्तम् । दर्शनशुद्धिप्रकरणेऽपि --> अचत दड्ढमि बीयमि न अकुरो जहा होइ । दड्ढमि कम्मबीए न रुहइ भवअकुरो वि तहा ॥१४॥ <-- इत्युक्तम् । चैत्यवन्दनमहाभाष्येऽपि --> दड्ढम्मि जहा बीए न होइ पुण अकुरस्स उप्पत्ती । तह कम्मबीयविरहे भवकुरस्सावि नो भावो ॥२८६॥ <-- इत्युक्तम् । महाभारतेऽपि --> बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सयुज्यते पुन· ॥ <-- [वनपर्व २००/१०८] इत्युक्तम् । मोक्षधर्मेऽपि --> बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुन. । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुन. ॥ <-- [२११/१७] इत्युक्तम् । तदुक्त भावप्राभृते कुन्दकुन्दस्वामिनाऽपि --> जह बीयम्मि य दड्ढे ण वि रोहइ अकुरो य महीवीढे । तह कम्मबीयदड्ढे भवकुरो भावसमणाण ॥१२६॥ <-- इति । कम्मसुत्ताभिधाने बौद्धग्रन्थेऽपि --> जहा दड्ढाण बीयात ण जायति पुण अकुरा । कम्मबीएसु दड्ढेसु ण जायति भवकुरा ॥ <-- इत्युक्तम् । तदुक्त योगदृष्टिसमुच्चयेऽपि --> भव एव महाव्याधिर्जन्म-मृत्युविकारवान् । विचित्रमोहजननस्तीव्ररागादिवेदन ॥ मुख्योऽयमात्मनोऽनादिचित्रकर्मनिदानज । तथानुभवसिद्धत्वात् सर्वप्राणभृतामिति ॥ एतन्मुक्तश्च मुक्तोऽपि, मुख्य एवोपपद्यते । जन्मादिदोषविगमात्तददोषत्वसङ्गते ॥ <-- [१८८-८९-९०] इति ।

શમ-દમ-તિતિક્ષાદિ આચારોનુ વફાદારીથી પાલન કરનાર અપુનર્બંધક હોય કે ચાહે જૈનમતમા રહીને મુમુક્ષુયોગ્ય આચારસહિતાને નિષ્ઠાથી બજાવનાર અપુનર્બંધક ભદ્રક મિથ્યાદૃષ્ટિ હોય પરતુ તેમની પાસે આત્મવિશુદ્ધિ જરૂર હોય છે ફેર એટલો હોય કે પરદર્શનમા રહીને સ્થૂલ અનુષ્ઠાનનુ પાલન કરનાર જીવ કરતા જૈનદર્શનના સૂક્ષ્મ-વિશુદ્ધ આચારનુ પાલન કરવાથી શુદ્ધિ વધુ પ્રાપ્ત થાય છે પરદર્શની અપુનર્બંધક ભવાતરમા જૈનદર્શનને મેળવવા યોગ્ય બને છે જ્યારે તેના કરતા વધુ શુદ્ધિવાળા જૈન અપુનર્બંધક કે સમકિતદૃષ્ટિ હોય- તે બધાને તુરત લોકોત્તર પરમાર્થો અચૂક મળે જ છે શક્તિની દવાનુ સેવન કરવાથી અમદાવાદમા રહેનારને શક્તિ મળે અને બેગ્લોરમા રહેનારને શક્તિ ન મળે - એવુ ના બને પરતુ ક્ષેત્ર-હવા વગેરેના કારણે પ્રતિકૂળ કે અનુકૂળ વાતાવરણમા દવાથી ઓછાવત્તા અશે શક્તિની માત્રામા તફાવત જરૂર પડે પરતુ એક વાત જરૂર ધ્યાનમા રાખવી કે ઔદાર્યાદિગુણસપન્ન ન હોય કે તેની યોગ્યતા પણ ન હોય તો તેવો જીવ જૈનદર્શની હોવા છતા લોકોત્તર પરમાર્થને પામવાનુ સૌભાગ્ય તેની પાસે નથી મિથ્યાત્વથી મોહિત મતિવાળા લોકો જે પરમાર્થને કર્તવ્યરૂપે ન જાણી શકે તે લોકોત્તર તત્ત્વ કહેવાય છે તેને મેળવવા ઔદાર્યાદિગુણથી સમૃદ્ધ બનવુ અનિવાર્ય છે [૫/૧]

પ્રસ્તુત લોકોત્તરતત્ત્વસપ્રાપ્તિ જે સ્વરૂપે અને જે કાળે થાય તેને બતાવતા મૂલકારશ્રી કહે છે કે —

**ગાથાર્થ** - આ લોકોત્તરતત્ત્વપ્રાપ્તિ પ્રાથમિક ભાવારોગ્ય છે અને પ્રકૃષ્ટ એવા ભાવારોગ્યનુ જ બીજ છે અધિકારી જીવને નિયમા ચરમ પુદ્ગલ પરાવર્તમા આ [= લોકોત્તરતત્ત્વપ્રાપ્તિ] થાય છે [૫/૨]

**ટીકાર્થ** - પૂર્વે ઉત્પન્ન થાય તે પ્રથમ કહેવાય પ્રથમ ભાવરૂપી આરોગ્ય આ લોકોત્તરતત્ત્વસપ્રાપ્તિ છે સમ્યક્ત્વના સ્પર્શથી તે મોક્ષરૂપી પ્રકૃષ્ટ ભાવારોગ્યનુ જ કારણ બને છે મોક્ષને પ્રકૃષ્ટ આરોગ્ય કહેવાનુ કારણ એ છે કે મોક્ષમા રાગ વગેરે ભાવ રોગો નથી રહેતા, કેમ કે મોક્ષમા પાપ જ અપ્રસિદ્ધ છે લોકોત્તરતત્ત્વસપ્રાપ્તિ નિયમા ચરમ પુદ્ગલ પરાવર્તમા થાય છે ઔદારિક,

१ मुद्रितप्रतौ - 'एतस्य' इत्यशुद्ध पाठ । ह प्रतौ च --> 'तस्मै च' <-- इत्यशुद्ध पाठ ।

= नियमात् **चरमे पुद्गलपरावर्त्ते** = औदारिक-वैक्रिय-तैजस-कार्मण-प्राणाऽपान-भाषा-मनोभिरेतत्परिणामपरिणत-सर्वपुद्गलग्रहणरूपे भवति। अभ्युच्चयपक्षोऽय यावता सार्वतन्त्रिवयपुनर्बन्धकक्रियाऽन्यपुद्गलपरावर्त्ते न भवति, 'मोक्खासओ वि [1]जन्नत्थ होइ (वि वि ४/२) इत्यादिना मोक्षाशयस्यापि तत्र प्रतिषेधादित्यन्यत्र विस्तरो द्रष्टव्य ॥५/२॥

कुत पुनर्हेतोश्चरमपुद्गलपरावर्त्तो भवतीत्याह —> **स'** इत्यादि ।

**स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि । ज्वरशमनौषधसमयवदिति समयविदो विदुर्निपुणम् ॥५/३॥**

## कल्याणकन्दली

**एतत्परिणामपरिणत-सर्वपुद्गलग्रहणरूपे** औदारिक-वैक्रिय-तैजस-भाषाऽऽनप्राण-मन -कर्मवर्गणापरिणामपरिणताना सर्वेषा पुद्गलाना विवक्षितकालमादौ कृत्वा यावता सामस्त्येनैकजीवस्य ग्रह-निसर्गौ सम्पद्येते तावत्कालपरिमाणके, पुद्गला ग्रह-निसर्गाभ्या परिवर्तन्ते परापरपरिणति लभन्तेऽस्मिन्निति व्युत्पत्तेरिति <— [उ पद-४३४ वृ] **उपदेशपदवृत्तौ श्रीमुनिचन्द्रसूरयो** व्याचक्षते । तस्य स्थूल-सूक्ष्मादिरूपता च —> ओराल-विउव्विय-तेय-कम्म-भासाणुपाणु-मणएहि । जीवस्स सयलपोग्गलगहणद्धा थूलपरियट्टो । ओरालियाइ एक्कक्कमेयओ सव्वपोग्गलग्गहण । कालेण जेण सो पुण भण्णति इह सुहुमपरियट्टे ॥ <— [ ] इत्यादितोऽवसेया । **अभ्युच्चयपक्षोऽय** = नियमेनान्वयकारी पक्षोऽय, न तु समुच्चयपक्ष । इदमेवाभिप्रेत्य **योगबिन्दौ** —> तृणादीनाञ्च भावाना योग्यानामपि नो यथा । तदा घृतादिभाव· स्यात् तद्वद्योगोऽपि नान्यदा ॥ नवनीतादिकल्पस्तत्तद्भावेऽत्र निबन्धनम् । पुद्गलाना परावर्त्तश्चरमो न्यायसङ्गत ॥ <— [९५/९६] इति । तदेव भावयति —> **यावता** = येन कारणेन **सार्वतन्त्रिकी** = नामभेदेन सर्वयोगदर्शनाभिमता **अपुनर्बन्धकक्रिया** = अपुनर्बन्धकभवनप्रक्रिया, क्षत्रियादिवर्णभेदो नात्र बाधाविधायी पर कालभेदस्तु प्रतिबन्धकार्येवेत्याह **अन्यपुद्गलपरावर्त्ते** = अचरमपुद्गलपरावर्त्ते **न** = नैव **भवति** । अत्रैव सवादमाह —> 'मोक्खासओ' इत्यादि । सम्पूर्णा च गाथा **चरमावर्तविंशिकाया** —> मुक्खासओ वि नन्नत्थ होइ गुरुभावमलपहावेण । जह गुरुवाहिविगारे न जाउ पत्थासओ सम्म ॥ <— [४/२] इत्येवमुपलभ्यते । प्रकृतेरनिवृत्ताधिकारत्वात् इति गम्यम् । तदुक्त **गोपेन्द्रेणापि** —> अनिवृत्ताधिकाराया प्रकृतौ सर्वथैव हि । न पुस तत्त्वमार्गेऽस्मिञ्जिज्ञासाऽपि प्रवर्तते ॥ क्षेत्ररोगाभिभूतस्य यथाऽत्यन्त विपर्यय । तद्वदेवाऽस्य विज्ञेयस्तदावर्तनियोगत ॥ <— [यो बि १०१/१०२] इत्यादि । तदुक्त **भगवद्गीतायामपि** —> जिज्ञासुरपि योगस्य शब्दब्रह्माऽतिवर्तते <— [६/४४] । 'मनोरथोऽपि नो मन्दभाग्याना जायते महान्' [ ] इत्युक्तिरप्यत्र स्मर्तव्या । अनेनाऽपुनर्बन्धकादेरेवात्राधिकारित्वमावेदितम् । तदुक्त **योगशतकेऽपि** —> अहिगारी पुण एत्थ विण्णेओ अपुणबधगाइत्ति । तह तह णियत्तपगईअहिगारो णेगभेओत्ति ॥ अणियत्ते पुण तीए एगतेणेव हदि अहिगारे । तप्परततो भवरागओ दढ अणहिगारी त्ति ॥ <— [९/१०] इति । तदुक्त **योगदृष्टिसमुच्चयेऽपि** —> चरमे पुद्गलावर्त्ते, क्षयश्चास्योपपद्यते <— [३१] इति । अस्य = भावमलस्य । तस्य भावरोगरूपत्वात्तत्क्षये भावारोग्यकल्पा लोकोत्तरतत्त्वप्राप्तिर्युज्यत एवेति भावनीयम् ॥ **ललितविस्तरायामपि** —> योग्यता चाऽऽफलप्राप्तेस्तथाक्षयोपशमवृद्धि लोकोत्तरभावामृतास्वादरूपा वैमुख्यकारिणी विषयविषाभिलाषस्य । न चेयमपुनर्बन्धकमन्तरेणेति भावनीयम् <— [पृ ४९] इत्युक्तम् ॥५/२॥

वैक्रिय, तेजस, कार्मण, श्वासोच्छ्वास, ભાષા અને મનોવર્ગણારૂપે ઔદારિક વગેરે પરિણામથી પરિણત સર્વ પુદ્ગલોનુ ગ્રહણ કરવામા જેટલો સમય થાય તેને પુદ્ગલપરાવર્ત કહેવાય [એક પુદ્ગલપરાવર્તમા ૨૦ કોટાકોટિ સાગરોપમપ્રમાણ અનતા કાળચક્રો પસાર થઈ જાય તેવા અનત પુદ્ગલપરાવર્ત ભૂતકાળમા દરેક જીવે પસાર કરેલા છે જે જીવનો સસાર = ભવસ્થિતિ ૧ પુદ્ગલપરાવર્તકાળ જેટલી બાકી હોય તે જ જીવને લોકોત્તર તત્ત્વની પ્રાપ્તિ થાય છે ]

પ્રસ્તુત વાત અભ્યુચ્ચયપક્ષ તરીકે સમજવી [સમુચ્ચયપક્ષરૂપે નહિ], કેમ કે સર્વદર્શનસબધી અપુનર્બધકક્રિયા અન્ય [=અચરમ] પુદ્ગલ પરાવર્ત કાળમા સભવિત નથી આનુ કારણ એ છે કે ચરમાવર્તવિંશિકા ગ્રથમા 'અચરમાવર્ત કાળમા મોક્ષનો આશય પણ ન હોય' આવુ કહેવા દ્વારા અચરમાવર્ત કાળમા મોક્ષના આશયનો પણ પ્રતિષેધ કરવામા આવેલ છે આ વાતનુ વિસ્તારથી નિરૂપણ અન્ય સ્થાને જોવાની મહોપાધ્યાયજી ભલામણ કરે છે [૫/૨]

**<u>વિશેષાર્થ</u>** - અભ્યુચ્ચય પદનો અર્થ છે નિયમા સબધ થવો સમુચ્ચયપક્ષનો અર્થ છે યથાસભવ સબધ થવો પ્રસ્તુતમા ક્ષીણપ્રાયસસારસ્થિતિવાળા ચરમાવર્તી જીવને જ નિયમા લોકોત્તરતત્ત્વસપ્રાપ્તિ થાય છે, નહિ કે જૈનધર્મવાળાને જ અચરમાવર્તીને નિયમા લોકોત્તરતત્ત્વ ન જ મળે, ભલે તે જૈન હોય [૫/૨]

'ચરમ પુદ્ગલ પરાવર્ત શેનાથી થાય ?' આ સમસ્યાનુ સમાધાન આપતા સૂરિપુરદર કહે છે કે —

१ मुद्रितप्रतौ ह प्रतौ च 'न तत्थ' इति पाठ ।

स = चरमपुद्गलपरावर्त **कालादेव प्राधान्येन** = इतरहेत्वपेक्षाविलम्बाऽभावरूपेण **भवति**, सुकृतादीना भावेऽपि = सामग्र्या प्रवेशेऽपि । सुकृतपद प्रकृता(? पुण्यप्रकृत्य)भिप्रायेण, अन्यथा कर्मसामान्यमात्र ग्राह्य, आदिना पुरुषकार-नियत्यादिग्रह ।

निदर्शनमाह –> ज्वरस्य शमन यद् औषध तत्समयवत् । यथाहि ज्वरशमनौषधमपि प्रथमाऽऽपाते दत्त न गुणकृत् प्रत्युत दोषोदीरक, ज्वरजीर्णतासमये च दत्त तद्गुणकृत् । स च परिपाकाख्यपर्यायशालिकालेनैव जन्यते तथा सद्धर्मौषधमप्यचरमावर्त्ते दत्त न गुणकृत् प्रत्युत दोषोदीरकमेव । चरमे तु दत्त गुणकृत् । स च भावपरिपाकाऽऽख्यपर्याययुक्तकालादेव भवति इति **समयविद** = सिद्धान्तज्ञा **निपुणं** यथा स्यात्तथा **विदु** ॥५/३॥

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> सुकृतादिभावेऽपि प्राधान्येन कालादेव स भवति, ज्वरशमनौषधसमयवत् इति समयविदो निपुण विदु ॥५/३॥ इय कारिका अधिकारविंशिकावृत्ति-श्रावकधर्मविधिवृत्त्यादौ समुद्धृता वर्तते ।

**कालादेवेति** । एकान्तवादपरिहारायाह - **प्राधान्येन** = इतरहेत्वपेक्षाविलम्बाभावरूपेणेति । इतरपदेन कालभिन्ना कर्म-पुरुषार्थादय तद्धेतवो ग्राह्या , तेषा अपेक्षया सम्भावनीयो यो विलम्बस्तद्विरहात्मनेति । न हि परिपक्वकाल स्वेतरकारणविलम्बेन स्वकार्यजननाय विलम्बते । वस्तुत तेनैव तेषामाक्षेपात्, मरुदेव्यादौ तथैव दृष्टत्वात् । तदेव भावयति-**सुकृतादीना सामग्र्या प्रवेशेऽपीति** । **पुरुषकार-नियत्यादिग्रहः** इति । अत्रादिपदेन स्वभावपरिग्रह ।

अत्राऽस्मदीयपद्ये –> कालवादप्रसङ्गश्चेदत्र को दोष ? उच्यताम् । तदन्यवादभङ्गश्चेन्न तदन्यानपोहनात् ॥१॥
कर्मादिसचिवश्चायमिष्ट एव महात्मभि । सर्वत्र व्यापकत्वेन, न च युक्त्या न युज्यते ॥२॥ <–

**अचरमावर्त्ते दत्त न गुणकृत्**, अतिद्राघीयसो ससारस्य सद्भावात्, भव्यत्वाऽपरिपाकात्, विपरीतवस्तुस्वभावाऽत्यन्ताऽऽग्रहात्, अप्रशान्तमतित्वाच्च । तदुक्त **योगबिन्दो** –> प्रदीर्घभवसद्भावात्, मालिन्यातिशयात्तथा । अतत्त्वाऽभिनिवेशाच्च नाऽन्येष्वन्यस्य जातुचित् ॥७३॥ <– इति । अन्येषु = अचरमावर्त्तेषु, अन्यस्य = अपुनर्बन्धकादिभिन्नस्येति । **प्रत्युत दोषोदीरकमेव** तस्य अप्रशान्तमतित्वात् । तदुक्त **श्रीसिद्धसेनदिवाकरेण द्वात्रिंशिकाप्रकरणे** [१८/२८] **मूलकारैश्च लोकतत्त्वनिर्णये** –> अप्रशान्त-मतौ शास्त्रसद्भावप्रतिपादनम् । दोषायाऽभिनवोदीर्णे, शमनीयमिव ज्वरे ॥ <– इति । तदुक्त **योगशतकेऽपि** –> उवएसोऽ-विसयम्मी विसए वि अणीइसो अणुवएसो । बधनिमित्त णियमा, जहोइओ पुण भवे जोगो ॥३६॥<– इति । **उपदेशपदेऽपि** –> होति अकालपयोगो निरत्थगो तहवगारपरओ य । हदि हु सदोसहस्सवि नियमा लोगे वि सिद्धमिण ॥४३१॥ <– इत्युक्तम् ।

**स च भावपरिपाकाख्यपर्याययुक्तकालादेव भवतीति** । ननु कालस्यैकत्वे भावपरिपाकपर्यायसमवधाने सर्वेषामेव युगपत्त-

**ગાથાર્થ** - સુકૃત વગેરે હોવા છતા પણ મુખ્યતયા [પરિપક્વ] કાળથી જ ચરમ પુદ્ગલપરાવર્ત થાય છે, તાવ શમાવવાના ઔષધના કાળની જેમ-આ પ્રમાણે શાસ્ત્રવેત્તાઓ નિપુણ રીતે જાણે છે [૫/૩]

## ચરમાવર્ત ક્યારે આવે ?

**ટીકાર્થ** - ચરમ પુદ્ગલપરાવર્તની સામગ્રીમા સુકૃત વગેરેનો પ્રવેશ થવા છતા પણ ચરમાવર્ત મુખ્યતયા કાળથી જ થાય છે, કારણ કે પરિપક્વ કાળ પોતાનાથી ભિન્ન ચરમાવર્તકારણોની અપેક્ષાએ ચરમાવર્ત લાવવામા વિલમ્બ નથી કરતો [અર્થાત્ પરિપક્વ કાળ અન્ય કારણોના વિલબથી ચરમાવર્તને લાવવામા વિલબ નથી કરતો, પરિપક્વ કાલથી ચરમાવર્ત આવી જ જાય, પુણ્ય, પુરુષાર્થ વગેરે અન્ય કારણોને ચરમાવર્ત લાવવામા કાળપરિપાકની રાહ જોવી પડે છે પરતુ પરિપક્વ કાળને ચરમાવર્ત લાવવામા પુણ્ય પુરુષાર્થ વગેરેની રાહ જોવી નથી પડતી ] મૂળ ગ્રથમા સુકૃતપદ છે તે પુણ્યપ્રકૃતિની અપેક્ષાએ જાણવુ બાકી કર્મ સામાન્યનુ જ ગ્રહણ કરવુ 'सुकृतादि' પદમા આદિશબ્દ છે તેનાથી પુરુષાર્થ, નિયતિ વગેરે સમજવા

પ્રસ્તુત વાત સમજવા માટે શ્રીમદ્જી દૃષ્ટાત બતાવે છે કે - તાવને શમાવનાર ઔષધના કાળની જેમ આ જાણવુ જેમ તાવને શમાવનાર ઔષધ પણ તાવના પહેલા ઉથલા વખતે અર્થાત્ ચડતા તાવના સમયે આપવામા આવેલ હોય તો તે ગુણકારી બનતુ નથી, પરતુ દોષની ઉદીરણા કરનાર થાય છે અર્થાત્ સામે ચાલીને દુષ્ટ દોષને નિમત્રણ આપવામા નિમિત્ત બને છે અને તાવ ઉતરવાના સમયે અપાયેલ તે જ ઔષધ ગુણકારી = હિતકારી = તાવશમનકારક થાય છે તથા તાવને ઘટવાનો અવસર તો પરિપાક નામના પર્યાયવાળા = પરિપક્વ કાળથી જ ઉત્પન્ન થાય છે બરાબર આ જ રીતે સદ્ધર્મરૂપી ઔષધ પણ અચરમાવર્ત કાળમા આપેલુ ગુણકારી થતુ નથી, પરતુ દોષની ઉદીરણા = ઉત્તેજન કરનાર જ થાય છે ચરમ પુદ્ગલપરાવર્ત કાળમા આપેલ તે જ સદ્ધર્મસ્વરૂપ ઔષધ હિતકારી થાય છે અને ચરમાવર્તકાળ ભાવપરિપાક નામના પર્યાયથી યુક્ત = પરિપક્વ કાળથી જ

उक्तमेव निदर्शनार्थं स्पष्टमाह –> 'ने'त्यादि ।

**नागमवचन तदधः सम्यक्परिणमति नियम एषोऽत्र । शमनीयमिवाभिनवज्वरोदयेऽकाल इति कृत्वा ॥५/४॥**

**आगमवचन तदध** = चरमपरावर्ताधिकससारे **न सम्यग्** = विषयविषयिविभागेन **परिणमति नियम एष** = प्रस्तुत **अत्र** प्रक्रमे, **शमनीयमिव** = औषधमिव **अभिनवज्वरोदये अकाल** = अप्रस्ताव **इति कृत्वा** ॥५/४॥

कल्याणकन्दली

दवाप्ति स्यात्, तदसमवधाने च नाद्यावधि कस्यापि तत्प्राप्तिर्युज्यते । **न** चैकस्य कालस्य भावपरिपाकपर्यायपरिकलितत्वेऽपि केषाञ्चिदेव प्राणिना तदितरकारणकलापकलितत्वेन न सर्वेषा युगपदेव तत्सम्प्राप्तिरिति **वक्तव्यम्**, एव सति इतरहेत्वपेक्षाविलम्बाऽभावरूप प्राधान्य कालस्य प्रच्यवेत । **न च** कालस्यानेकत्वान्नाय दोषः, प्रतिलोकाकाशप्रदेश नानाकालाणुस्वीकारादिति **वाच्यम्**, असङ्ख्यलोकाकाशप्रदेशप्रमितकालाणुस्वीकारेऽपि जीवानामनन्तत्वेनैकस्मिन् कालाणौ परिपक्वे सति युगपदेवानन्ताना सर्वजीवानन्तभागप्रमिताना तत्सम्प्राप्त्यापत्तेः, अप्रामाणिकदिगम्बरमतप्रवेशापाताच्च । **न च** सार्द्धद्वीपद्वयवर्तिकालाभ्युपगमान्न सर्वेषामेव लोकाकाशवर्तिना जीवाना युगपदेव तदवाप्तिप्रसङ्ग. इति **साम्प्रतम्**, एव सति तद्बहि नन्दीश्वरद्वीपादिवर्तिना देवादीना मुन्युपदेशादितः लोकोत्तरतत्त्वसप्राप्ति न स्यात्, स्याच्च सर्वेषामेव सार्द्धद्वीपद्वयगतजीवाना युगपत्तदवाप्ति । **एतेन** सार्द्धद्वीपद्वयवर्तिकालपरिपाकादेव तद्बहिर्वर्तिना देवादीना लोकोत्तरतत्त्वावाप्तिरित्यपि **प्रत्याख्यातम्**, सर्वेषामेव कृत्स्नलोकगताना जीवाना तत्प्रसक्तेश्च । **अनेन** नित्यैककालद्रव्यकल्पनापि **निरस्ता**, कस्याऽप्यद्यावधि तदनापत्तेरिति **चेत् ? अत्रोच्यते** –> 'जीवा चेव कालो त्ति अजीवा चेव कालो त्ति [ ] जीवाजीवाभिगमवचनात् कालस्य जीवाऽजीवपर्यायविशेषरूपत्वाभ्युपगमान्नाय दोष । अत्र च –> 'काल पुन. परिणाम उच्यते' <– [११/४२] इति चरकसहितावचनमपि सवदति । प्रकृते च यस्मिन्नेव हि जीवे परिपक्वकालपर्यायो जायते तदपेक्षयैव हि चरमावर्त्तस्स्वीक्रियते, न त्वन्यापेक्षया । परिपक्वकालश्च स्वत एव सञ्जायते, चतु.-शरणगमनादीना तथाभव्यत्वपरिपाकसाधनानामपि परमार्थत कालेनैवोपलब्धि तात्त्विकी । यथा च कालस्य जीवाऽजीवानतिरिक्तत्व तथा व्युत्पादितमस्माभि **भानुमत्यभिधानाया न्यायालोकटीकायामित्यधिक** ततोऽवसेयम् ॥५/३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> आगमवचन तदध सम्यक् न परिणमति एष नियमः अत्र; अभिनवज्वरोदये शमनीयमिव, अकाल इति कृत्वा ॥५/४॥ इय कारिका **अधिकारविशिकावृत्ति-श्रावकधर्मविधिवृत्त्यादौ** [अ वि गा २० श्रा.ध गा ५]समुद्धृता । **न विषय-विषयिभावेन** उत्सर्गापवाद-निश्चयव्यवहार-द्रव्यस्तवभावस्तव-ज्ञानक्रिया-निक्षेपनयप्रमाणसप्तभङ्ग्यादिक यथास्थितस्वपरस्थानभावेन रुचिविशेषयुक्तेन **परिणमति, अकालः** = अनवसर **इति कृत्वा** इत्यत्रान्वीयते, दृष्टान्तेऽपि च । तदुक्त **उपदेशपदे** –> घणमिच्छत्तो कालो एत्थ अकालो उ होति नायव्वो । कालो य अपुणबधगपभिती धीरेहि निद्दिट्ठो ॥४३२॥<– इति । अकाल = जिनवचनस्य सम्यक्परिणामाऽपेक्षयाऽनुचित काल इत्यर्थ । तेन नातिप्रसङ्गोऽनापत्तिर्वा । तत्काले तस्यैव गुरुकर्मत्वादयोग्यत्वेऽपि तदभिन्नतया तत्कालस्याऽकालत्वोक्तिरिति ध्येयम् । तदुक्त **पञ्चवस्तुके**ऽपि –> गुरुकम्माण जम्हा, किलिट्ठचित्ताण तस्स भावत्थो । नो परिणमेइ सम्म, कुकुमरागो व्व मलिणम्मि ॥ विट्ठाण सूअरो जह, उवएसेण वि न तीरए

થાય છે - આમ જેમ નિપુણ રીતે જાણી શકાય તેમ સિદ્ધાન્તવેદી જાણે છે [૫/૩]

**<u>વિશેષાર્થ</u>** - સમય પાક્યા પૂર્વે કોઈને કશુ મળતુ નથી અને સમય પાકી ગયો હોય તો અવશ્ય મળે છે તથા કાળપરિપાક સ્વયભૂ છે - સ્વત છે - આ નિષ્કર્ષ છે [૫/૩]

ઉપરોક્ત દષ્ટાન્તાર્થને જ સ્પષ્ટ કરતા મૂલકારશ્રી કહે છે કે —

**<u>ગાથાર્થ</u>** - આગમવચન ચરમાવર્ત પૂર્વે સમ્યક્ પરિણમતુ નથી - આ અહીં નિયમ છે, જેમ નવા તાવના ઉદયે ઔષધ સારી રીતે પરિણમતુ નથી તેમ, કારણ કે ત્યારે અકાળ છે [૫/૪]

### ❀ અકાળે આંબા ન પાકે ❀

**<u>ટીકાર્થ</u>** - ચરમ પુદ્‌ગલપરાવર્ત કરતા જેનો વધુ સસાર હોય તે જીવને વિષય-વિષયી વિભાગથી આગમવચન પરિણમતુ નથી આ પ્રસ્તુત નિયમ અહીં જાણવો, જેમ કે નવા તાવના ઉદયમા ઔષધ સારી રીતે પરિણમતુ નથી, કારણ કે તે સમયે ઔષધનો અવસર નથી હોતો [૫/૪]

**<u>વિશેષાર્થ</u>** - અભવ્ય પણ શાસ્ત્રો- ૯ પૂર્વ ભણી જાય પરતુ ઉત્સર્ગ-અપવાદ, હેય-ઉપાદેય, જ્ઞાન-ક્રિયા ઈત્યાદિ વિષય-વિભાગાનુસારે તેનુ પરિણમન તો ચરમાવર્તમા જ થાય બે વર્ષનો છોકરો ગમે તેટલી મહેનત કરે તે ડૉક્ટર બની ન શકે, કેમ તે વખતે ડૉક્ટર થવાનો અવસર નથી અત્યત ગરમીના દિવસોમા આબલીનુ પાણી પરિણમશે હિમાલયમા શીયાળામા આબલીનુ પાણી પચી ન શકે, તાવ આવી જાય, કેમ કે ત્યારે તેનો અવસર નથી ઉલ્ટી થવાના સમયે દૂધપાક આપવામા આ' તે

न केवलं तदधस्तात् आगमवचनं न परिणमति किन्तु विपरीतं परिणमतीत्याह -> 'आगमे'-त्यादि।

आगमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव तथा । पश्यन्त्यपवादात्मकमविषय इह मन्दधीनयनाः ॥५/५॥

**आगमदीपे** = सिद्धान्तवादप्रदीपे अध्यारोपं = आरोपितरूपं एव मण्डलं, 'मयूरचन्द्रकाकारं नीललोहितभासुरं । प्रपश्यन्ति प्रदीपादेर्मण्डलं मन्दचक्षुषः ॥ ( )' इत्युक्तरूपं **अविषये** = अपवादाऽस्थानेऽपकृष्टवादात्मकं **इह** = लोके **मन्दधीनयना** = मन्दबुद्धिचक्षुषः **तत्त्वत** = वस्तुवृत्त्या **असदेव** = अविद्यमानमेव **तथा** = 'तैमिरिकदृश्येन तेन प्रकारेण **पश्यन्ति** दृष्टिदोषात् ॥५/५॥

उक्तमेवार्थं कार्यलिङ्गेन समर्थयति -> 'तत एवे'त्यादि ।

तत एवाऽविधिसेवा दानादौ तत्प्रसिद्धफल एव । तत्तत्त्वदृशामेषा पापा कथमन्यथा भवति ॥५/६॥

**तत एव** = आगमदीपेऽध्यारोपमण्डलदर्शनादेव **अविधे** = विधिविपर्ययस्य सेवा **दानादौ** विषये **तत्प्रसिद्धफल**

कल्याणकन्दली

नरिउ । समागसूअगे इय, अविरत्तमणो अकज्जम्मि ॥४२/४३॥ <- इति । शिष्टमतिरोहितार्थं विभावितप्रायञ्च ॥५/४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> अविषये आगमदीपे तत्त्वतोऽसदेव अपवादात्मकं अध्यारोपमण्डलं इह मन्दधीनयना. तथा पश्यन्ति ॥५/५॥ अध्यारोपः = आरोपितरूपमेव = ज्ञानलक्षणसन्निकर्षेण उपस्थापितं रूपमेव मण्डलम् । अपवादाऽस्थाने = अपकृष्टवादाऽगोचरे अपकृष्टवादात्मकं = अव्याप्त्यतिव्याप्त्यादिदोषोद्भावनपरकथात्मकम् । इदञ्च स्वगर्वनाशद्योतकम् । तदुक्तं चाणक्यसूत्रेऽपि -> आत्मविनाशं सूचयति अधर्मबुद्धिः <- [२४२] इति । तदुक्तं क्षेमेन्द्रेणापि क्षत्रचूडामणौ -> अविवेकिजनानां हि सतां वाक्यमसङ्गतम् <- इति । मन्दबुद्धिचक्षुष' इति । व्यवहारतः कदाचित् निशिततर्कधीशालित्वेऽपि तथाविधधियो मोहावृतत्वेन मन्दत्वमवसेयम् । इदमेवाऽभिप्रेत्य -> 'मंदा मोहेण पाउडा' <- [१/१/११] इति सूत्रकृताङ्गसूत्रे धर्मधर्मिणोरभेदोपचारादुक्तमिति ध्येयम् । तैमिरिकदृश्येन = नयनगततिमिररोगलक्षणस्वदृष्टिदोषात् दृष्टव्येनेति । शिष्टं स्पष्टमेव ॥५/५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> तत एव तत्प्रसिद्धफले एव दानादौ अविधिसेवा भवति, अन्यथा तत्तत्त्वदृशां एषा पापा कथम् ? ॥५/६॥

પચે નહિ, કારણ કે ત્યારે તેનો અવસર નથી નાપાસ થયેલ વિદ્યાર્થી પાસે કે તાજેતરમા વિધવા થયેલ બાઈ સાથે મોટેથી હસી-ખીલીને વાત ન કરાય, કેમ કે ત્યારે તેનો અવસર નથી ટૂંકમા સારી વસ્તુ પણ અવસરે જ શોભે [૫/૪]

અચરમાવર્તમા આગમવચન પરિણમતુ નથી એટલુ જ નહીં પણ વિપરીત રીતે પરિણમે છે. આ વાતને જણાવવા સૂરિચક્રવર્તી કહે છે કે —

## ❀ અચરમાવર્તીને આગમમાં પણ દોષદર્શન ❀

**ગાથાર્થ** - દોષના અવિષયભૂત એવા આગમસ્વરૂપ દીપકને વિશે વાસ્તવમા કાલ્પનિક જ અપવાદાત્મક અધ્યારોપમંડલને મન્દબુદ્ધિરૂપી આંખવાળા જીવો તે પ્રકારે જુએ છે [૫/૫]

**ટીકાર્થ** - જેમ નબળી આંખવાળા લોકો દીવાની આસપાસ મોરપીંછમા રહેલ ચન્દ્રકના આકારવાળા કાળા-લાલ-ભાસ્વર વર્ણવાળા વર્તુળાકાર મંડલને જુએ છે, પરંતુ વાસ્તવમા તે ત્યા હોતુ નથી તેમ અપવાદ = દૂષણના અવિષયભૂત એવા સિદ્ધાન્તના સમ્યક્વાદ-સ્યાદ્વાદસ્વરૂપ દીપકને વિશે વાસ્તવિક રીતે અવિદ્યમાન એવા દૂષણસ્વરૂપ આરોપિતરૂપાત્મક મંડલને આ લોકમા મંદબુદ્ધિરૂપી આંખવાળા જીવો પોતાની દૃષ્ટિના દોષના લીધે જુએ છે ઉપર બતાવી ગયા તે મુજબ આંખના તિમિર દોષથી દીપક પાસે મયૂરચન્દ્રક દેખાય છે તેમ આ વાત સમજવી [સુજ્ઞ વાચકવર્ગને સમજવામા સરળ બને તે આશયથી ટીકાના શબ્દક્રમનું ઉલ્લંઘન કરીને અર્થક્રમને પ્રધાન રાખીને આ શ્લોકની ટીકાનો અર્થ અહીં બતાવવામા આવેલ છે ] [૫/૫]

ઉપરોક્ત હકીકતનુ જ કાર્યરૂપી લિંગ દ્વારા સમર્થન કરતા આચાર્યદેવશ્રી કહે છે કે —

**ગાથાર્થ** - તેથી જ આગમપ્રસિદ્ધ ફલવાળા એવા જ દાન વગેરેને વિશે અવિધિસેવા થાય છે, બાકી આગમમા પ્રામાણ્યદર્શી જીવોને આ દુષ્ટ અવિધિસેવા કેમ થઈ શકે ? [૫/૬]

## ❀ આગમપ્રામાણ્યવાદી અવિધિથી દૂર રહે ❀

**ટીકાર્થ** - આગમરૂપી દીપકમા દોષાત્મક અધ્યારોપમંડલ દેખાવાના લીધે જ આગમસ્વીકૃતફળવાળા એવા જ દાનાદિને

' मुद्रितप्रतौ 'तैमिरिकदृश्यन' इत्यशुद्धः पाठः ।

**एव** = आगमाभ्युपगतफल एव **भवति** । **अन्यथा** = आगमार्थाऽध्यारोपाभावे **तत्तत्त्वदृशा** = आगमप्रामाण्याभ्युपगन्तृणा **एषा** = दानाद्यविधिसेवा **पापा** = पापहेतु **कथ स्यात्** ? फलार्थिन फलानुपाये प्रवृत्ते अर्थभ्रम विनाऽसम्भवादिति भाव ॥५/६॥

ज्ञानफलाभावलक्षणाऽपरिणामस्याप्यविधिसेवा लिङ्गमित्याह —> **'येषामि'**त्यादि ।

**येषामेषा तेषामागमवचन न परिणत सम्यक् । अमृतरसास्वादज्ञः को नाम विषे प्रवर्तेत ? ॥५/७॥**

**येषा** जीवाना **एषा** = अविधिसेवा **तेषा आगमवचन न सम्यक्** = फलोपधानेन **परिणतम्** । **को नाम**

**कल्याणकन्दली**

**दानाद्यविधिसेवेति** । आदिपदेन शीलादिग्रहण, तत्क्रमेणैवाऽऽराधनायोग्यताविर्भावात् । यथोक्त **स्तवपरिज्ञाया** —> एत्तो च्चिय णिद्दिट्ठो धम्मम्मि चउव्विहम्मि वि कमो य । इह दाण-सील-तव-भावणामए अण्णहाऽजोगा ॥१९८॥ सतपि वज्झमणिच्च ठाणे दाण पि जो न वियरेइ । इह खुद्दओ कह सो सील अइदुद्धर धरइ ॥१९९॥ अस्सीलो ण य जायइ सुद्धस्स तवस्स हदि विसओ वि । जहसत्तीएऽतवस्सी भावइ कह भावणाजाल ॥२००॥ <— इति । दानाद्यविधिसेवा **पापहेतुरि**ति । यथोक्त **श्रीरत्नशेखरसूरिभि सम्बोधसप्ततिप्रकरणे** —> जह भोयणमविहिकय विणासए विहिकय जियावेई । तह अविहिकओ धम्मो देइ भव विहिकओ मुक्ख ॥४३॥ <— इति । तदुक्त **अष्टकप्रकरणे** —> यथैवाऽविधिना लोके न विद्याग्रहणादि यत् । विपर्ययफलत्वेन, तथेदमपि भाव्यताम् ॥ [८/४] <— इति । तदुक्त **योगशतकवृत्तौ** अपि —> अविधे प्रत्यवायहेतुत्वात्, अकृतोऽविधिकृतयोगाद् वर, असच्चिकित्सोदाहरणादिति <— [श्लो ४ वृ] । दानादौ विधिसेवनेनैव जिनाज्ञा आराधिता स्यात् । तदुक्त **पञ्चवस्तुके** —> विहिदाणम्मि जिणाण, आणा आराहिया धुव होइ । अण्णेसि विहिदसणकमेण मग्गस्सऽवत्थाण ॥७९६॥ <— इति । अथाऽविधौ सत्यपि क्रियमाणात् दानादिसदनुष्ठानात् कालेनाऽपवर्गप्राप्तिस्स्यादेवेति चेत् ? न, स्तोकस्यापि विध्यादिपरिकलितस्यैव सदनुष्ठानस्याऽपवर्गबीजत्वेनाऽर्हतामभिमतत्वात् । तदुक्त मूलकारैरेव **धर्मबिन्दौ** —> विशुद्ध सदनुष्ठान स्तोकमप्यर्हता मतम्' [ध बि.४/श्लो २१] इति । विधिपालनपरत्वमासन्नसिद्धिलक्षणमविधिसेवनश्चाभव्यदूरभव्यादिलक्षणमिति भाव । तदुक्त **उपदेशपदे सम्बोधप्रकरणे दर्शनशुद्धिप्रकरणे** [२७] च —> आसन्नसिद्धिआण विहिपरिणामो उ होइ सया काल । विहिचाउ अविहिभत्ती, अभव्वजिअदूरभव्वाण ॥ <— [स देवाधि १९३] इति । **फलानुपाये** इति उपलक्षणात् फलबाधके इत्यपि बोध्यम् । यद्वा फलानुपाये = फलोपायविपर्यये इत्येव व्याख्येयम्, फलानुपायेन साध्यसिद्धेरनभिमतत्वात् । तदुक्त **धर्मबिन्दौ** —> अनुपायात्तु साध्यस्य सिद्धि नेच्छन्ति पण्डिता <— [ध बि ४/२३] इति । 'अनुपायात्तु = उपायविपर्ययात् पुन ' इति तद्वृत्तिकार । प्रक्रमे फलानुपायोऽविधिसेवात्मको बोध्य । **अर्थभ्रम** = फलानुपायादिलक्षणेऽर्थे फलोपायत्वादिप्रकारक विपर्यास विनाऽसम्भवादिति । शिष्ट स्पष्टम् ॥५/६॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> येषा एषा तेषा आगमवचन सम्यक् न परिणतम् । को नाम अमृतरसास्वादज्ञो विषे प्रवर्तेत ? ॥५/७॥

**सम्यक्** = **फलोपधानेन** = स्वोत्तरत्वविशिष्टसामानाधिकरण्यसम्बन्धेन फलजननतया परिणतम् । ततश्च न तदीयाऽविधिसेवामवलम्ब्य अज्ञातदशाया प्रवृत्तस्य विधिरसिकस्य प्रज्ञापनीयस्य तदुत्तर फलोत्पादेऽपि व्यभिचार ।

વિશે વિધિથી વિપરીત આચરણ થાય છે બાકી આગમિક અર્થને વિશે અપ્રામાણ્યનુ ઉદ્‌ભાવન કરવામા આવેલ ન હોય તો આગમપ્રામાણ્ય માનનારા જીવોને દાનાદિને વિશે પાપજનક અવિધિસેવન કેવી રીતે થાય ? ફલના અર્થી પુરુષની ફલના અનુપાયમા પ્રવૃત્તિ અર્થભ્રમ વિના સભવી ન શકે - એવો મૂલકારશ્રીનો આશય છે [પ્રસ્તુતમા ફલ = અભ્યુદય, પુણ્ય વગેરે, ફલનો અનુપાય = અવિધિસેવન અર્થભ્રમ = ફલજનનભ્રાતિ એમ સમજવુ ] [૫/૬]

અવિધિસેવન એ જ્ઞાનના ફળના અભાવાત્મક અપરિણામનુ પણ લિગ = લક્ષણ છે આ વાતને બતાવતા શ્રીહરિભદ્રસૂરીશ્વરજી કહે છે કે —

<u>ગાથાર્થ</u> - જેઓ અવિધિસેવન કરે છે તેઓને આગમવચન સારી રીતે પરિણત થયુ નથી અમૃત રસના આસ્વાદને જાણનારો કોણ ઝેરમા પ્રવૃત્તિ કરે ? [૫/૭]

<u>ટીકાર્થ</u> - જે જીવો દાનાદિને વિશે અવિધિને સેવે છે તેઓને ફલોત્પન્ન કરવારૂપે આગમવચન પરિણત થયુ નથી અમૃતના રસાસ્વાદને જાણનાર કોણ ઝેરને વિશે ખાવાની પ્રવૃત્તિ આચરે ? વિષપ્રવૃત્તિતુલ્ય અવિધિસેવન છે તેથી જણાય છે કે તાત્ત્વિક

अमृतरसास्वादज्ञ पुमान् विषे प्रवर्तेत = भक्षणप्रवृत्तिं विदध्यात् ? 'विषप्रवृत्तिकल्पाऽविधिसेवा । तत्त्वतो नागम-वचनं फलत परिणतमिति भाव ॥५/७॥ विधिमुखेनोक्तम् । निषेधमुखेनाह –> 'तस्मादि'त्यादि ।

तस्माच्चरमे नियमादागमवचनमिह पुद्गलावर्त्ते । परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः ॥५/८॥

कल्याणकन्दली

सुगमार्थकल्पनाकारस्तु –> 'सम्यग् = ज्ञेयविषयविभागेन' <– इत्याचष्टे । तत्र ज्ञेयपदस्योपलक्षणात् हेयोपादेयग्रहणमिति नातिप्रसङ्ग इति विभावनीयम् ।

–> दृष्टान्तो नाम यत्र मूर्ख-विदुषां बुद्धि-साम्यम् <– [३/८/३४] इति चरकसंहितावचनादुदाहरति-को नाम अमृत-रसास्वादज्ञ इति । क्वचित् कदाचित् प्रयोजनविशेषेण अमृतरसास्वादज्ञोऽपि विषानयन-नयन-क्रयण-विक्रयणादिकं विदध्यादिति चेतसिकृत्याह-विषे प्रवर्त्तेत = भक्षणप्रवृत्तिं विदध्यादिति । ततश्च दार्ष्टान्तिकेऽप्यविधेर्निषिध्यतया उपदेशे प्रदर्शनेऽपि न दोषः । न हि परिहारार्थितयाऽनन्यगत्या तत्र प्रवृत्तः प्रवृत्तो नाम । उपलक्षणादविधिप्रशंसानिषेधः सूचितः । तदुक्तं षष्टिशतकप्रकरणे नेमिचन्द्रेण –> मुद्धाण रंजणत्थं अविहिपसंसं कयाइ न करिज्जा । किं कुलवहुणो कत्थइ थुणंति वेसाण चरियाइं ॥५८॥

ननु शुद्धक्रियाया एव पक्षपाते तदलाभेऽशुद्धायाश्चानङ्गीकारेऽक्रियापरिणामस्य स्वत एवोपनिपातात्तीर्थोच्छेद एव स्यात् । ततश्च 'सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डित' इति न्यायादविधिसेवाऽप्याश्रयणीयैवेति चेत् ? मैवम्, अविधिकरणे सूत्रोक्तक्रिया-विनाशात् परमार्थतः तीर्थविच्छेद एव, सूत्रविहितयथोचितक्रियाविशिष्टसाधु-साध्वी-श्रावक-श्राविकासमुदायो हि तीर्थनाम्ना प्रोच्यते । तदुक्तं सम्बोधसप्ततिकाप्रकरणे –> एगो साहू एगा य साहूणी सावओ वि सड्ढी वा । आणाजुत्तो संघो सेसो पुण अट्ठिसंघाओ ॥ <– [३९] इति । ततश्चाविधिसेवाया विषकल्पत्वमेव । विषं हि भक्षकस्यैव विनाशकम्, अविधिसेवा त्वसदालम्बनतया परेषामपि तत्र पक्षपातजननादिद्वारा । विधिकरणे दोषप्राप्तावप्यदोष एव । तदुक्तं निशीथचूर्णौ अपि–> सव्वत्थ एव विधिं करेंतो जदि वि दोसेहिं पुट्ठो तहा वि सुद्धो [नि.चू.४११९२] ।

इदञ्चात्रावधेयम् –> विधिप्रवृत्तावप्यनाभोगादिनाऽविधिदोषप्रसङ्गश्छद्मस्थस्य भवेदिति विमृश्य तद्भिया न क्रियात्यागो विधेयः किन्तु विधिसम्पादनायैव प्रयतितव्यम् । अशठभावेन विधिसम्पादनप्रवृत्तौ जायमानस्याशुद्धानुष्ठानस्यापि शुद्धानुष्ठानकारणत्वात्, तदुक्तं चैत्यवन्दनमहाभाष्ये –> असढस्स अपरिसुद्धा किरिया सुद्धाण कारणं होइ । जत्तो विमलं रयणं सुहेण वज्झं मलं चयइ ॥<– [चैं. व. महा. भा. गा. ८९७] इति । द्रव्यतो विधिभङ्गे तत्पक्षपाततः श्रद्धालुत्वमप्यनाविलमुपतिष्ठते । यथोक्तं धर्मरत्न-प्रकरणे –> विहिसारं चिय सेवइ, सद्धालू सत्तिमं अणुट्ठाणं । दव्वाइदोसनिहओ वि पक्खवायं वहइ तम्मि ॥९१॥<– इति । उपदेशपदे सम्बोधप्रकरणे दर्शनशुद्धिप्रकरणे [गा २८] च –> धन्नाण विहिजोगो, विहिपक्खाराहगा सया धन्ना । विहिबहु-माणा धन्ना, विहिपक्खअदूसगा धन्ना ॥[स २/३३८] <– इत्युक्तम् । अकरणापेक्षयाऽविधिकरणमपि प्राथमिकदशायां वरिष्ठमेव, निर्जरालाभात् । तदुक्तं जीवानुशासने –> अकुणंताउ कुणंतो अविहीइवि होइ निज्जराभागी । कित्तिमेत्ता सत्ता ज विहिविन्नायगा लोए ॥६२॥ तम्हा विहिसद्दहणं सया कुणंतो करेसु करणिज्जं । अमुणियपरमत्थाणं वयणेसु जीव ! मा सज्ज ॥६४॥<– इति । ततश्च न सातिचारव्रतपालनापेक्षया तदप्रतिपत्तिर्गरीयसी, विधि-पक्षपातेन सातिचारानुष्ठानादप्यभ्यासतः कालेन निरतिचारानुष्ठा-नसम्भवात्, वक्ष्यति चाग्रे –> अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः <– [१३/१३] इति । अयमाशयः प्रथमाभ्यासे तथाविधज्ञानाभावादन्यदाऽपि वा प्रज्ञापनीयस्याविधिदोषो निरनुबन्ध इति तस्य तादृशानुष्ठानमपि न दोषाय विधिबहुमानात् गुर्वाज्ञायोगाच्च तस्य फलतो विधिरूपत्वात् । इदमेवाभिप्रेत्य –> 'अविहिकया वरमकयं असूयवयणं भणंति सव्वन्नू । पायच्छित्तं जम्हा, अकए गुरुयं कए लहुयं ॥ <– [ ] इत्यादिवचनानीति व्यक्तं योगविंशिकावृत्तौ ॥५/७॥

योगदीपिकायां अष्टमकारिकावतरणिकायां –> विधिमुखेनोक्तम् । निषेधमुखेनाह <– इति पाठः । स च प्रामादिकः । तत्स्थाने[1]–> निषेधमुखेनोक्तम् । विधिमुखेनाह <– इत्येव पाठः समीचीनः प्रतिभाति, तथैव पूर्वोत्तरग्रन्थसङ्गतेः, सुगमार्थ-कल्पनावृत्तिकारस्याप्यत्रैव स्वरसाच्च ।

રીતે આગમવચન ફલની અપેક્ષાએ પરિણત થયેલ નથી એવો મૂલકારશ્રીનો આશય છે [૫/૭]

'અચરમાવર્તમાં આગમવચન ન પરિણમે' એમ નિષેધ મુખે જણાવ્યું. હવે તે વાતને વિધિમુખે = વિધાનરૂપે = વિધેયાત્મક રીતે સૂરિપુરંદર જણાવે છે કે –

[1] मुद्रितप्रतौ –> विषप्रवृत्तिकल्पामविधिसेवा <– इत्यशुद्धः पाठः ।

**तस्मात् चरमे पुद्गलावर्त्ते (नियमात्=)** नियमेन **इह** जगति **आगमवचन तत्त्वत खलु** = परमार्थत एव **परिणमति** = उत्तरोत्तरफलमुपदधाति । **स च** परिणतागमवचन **अस्या** = लोकोत्तरतत्त्वसप्राप्ते **अधिकारी भवति,** न शेष ॥५/८॥ किमित्येवमागमवचनपरिणामोऽधिक्रियत इत्यत आह -> **'आगमे'**त्यादि ।

**आगमवचनपरिणतिर्भवरोगसदौषध यदनपायम् । तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति**[1] ॥५/९॥

आगमवचनस्य परिणति अज्ञानावरणह्रासोत्थोपादेयत्वाद्यविषयबालादिज्ञानतुल्यविषयप्रतिभासोत्तीर्णज्ञानावरण-

**कल्याणकन्दली**

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> तस्मात् इह नियमात् चरमे पुद्गलावर्त्ते आगमवचन तत्त्वत. खलु परिणमति । स च अस्या अधिकारी भवति ॥५/८॥ इय कारिका **षष्ठिशतकवृत्त्यादौ** [ष श.गा १६] समुद्धृता वर्तते ।

**नियमेन चरमे पुद्गलावर्त्ते** तथाभव्यत्वपरिपाकेन मिथ्यात्वकटुकत्वनिवृत्त्या मनाक् माधुर्यसिद्धे **आगमवचन परमार्थत एव परिणमति,** नान्यदा । तदुक्त **योगदृष्टिसमुच्चये** -> चरमे पुद्गलावर्त्ते, तथाभव्यत्वपाकत. । सशुद्धमेतन्नियमान्नाऽन्यदापीति तद्विद ॥२४॥ <- इति । **उत्तरोत्तरफल** मोहान्धकारनिवृत्त्युत्तरकालावच्छेदेन प्रधान यद्वा उत्तरेषु = प्रधानेषु उत्तर = प्रधान यत् तत् उत्तरोत्तर, तच्च फल चेति । ततश्च सूक्ष्मभावप्रतिपत्ति-श्रद्धा-सदनुष्ठानादिलक्षण फल **उपदधाति** = जनयति । तदुक्त **धर्मबिन्दौ** -> सूक्ष्मभावप्रतिपत्तिरिति, तत. श्रद्धामृताऽऽस्वादनमिति, तत सदनुष्ठानयोग इति, तत· परमापायहानिरिति, सानुबन्धसुखभाव उत्तरोत्तर प्रकामप्रभूतसत्त्वोपकाराय अवन्ध्यकारण निवृत्तेरिति, भवोपग्राहिकर्मविगम इति, तत निर्वाणगमन-मिति <- [ध बि.अ.८/सू २०-२१-२२-२३-२४-२६-२७] ।

**परिणतागमवचनो लोकोत्तरतत्त्वसम्प्राप्तेः अधिकारी भवति** । 'सर्व वाक्य सावधारण, इष्टतोऽवधारणमि'तिन्यायावलम्बनेन व्यवच्छेद्यमाह -> **न शेषः** = अचरमावर्तकालवर्ती अपरिणताऽऽगमवचनो वा पुमान् । **न च** लोकोत्तरतत्त्वसम्प्राप्तौ ह्यागमवचन-परिणतिर्जायते आगमवचनपरिणतौ सत्याञ्च तदधिकारित्वमित्यन्योन्याश्रय उत्पत्तौ दुर्वार इति **शङ्कनीयम्,** चरमावर्तकालोपलक्षिताया आगमवचनपरिणमनयोग्यताया एव लोकोत्तरतत्त्वसप्राप्त्यधिकारित्वावच्छेदकत्वात्, तस्याश्च प्रागुक्तलिङ्गादिना सुज्ञानत्वादिति सर्व चतुरस्रम् । अपुनर्बन्धकाद्यवस्थासम्भवशुभभावलक्षणस्याऽमृतस्याऽपरिणमनेऽपि ज्ञान-ज्ञानिभक्तिवृद्धिप्रभृतिरूपा भावास्तु भवन्त्येव । यथोक्त **पञ्चाशके** -> अमए देहमए जह अपरिणयम्मिवि सुभा उ भावत्ति । तह मोक्खहेउअमए अण्णेहिवि हदि णिद्दिट्ठो ॥ <- [३/१२] इति । इदञ्च व्यवहारतो ज्ञेयम् । निश्चयनयेन तु भिन्नग्रन्थिरेवास्या अधिकारी । तदुक्त मूलकारैरेव -> निच्छयओ पुण एसो विन्नेओ गठिभेयकालो उ । एयम्मी विहिसतिपालणा हि आरोग्गमेयाओ ॥४३३॥ <- इत्येव **उपदेशपदे** इति ध्येयम् ॥५/८॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> यद् आगमवचनपरिणति अनपाय भवरोगसदौषध तत् इह सदनुष्ठानस्य हेतुः पर सद्बोध इति ॥५/९॥

अज्ञानावरणह्रासेत्यादि । मिथ्यात्वोदयकर्बुरितेन मत्याद्यज्ञानावरणाभिधानकर्मक्षयोपशमेन उत्थ = उत्पन्न उपादेयत्व-

<u>ગાથાર્થ</u> - તેથી અહીં નિયમા ચરમ પુદ્ગલપરાવર્તમા આગમવચન તાત્ત્વિક રીતે જ પરિણમે છે અને તે જ લોકોત્તર તત્ત્વની પ્રાપ્તિનો અધિકારી છે [૫/૮]

## ☰ લોકોત્તરતત્ત્વપ્રાપ્તિના અધિકારીને ઓળખી લો ☰

<u>ટીકાર્થ</u> - માટે આ જગતમા નિયમા ચરમપુદ્ગલપરાવર્તમા આગમવચન પરમાર્થથી જ ઉત્તરોત્તર ફલને લાવી આપે છે આગમવચન જેને પરિણત થયેલ છે તે જ જીવ લોકોત્તરતત્ત્વસપ્રાપ્તિનો અધિકારી થાય છે, બીજો કોઈ નહિ [૫/૮]

-> શા માટે આ રીતે આગમવચનની પરિણતિવાળા જીવને જ પ્રસ્તુતમા અધિકારી બનાવાય છે ? <- આ સમસ્યાનુ સમાધાન કરતા મૂલકારશ્રી કહે છે કે —

<u>ગાથાર્થ</u> - કારણ કે આગમવચનપરિણતિ સસારરૂપી રોગનુ નિર્દોષ એવુ સમ્યક્ ઔષધ છે તેથી તે હોતે છતે સદનુષ્ઠાનનો હેતુ પ્રકૃષ્ટ સદ્બોધ થાય છે [૫/૯]

## ❀ આગમવચનપરિણતિ અમોઘ ઔષધ ❀

१ आगमवचनपरिणतिर्भवरोगसदौषध भवति यस्मात् । निरपाय तदिह पर सदनुष्ठानस्य हेतुरिति ॥५/९॥ इति पाठान्तरम् ।

हासोत्थोपादेयत्वादिविषयाऽऽत्मपरिणामवज्ज्ञानरूपा भवरोगस्य सदौषध तदुच्छेदकत्वेन यत् = यस्मात् अनपाय = निर्दोष, प्रतिबन्धेऽपि श्रद्धादिभावात् । तत् = तस्मात् इह आगमवचनपरिणत्या सत्या पर = प्रकृष्ट सज्ज्ञानावरणहासोत्थत्वात् शुद्धोपादेयत्वादिविषयत्वाच्च । सद्बोध तत्त्वसंवेदननामा प्रकाश सदनुष्ठानस्य विरति-

**कल्याणकन्दली**

हेयत्वाऽगोचर बालादिबोधसदृश यत् विषयप्रतिभासज्ञान तस्मात् उत्तीर्ण = अतिक्रान्त यत् मिथ्यात्वक्षयोपशमानुविद्धेन ज्ञानावरणक्षयोपशमेन जन्य उपादेयत्व-हेयत्वविषयक आत्मपरिणतिमज्ज्ञान तद्रूपा परिणतिरिति शब्दार्थ । भावार्थस्त्वेवम् —> विषयप्रतिभासाऽऽत्मपरिणतिमत्तत्त्वसंवेदनरूपेण ज्ञान त्रिधा भिद्यते । तदुक्त मूलकारेण अष्टकप्रकरणे —> विषयप्रतिभास चात्मपरिणतिमत्तथा । तत्त्वसंवेदन चैव, ज्ञानमाहुर्महर्षय ॥ <— [९/१] इति । विषयस्यैव प्रतिभासो यत्र तत् विषयप्रतिभास मत्यज्ञानावरणादिक्षयोपशमजन्य हेयत्वाद्यनिनिश्चयात्मकमाद्य ज्ञानम् । तदुक्त अष्टकप्रकरणे —> विषकण्टकरत्नादौ बालादिप्रतिभासवत् । विषयप्रतिभास स्यात् तद्धेयत्वाद्यवेदकम् ॥ निरपेक्षप्रवृत्त्यादिलिङ्गमेतदुदाहृतम् । अज्ञानावरणापाय महापायनिबन्धनम् ॥ <— [९/२-३] इति । तदुक्त उपदेशपदेऽपि —> विसयपडिहासमित्त बालस्सेवक्खरयणविसयति <— [३७३] । मिथ्यादृशामेतत् बोध्यम् । यद्यपि मिथ्यादृशामपि घटादिज्ञानेन घटादिग्राह्यता निश्चीयत एव तथापि स्वविषयत्वावच्छेदेन तदनिश्चयान्न दोष, स्वसंवेद्यस्य स्वस्यैव तदनिश्चयादिति व्यक्त साधुसामग्र्यद्वात्रिंशिकायाम् । द्वितीयञ्च सम्यग्दृशाम् आत्मनः = स्वस्य परिणाम अर्थानर्थप्रतिभासात्मा विद्यते यत्र तत् आत्मपरिणामवदिति व्युत्पत्ते । इदञ्च ज्ञानावरणक्षयोपशमजन्यमवगन्तव्यम्, —> तथाविधप्रवृत्त्यादिव्यङ्ग्य सदनुबन्धि च । ज्ञानावरणह्रासोत्थ प्रायो वैराग्यकारणम् ॥ <— [९/५] इति अष्टकवचनात् । तत्त्व = परमार्थ सम्यक् = प्रवृत्त्याद्युपहितत्वेन वेद्यते यस्मिंस्तत् तत्त्वसंवेदन सज्ज्ञानावरणक्षयोपशमसपाद्य साधूना बोध्यम् । यदुक्त अष्टकप्रकरणे —> स्वस्थवृत्ते प्रशान्तस्य तद्धेयत्वादिनिश्चयम् । तत्त्वसंवेदन सम्यग् यथाशक्ति फलप्रदम् ॥ <— [९/६] इति । प्रथम पापकर्मणि निष्कम्पप्रवृत्त्या ज्ञायते, द्वितीय तत्र सकम्पप्रवृत्त्यादिना, तृतीयञ्च निरवद्यप्रवृत्त्या विज्ञायते । ततश्च प्रकृते आगमपरिणति आत्मपरिणतिवज्ज्ञानात्मिका बोध्या ।

तदुच्छेदकत्वेन = भवव्याधिविनाशकत्वेन । अनेनागमपरिणतिलक्षणस्यौषधस्य समीचीनत्वमावेदितम् । निर्दोषमिति । न चैव सम्यग्दृशा पापप्रवृत्ति नैव स्यात्, अन्यथाऽऽत्मपरिणतिवज्ज्ञानस्य निर्दोषता व्याहतेरिति वक्तव्यम्, पूर्वार्जितेन कर्मणा चारित्रमोहोदयजनितान्तरायलक्षणे प्रतिबन्धे सति अपि श्रद्धादिभावात् = वस्तुगतगुण-दोषपरिज्ञानपूर्वक-चारित्रेच्छासमन्वितत्वात् [द्वा द्वा ६/४] । तदुक्त अष्टकप्रकरणे —> पातादिपरतन्त्रस्य तद्दोषादावसंशयम् । अनर्थाद्याप्तियुक्तम् चात्मपरिणतिमन्मतम् ॥ [९/४] <— इति । उपदेशपदेऽपि —> भिन्ने तु इतो नाण जहक्खरयणेसु तग्गय चेव । पडिबधम्मि वि सद्धादिभावतो सम्मरूव तु ॥३७४॥ <— इत्युक्तम् । तद्वृत्तौ —> 'प्रतिबन्धेऽपि = तथाविधज्ञानावरणोदयाद् विघातेऽपि श्रद्धादिभावत = 'तमेव सच्च निसक ज जिणेहिं पवेइय' इत्यादे श्रद्धानस्य आदिशब्दात् गीतार्थप्रज्ञापनीयत्वस्य च भावात् <— [पृ २२१] इति मुनिचन्द्रसूरयः । 'प्रतिबन्धेऽपि = सदनुष्ठानव्याघातेऽपी'ति जिनेश्वरसूरयः [९/४ अष्टकवृत्ति] । तस्मात् = द्वितीयज्ञानात्मकाऽऽगमपरिणतेर्भवव्याधिविनाशकत्वात् आगमवचनपरिणत्या सत्या कालान्तरे प्रकृष्टः तत्त्वसंवेदननामा प्रकाशो जायत इत्यध्याहारेणान्वयो बोध्य. । न च तस्यैव कथ प्रकृष्टत्वमिति शङ्कनीयम्, तत्त्वसंवेदनस्य सज्ज्ञानावरणह्रासोत्थत्वात् = दर्शनमोहक्षयोपशमप्रभृतिप्राबल्यप्रयुक्तचारित्रमोहक्षयोपशमानुविद्ध-ज्ञानावरणक्षयोपशमजन्यत्वात्, शुद्धोपादेयत्वादिविषयत्वाच्च = शुद्धनिश्चयनयाभिप्रेतोपादेयत्व-हेयत्वनिष्ठप्रकारतानिरूपितप्रकारिताविशिष्टत्वाच्च । ततश्च न रजोहरणादिचारित्रोपकरणादिगोचरे व्यवहारनयाभिमतोपादेयतावगाहिनि अविरतसम्यग्दृष्टिबोधेऽतिव्याप्तिरिति विभावनीयम् । इदञ्च महोदयनिबन्धनम्, —> 'न्याय्यादौ शुद्धवृत्त्यादिगम्यमेतत्प्रकीर्त्तितम् । सज्ज्ञानावरणापाय, महोदयनिबन्धनम् ॥ <— [९/७] इति अष्टकवचनात् ।

<u>टीकार्थ</u> - અજ્ઞાનાવરણ કર્મના હ્રાસથી ઉત્પન્ન થનાર ઉપાદેયત્વાદિઅવિષયક બાળકોના જ્ઞાન જેવુ, વિષયપ્રતિભાસ જ્ઞાનને ઓળંગી ગયેલ તેમ જ જ્ઞાનાવરણના ક્ષયોપશમથી ઉત્પન્ન થયેલ ઉપાદેયત્વાદિવિષયક આત્મપરિણતિવાળુ જ્ઞાન એ જ આગમવચનપરિણતિ સંસારરૂપી રોગનુ તે અમોઘ ઔષધ છે, કેમ કે તે સંસારરોગનાશક છે તે નિર્દોષ છે, કારણ કે ચારિત્રમોહનીય કર્મના ઉદયના લીધે અંતરાય હોવા છતા પણ તેને ચારિત્રની સચોટ શ્રદ્ધા હોય છે આમ હોવાના લીધે જ દર્શિત આગમવચનપરિણતિ હોતે છતે તત્ત્વસંવેદન નામનો પ્રકૃષ્ટ બોધ ઉત્પન્ન થાય છે કે જે સત્જ્ઞાનાવરણકર્મના ક્ષયોપશમથી ઉત્પન્ન થયેલ હોય છે અને શુદ્ધઉપાદેયત્વાદિવિષયક હોય છે તે તત્ત્વસંવેદન નામનો પ્રકાશ = સદ્બોધ વિરતિસ્વરૂપ સદનુષ્ઠાનને તુરત ઉત્પન્ન કરે છે માટે

रूपस्य **हेतु** = फलोपहितकारणमिति कृत्वा आगमवचनपरिणामोऽधिक्रियते ॥५/९॥ क पुन सद्बोधपूर्वानुष्ठानस्य विशेष ? इत्याह –> **'दशे'**त्यादि ।

**दशसञ्ज्ञाविष्कम्भणयोगे सत्यविकल ह्यदो भवति । परहितनिरतस्य सदा गम्भीरोदारभावस्य ॥५/१०॥**

दशाना सञ्ज्ञाना विष्कम्भण = यथाशक्तिनिरोध तद्योगे तन्निरोधोत्साहे वा **हि** = यत **अद** = प्रकृतानुष्ठान

**कल्याणकन्दली**

विघ्नविरहेण **सदनुष्ठानस्य** = विरतिरूपस्य = षष्ठादिगुणस्थानककालीन-सदसत्प्रवृत्तिनिवृत्त्यात्मकस्य चारित्रस्य **फलोपहित-कारण** = स्वोत्तरत्वविशिष्टसामानाधिकरण्यसम्बन्धेन निरुक्तफलोत्पत्तिव्याप्यम् । ततश्च नातिप्रसङ्ग । उपक्रमोपसहारविरोधपरिहारायाह –> **इति कृत्वा आगमवचनपरिणामो** लोकोत्तरतत्त्वसम्प्राप्तौ **अधिक्रियते**, न विषयप्रतिभासज्ञानवान् भवाभिनन्दीति गम्यम् ॥५/९॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> हि परहितनिरतस्य सदा गम्भीरोदारभावस्य दशसञ्ज्ञाविष्कम्भणयोगे सति अदः अविकल भवति ॥५/१०॥ **दशानां सञ्ज्ञानामिति** । तदुक्त **प्रज्ञापनाया** –> कइविहा ण भते सन्नाओ पन्नत्ताओ ? गोयमा ! दस सन्नाओ पन्नत्ताओ त जहा आहारसन्ना, भयसन्ना, मेहुणसन्ना, परिग्गहसन्ना, कोहसन्ना, माणसन्ना, मायासन्ना, लोहसन्ना, ओहसन्ना, लोगसन्ना य त्ति <– [प्र.सज्ञापद-८/सू.१४७] इति । सञ्ज्ञायतेऽनया जीव इति सञ्ज्ञा कर्मोदयविशेषरूपा । आहारसञ्ज्ञादय स्पष्टा । नवर तत्र दर्शनोपयोग ओघसञ्ज्ञा, ज्ञानोपयोगश्च लोकसञ्ज्ञा इति [१०/सू.७५२] **स्थानाङ्गवृत्तिकारः** । **अन्ये तु** –> ज्ञानोपयोग ओघसञ्ज्ञा दर्शनोपयोगश्च लोकसञ्ज्ञा <– इत्याहुः । –> लोभोदयोपशमाच्छब्दाद्यर्थगोचरा सामान्यावबोधक्रियैव सञ्ज्ञायतेऽनयेति ओघसञ्ज्ञा, तथा तद्विशेषावबोधक्रियैव सञ्ज्ञायतेऽनयेति लोकसञ्ज्ञा । ततश्चौघसञ्ज्ञा दर्शनोपयोगः लोकसञ्ज्ञा

આગમવચનની પરિણતિવાળો જીવ લોકોત્તરતત્ત્વ સપ્રાપ્તિના અધિકારી તરીકે બતાવાયેલ છે [૫/૯]

## ❀ ત્રણ પ્રકારના જ્ઞાનને સમજી લો. ❀

**વિશેષાર્થ** - આગમવચનની પરિણતિ = અનન્ય શ્રદ્ધાયુક્ત યથાવત્ આગમોક્ત અર્થપ્રકાશ - એટલા માટે જરૂરી છે કે અનુષ્ઠાન કેવી વિધિથી કરવુ ? એનુ પરિણામ શુ આવે ? આ બધુ ચર્મચક્ષુથી ન જણાવાના લીધે એના દ્રષ્ટા પુરુષનુ શરણ લઈને- એમના વચનનુ આલબન લઈને જ સાચા અર્થમા આરાધના થઈ શકે છે જેમ રોગી વૈદ્યવચનને અનુસરીને ઔષધના સેવનથી નીરોગી બને છે તેમ ઉપરોક્ત આગમવચનપરિણતિથી જ કર્મરોગ નાબુદ થાય છે પ્રસ્તુતમા આત્મપરિણતિવાળા જ્ઞાનને આગમ-વચનપરિણતિ તરીકે ઉપાધ્યાયજી મહારાજે જણાવેલ હોવાથી જ્ઞાનના ભેદ પ્રાસગિક રીતે સમજી લઈએ જ્ઞાનના ત્રણ પ્રકાર શ્રીહરિભદ્રસૂરિજી મહારાજે અષ્ટકપ્રકરણમા બતાવેલ છે ૧ વિષયપ્રતિભાસ જ્ઞાન, ૨ આત્મપરિણતિવાળુ જ્ઞાન અને ૩ તત્ત્વસવેદન જ્ઞાન નીચેના કોષ્ટક દ્વારા તેની જાણકારી થઈ જશે જુઓ કોષ્ટક –

| ૧ | નામ | વિષય પ્રતિભાસ જ્ઞાન | આત્મપરિણતિવાળુ જ્ઞાન | તત્ત્વસવેદન જ્ઞાન |
|---|---|---|---|---|
| ૨ | કારણ | અજ્ઞાનાવરણ ક્ષયોપશમ | જ્ઞાનાવરણનો ક્ષયોપશમ | સત્જ્ઞાનાવરણ ક્ષયોપશમ |
| ૩ | સ્વરૂપ | ઉપાદેયત્વ-હેયત્વઅવિષયક | ઉપાદેયત્વ-હેયત્વવિષયક | શુદ્ધ નૈશ્ચયિક ઉપાદેયત્વાદિવિષયક |
| ૪ | ઓળખાણ | બાળકના ઉપલકબોધ જેવુ | પ્રાજ્ઞ વ્યક્તિના સ્પષ્ટ બોધ જેવુ | સ્વસ્થ-સ્પષ્ટ-પ્રશાત બોધ જેવુ |
| ૫ | સ્વામી | મિથ્યાદષ્ટિ | સમકિતદષ્ટિ | વિરતિધર |
| ૬ | ફલ | પાપકર્મબધ-ભવભ્રમણ | કર્મનિર્જરા | સાક્ષાત્-વિરતિયોગ-ક્ષેમ, પરપરાએ-મોક્ષ |

ઉપરોક્ત ત્રણ જ્ઞાનમાથી દ્વિતીય જ્ઞાન અહીં આગમવચનપરિણતિરૂપે ઉપાધ્યાયજી મહારાજને માન્ય છે તેના સાતત્ય-પરિશીલન-પરિમાર્જન-સવર્ધન દ્વારા તત્ત્વસવેદન નામનુ તૃતીય જ્ઞાન પ્રાપ્ત થાય છે [૫/૯]

–> 'સદ્બોધપૂર્વકના અનુષ્ઠાનની વિશેષતા શુ છે ?' <– આ શકાનુ સમાધાન આપતા મૂલકારશ્રી કહે છે કે –

## ❀ .... તો સંપૂર્ણ સદ્દનુષ્ઠાન સંભવે ❀

**ગાથાર્થ** - પરહિતમા ડૂબેલ અને સદા ગભીર અને ઉદાર આશયવાળા જીવને દશ પ્રકારની સજ્ઞાનો નિરોધ થાય ત્યારે પ્રસ્તુતમા સદનુષ્ઠાન સપૂર્ણ થાય છે [૫/૧૦]

**ટીકાર્થ** - દશ સજ્ઞાઓનો યથાશક્તિ નિરોધ થયે છતે અથવા તેના પ્રતિરોધનો ઉત્સાહ હોતે છતે પ્રસ્તુત સદનુષ્ઠાન સપૂર્ણ

भवति । अत अविकलं = सम्पूर्णं भवति, तद्वैकल्यापादकसञ्ज्ञाविष्कम्भणात् । परहिते निरतस्य तथा सदा = सर्वकालं गम्भीर उदारश्च भावो यस्य स तथा तस्य । अत इदमविकलत्वाद् विशिष्यते इति भावः ॥५/१०॥

दशसञ्ज्ञाविष्कम्भणमपि दुर्लभं कथं स्यात् ? इत्याह --> 'सर्वज्ञे'त्यादि ।

कल्याणकन्दली

तु ज्ञानोपयोग इति । व्यत्ययमन्ये । अन्ये पुनरित्थमभिदधते-सामान्यप्रवृत्तिरोघसञ्ज्ञा लोकदृष्टिः लोकसञ्ज्ञा <-- इति प्रज्ञापना-टिप्पणे श्रीहरिभद्रसूरयः । प्रज्ञापनावृत्तौ श्रीमलयगिरिसूरयः --> मतिज्ञानावरणकर्मक्षयोपशमनात् शब्दाद्यर्थगोचरा सामान्याव-बोधक्रिया ओघसञ्ज्ञा, तथा तद्विशेषावबोधक्रिया लोकसञ्ज्ञा । एवं चेदमापतितं-दर्शनोपयोग ओघसञ्ज्ञा, ज्ञानोपयोगो लोक-सञ्ज्ञा । अन्ये त्वभिदधति-सामान्यप्रवृत्तिर्यथा वल्ल्या वृत्त्यारोहणमोघसञ्ज्ञा, लोकस्य हेया प्रवृत्तिर्लोकसञ्ज्ञा <-- इत्याहुः । --> रयणीए सकोचो कमलाणं होइ लोकसन्नाए । ओहे चइत्तु मग्गं चढंति रुक्खेसु वल्लीओ ॥ <-- [प्रकरण समुच्चय-१/४] इति सञ्ज्ञाकुलके प्रोक्तम् । आचाराङ्गटीकायां च --> ओघसञ्ज्ञा अव्यक्तोपयोगरूपा वल्लीवितानारोहणादिलिङ्गा एक-सन्तानकीटिकागमनरूपा वा लोकसञ्ज्ञा स्वच्छन्दघटितविकल्परूपा लौकिकाचरिता यथा- 'न सन्त्यनपत्यस्य परे लोकाः, श्वानो यक्षाः, विप्रा देवाः, काकाः पितामहाः, बर्हिणां पक्षवातेन गर्भः' इत्यादिका <-- इत्युक्तम् । आचाराङ्गनिर्युक्तौ तु--> आहार' भय' परिग्गह' मेहुण' सुह' दुक्ख' मोह' वितिगिन्छा' । तह कोह' माण'' माया'' लोहे'' लोगे'' य धम्मो'' हे' ॥३९॥ इति पञ्चदश सञ्ज्ञा दर्शिताः । क्वचिच्च प्रत्यन्तरे तत्र षोडशी शोकसञ्ज्ञाऽपि दृश्यते इति नानाशास्त्रसन्दर्भा ऊहनीयाः ।

अथ प्रकृतं प्रस्तूयते --> एतत्सम्प्रयुक्तमनुष्ठानं सुन्दरमप्यभ्युदयाय, नापवर्गावाप्तये परिशुद्ध्यभावात् । दशसञ्ज्ञाविष्कम्भण-योगे एव तन्निरोधोत्साहे वा = यथाशक्ति सञ्ज्ञानिरोधप्रगुणाध्यवसाये वा प्रकृतानुष्ठानं = निरस्तसदनुष्ठानं सम्पूर्णं भवति । तदुक्तं योगबीजशुद्ध्यधिकारे योगदृष्टिसमुच्चये --> उपादेयधियाऽत्यन्तं, सञ्ज्ञाविष्कम्भणान्वितम् । फलाभिसन्धिरहितं, संशुद्धं ह्येतदीदृशम् ॥२५॥ <-- इति ।

अतः = सञ्ज्ञाविष्कम्भणप्रयुक्ताऽवैकल्यशालिनः प्रकृतानुष्ठानस्य गम्भीरोदारपरिणामोपेतपरहितनिरतकर्तृकत्वात् इदं = गम्भीरोदारपरिणामशालि-परहितनिरतकर्तृकं निरस्तसदनुष्ठानं अविकलत्वात् विशिष्यते = विशिष्टं भवति । ततश्च गम्भीरोदारपरि-णामपरिणत-परहितनिरतकर्तृकं निरस्तसदनुष्ठानं सञ्ज्ञानिरोधेऽविकलं सम्पद्यत इति भावः । अर्थत इदमापद्यते यत् बाह्यदृष्ट्या निरतिचारमपि सदनुष्ठानं मोघं यदि दशविधसञ्ज्ञा-दरिद्रता-कृपणता-तुच्छतादिदोषाणामनिरुद्धप्रसरो विलासश्चेतसि समुज्जृम्भते, दरिद्रकुले कृपणकुले तुच्छकुले वा तीर्थङ्करजन्माऽसम्भववत्, --> स तु भवति दरिद्रो यस्य तृष्णा विशाला <-- [४९] इति

થાય છે, કારણ કે સદનુષ્ઠાનમાં ન્યૂનતા લાવનારી સંજ્ઞાઓનો નિરોધ થયેલ છે. સંપૂર્ણ સદનુષ્ઠાનનો સ્વામી પરહિતમાં મગ્ન હોય તથા હંમેશા ગંભીર અને ઉદાર આશયવાળો હોય. તેથી આ સદનુષ્ઠાન અવિકલત્વથી વિશિષ્ટ કરાય છે. [અર્થાત્ પરહિતરત અને સદા ગંભીર-ઉદાર ચિત્તવાળા જીવનું સદનુષ્ઠાન સંજ્ઞાનિરોધ થયે છતે સંપૂર્ણ થાય છે.] [૫/૧૦]

<u>વિશેષાર્થ</u> - [૧] આહારસંજ્ઞા, [૨] ભયસંજ્ઞા, [૩] મૈથુનસંજ્ઞા, [૪] પરિગ્રહસંજ્ઞા, [૫] ક્રોધસંજ્ઞા, [૬] માનસંજ્ઞા, [૭] માયાસંજ્ઞા, [૮] લોભસંજ્ઞા, [૯] ઓઘસંજ્ઞા, [૧૦] લોકસંજ્ઞા. આ રીતે ૧૦ સંજ્ઞાઓ છે. તે સદનુષ્ઠાનમાં ત્રુટિ લાવે છે. આ સંજ્ઞાઓ દૂર થવાથી જ સદનુષ્ઠાનની ન્યૂનતા દૂર થાય છે. જો ૧૦ સંજ્ઞાઓ ઉછાળા મારતી હોય, સ્વાર્થવૃત્તિ પોષાતી હોય, ક્ષુદ્રતા-તુચ્છતા-કૃપણતા ધામા નાખીને બેઠી હોય તો ખરેખર સમજી લેવાની જરૂર છે કે બાહ્યથી સંપૂર્ણ - નિરતિચાર જણાતું અનુષ્ઠાન પણ પાંગળું છે. માત્ર કાયક્લેશસ્વરૂપ છે. અનાદિકાળથી સંજ્ઞાઓ એવી અભ્યસ્ત થઈ ગઈ હોય છે કે વિના પ્રયત્ને તે સહેજે ઊઠી આવે છે. તેથી જો એનો નિગ્રહ કરવામાં ન આવે તો અનુષ્ઠાન વખતે પણ એમાંથી કોઈને કોઈ સંજ્ઞા ઉદયમાં આવીને ચિત્તવિક્ષેપ-મનોમાલિન્ય નીપજાવીને અનુષ્ઠાનને બગાડે, વિઘ્નમાં ચિત્તચંચળતા-વિહ્વળતા લાવે. માટે તેનો નિગ્રહ જરૂરી છે. લોકોત્તર અનુષ્ઠાનમાં અવિધિ, બેપરવાઈ, ખેદ-ઉદ્વેગ વગેરે દોષોને ખેંચી લાવનાર તુચ્છ સ્વાર્થવૃત્તિને તોડવા પરોપકારવૃત્તિ જરૂરી છે. ગંભીર ચિત્ત લોકોત્તર અનુષ્ઠાનની મહત્તાઓને પરમ તાત્ત્વિકતાથી સમજે છે, એના સહકારી કારણો પ્રત્યે ખાસ ધ્યાન રાખે છે. આથી અનુષ્ઠાન પ્રત્યે દોષદૃષ્ટિ કે તુચ્છતાભરેલ ઈર્ષ્યા ન રાખતા એનું ગૌરવ કરે છે. વિધિસ્ખલના કરનારને, એના હૈયાના તાર તૂટી ન જાય એનું ખાસ લક્ષ રાખી, કોમળતાથી મધુર માર્ગદર્શન આપે છે. તેમ જ અનુષ્ઠાન ન કરનારમાં લાગણીપૂર્વક સાનુબંધ સદનુષ્ઠાનનો વિનિયોગ કરે છે. આમ સદનુષ્ઠાન પરિપૂર્ણ બને છે. [૫/૧૦]

--> 'દશ પ્રકારની સંજ્ઞાનો પરિહાર પણ દુર્લભ છે. તે કેવી રીતે પ્રાપ્ત થાય ?' <-- આ પ્રશ્નના જવાબમાં શ્રીસૂરિજી જણાવે છે કે --

सर्वज्ञवचनमागमवचन यत्परिणते ततस्तस्मिन् । नाऽसुलभमिद सर्व ह्युभयमलपरिक्षयात् पुसाम् ॥५/११॥

**यत्** = यस्मात् **आगमवचन** = **सर्वज्ञवचन, तत** तस्मिन् **परिणते** विधि(रूपा)ऽध्यात्मयोगेन(द्वयात्मयोगेज ?) **उभयमलपरिक्षयात्** = क्रियामल-भावमलोच्छेदात् **पुसा** = पुरुषाणा **इद सर्व** दशसज्ञाविष्कम्भण **हि** = निश्चित **नासुलभ,** किन्तु सुलभमेव ॥५/११॥

अध्यारोपादविधिसेवा दानादावित्युक्तम् (५/६) । तदभावे यत्स्यात्तदाह –> '**विधिसेवे**'त्यादि ।

विधिसेवा दानादौ सूत्रानुगता तु सा नियोगेन । गुरुपारतन्त्र्ययोगादौचित्याच्चैव सर्वत्र ॥५/१२॥

कल्याणकन्दली

वैराग्यशतके भर्तृहरिवचनात् अनिरुद्धतृष्णालक्षणद्ररिद्रतोपेते 'मा हीयता सम्प्राप्तमि'ति कृपणतापरिकलिते लब्धाऽतुष्ट्यलब्धस्मृति-लक्षणतुच्छतायुक्ते वा चेतसि भगवदागमनाऽसम्भवेन महामोहसाम्राज्यस्याऽविचलितत्वादिति इति ध्येयम् ॥५/१०॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> यत् आगमवचन = सर्वज्ञवचन, तत तस्मिन् परिणते उभयमलपरिक्षयात् पुसा इद सर्व हि नाऽसुलभम् ॥५/११॥ इयञ्च कारिका अधिकारविंशिकावृत्तो श्रीसागरानन्दसूरिभिरुद्धृता ।

आगमवचन = सर्वज्ञवचन, सर्वज्ञोक्तत्वादागमानाम् । न च सर्वज्ञ एव मानाभाव इति वाच्यम्, 'दोषत्वमावरणत्वञ्च नि शेषक्षीयमाणवृत्ति देशत क्षीयमाणवृत्तिजातित्वात्, स्वर्णमलत्ववदि'त्यनुमानेन दोषावरणयोर्नि शेषहानौ ज्ञस्वभावत्वेनाऽऽत्मन सर्वज्ञत्वोपपत्ते । तदुक्त योगबिन्दौ –> ज्ञो ज्ञेये कथमज्ञ स्यादसति प्रतिबन्धके । दाह्येऽग्निर्दाहको न स्यात्, कथमप्रति-बन्धक. ?॥ सर्वत्र सर्वसामान्यज्ञानाज्ज्ञेयत्वसिद्धित. । तस्याऽखिलविशेषेपु तदेतन्न्यायसङ्गतम् ॥ <– [४३२/४३५] इति । ततश्च यो य सामान्यज्ञानविपयोऽर्थ स स कस्यचित्प्रत्यक्षो भवति यथा धूमादनुमीयमानोऽनल , सामान्यज्ञानविपयाश्च सर्वे भावा इति ते कस्यचित्प्रत्यक्षास्स्युरेव । स एव च भगवान् सर्वज्ञ । अधिक तु मत्कृत-जयलताया[1] ऽवसेयम् ।

विधिरूपाऽध्यात्मयोगेनेति । यद्यपि अध्यात्म उचितप्रवृत्तेर्व्रतभृतो मैत्र्यादिभावगर्भ शास्त्राज्जीवादितत्त्वचिन्तनम् । तदुक्त योगबिन्दौ –> औचित्याद् वृत्तयुक्तस्य, वचनात् तत्त्वचिन्तनम् । मैत्र्यादिसारमत्यन्तमध्यात्म तद्विदो विदु <– ॥३५८॥ इति । तथापि प्रकृते विधिरूप तदुपादेयम्, तत्कार्यकारित्वात् कारणे कार्योपचाराद्वा । न ह्यविधिरसिकस्य विधिनिरपेक्षस्य वाऽध्यात्मलाभ सम्भवति । क्रियामल-भावमलोच्छेदात् = अविधिसेवालक्षणक्रियामल-मिथ्यात्वोद्रेक-क्षुद्रता-दरिद्रता-कृपणतादि-लक्षणभावमलविनाशात् । 'द्वौ नञौ प्रकृतार्थ गमयत' इति न्यायेनाह - नाऽसुलभ किन्तु सुलभमेव इति ॥५/११॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> दानादौ सूत्रानुगता तु विधिसेवा । सा नियोगेन गुरुपारतन्त्र्ययोगात् सर्वत्रैव औचित्याच्च

**ગાથાર્થ** - જે કારણે આગમવચન = સર્વજ્ઞવચન છે તે કારણે તે પરિણત થાય ત્યારે બન્ને પ્રકારના મલનો નાશ થવાથી જીવોને આ બધુ ખરેખર દુર્લભ નથી [૫/૧૧]

## ❁ ... તો સંજ્ઞાનિયંત્રણ પણ સરળ છે. ❁

**ટીકાર્થ** - જે કારણે આગમવચન = સર્વજ્ઞવચન છે, તે કારણે આગમવચન પરિણત થયે છતે વિધિસ્વરૂપ અધ્યાત્મના લાભથી ક્રિયામલ અને ભાવમલનો ઉચ્છેદ થવાથી જીવોને દશ પ્રકારની સજ્ઞાઓનો પરિહાર-આ બધુ ખરેખર દુર્લભ નથી પણ સુલભ જ છે [૫/૧૧]

**વિશેષાર્થ** - આગમવચન એ અસર્વજ્ઞવચન નથી પરતુ સર્વજ્ઞવચન છે, જે ત્રિકાલ અબાધિત હોય છે નિજાત્માનુ જડથી અલિપ્ત, નિર્વિકાર શુદ્ધ-બુદ્ધ ચૈતન્યસ્વરૂપ વિચારવાથી તે પરિણત થાય તો વિધિસેવનસ્વરૂપ અધ્યાત્મ આવે જ તે અધ્યાત્મ ન આવે તો ધર્મક્રિયા પણ શરીરના મેલની જેમ તુચ્છ બની જાય ૧૨૫ ગાથાના સ્તવનમા ઉપાધ્યાય યશોવિજયજી મહારાજે જે કહેલુ છે કે –> અધ્યાત્મ વિણ જે ક્રિયા, તે તનુમલ તોલે । મમકારાદિક યોગથી એમ જ્ઞાની બોલે ॥ <– [૩/૧૨] માટે અધ્યાત્મ જરૂરી છે તથાવિધ અધ્યાત્મના લાભથી ક્રિયાનો અવિધિસ્વરૂપમલ નાશ પામે છે તેમ જ સર્વજ્ઞવચનને આગળ કરીને વિધિપાલન કરવાથી સર્વજ્ઞ પ્રત્યેના બહુમાન દ્વારા મિથ્યાત્વનો ક્ષયોપશમ થવાથી પોતાના ક્ષુદ્રતા, તુચ્છતા વગેરે ભાવમલનો પણ ક્ષય થાય છે પ્રતિબધક દૂર થવાથી દશવિધ સજ્ઞાઓ ઉપર નિયન્ત્રણ સરળ બને છે તેના દ્વારા સદનુષ્ઠાન સપૂર્ણ બને છે તથા જીવ શિવમાર્ગે પુરપાટ આગળ વધે છે આ બધાના મૂળમા છે જિનવચનની પરિણતિ [૫/૧૧]

'અધ્યારોપના કારણે દાનાદિમા અવિધિનુ સેવન થાય છે' એમ પૂર્વે [જુઓ શ્લોક-૬] કહી ગયા તે અધ્યારોપનો અભાવ હોતે છતે જે થાય તેને બતાવતા મૂલકારશ્રી કહે છે કે —

૧ જુઓ દિવ્યદર્શનટ્રસ્ટપ્રકાશિત મધ્યમ-સ્યાદ્વાદરહસ્ય - ખડ-૨, કારિકા-૭ જયલતા ટીકા પૃ ૪૫૩

**विधिसेवा** = सर्वाङ्गपरिशुद्धप्रवृत्ति **दानादौ सूत्रानुगता तु** = अभ्रान्तसूत्रज्ञानानुसारिण्येव स्यात् । **सा** = विधिसेवा **नियोगेन** = नियमेन गुरुपारतन्त्र्यस्य योगात् भवेत्, न तु यादृच्छिकज्ञानमात्रात्, **औचित्याच्चैव** = अनौचित्यपरिहारेण च **सर्वत्र** दीनादौ ॥७/१२॥

दानादिविधिसेवाया महादान-दानयोर्विशेषमाह --> 'न्यायात्तमि'त्यादि ।

कल्याणकन्दली

॥७/१२॥ इयञ्च कारिका अधिकारविंशिकावृत्तौ श्रीसागरानन्दसूरिभिरुद्धृता । सर्वाङ्गपरिशुद्धप्रवृत्तिः = सर्वबाह्याभ्यन्तरहेतु-स्वरूपानुबन्धविशुद्धप्रवृत्ति । अनेन शास्त्रयोगसूचनमकारि । तदुक्तं योगदृष्टिसमुच्चये --> शास्त्रयोगस्त्विह ज्ञेयो यथाशक्त्यप्रमादिनः । श्राद्धस्य तीव्रबोधेन वचसाऽविकलस्तथा ॥४॥ <-- इति । अभ्रान्तसूत्रज्ञानानुसारिण्येव । सूत्रञ्चार्थोपलक्षणम् । इत्थमेव तस्या अनुबन्धसारत्वोपपत्तेः । तदुक्तं जीवोपदेशपञ्चाशिकायां --> जंगुत्तरे सम्मपहे पवन्ने भंजिज्ज सुत्तुत्तविहिप्पहाणो । मोहवयाराउ जियम्मि लोए न सत्थदीवादपरो पयासो ॥३६॥ जिणाणमाणाणुगमेण हीणो धम्मो न धम्मत्तणमावहेइ <-- इति । नियमेन गुरुपारतन्त्र्यस्य योगादिति । सानुबन्धपवित्रप्रेक्षा-कल्याणमित्र-विशिष्टवीर्योल्लासाऽनुकूल-बाह्यद्रव्य-काल-क्षेत्राद्याक्षेपकत्वात् गुरुपारतन्त्र्यस्य । इदमेवाभिप्रेत्य योगदृष्टिसमुच्चयस्वोपज्ञवृत्तौ --> अनुबन्धस्य गुरुभक्तिसाध्यत्वादिति <-- [गा ६३ वृ] प्रोक्तम् । तदुक्तं सामान्यगुणोपदेशकुलके --> कल्लाणमत्तसमेक्कं गुणपालणपरमोसच्चयहेऊ । गिरिगुरुय्यगुण सुगुरु निच्चं ता पज्जुवासिज्जा ॥२१॥ <-- इति । अत एव त्रिषष्टिशलाकापुरुषचरित्रे --> गुर्वाज्ञाकरणं सर्वगुणेभ्यो हातिरिच्यते <-- [१/१/१०४] इत्युक्तम् । न च जिनकल्पप्रवृत्त्यादौ व्यभिचारः, तदानीं गुरुपारतन्त्र्यविरहादिति शङ्कनीयम्, गुर्वाज्ञयैव जिनकल्पकक्षीकारेण तत्रापि गुरुपारतन्त्र्याऽनपायात्, त्रिलोकगुर्वाज्ञयैव प्रवर्तनाच्च । एतेन गुरुविरहदशायामागमानुसारेण सम्पन्ने दानादिविधावपि व्यभिचारशङ्का परास्ता ।

व्यवच्छेदमाह - न तु यादृच्छिकज्ञानमात्रात् । एतेन --> गुरुपारतन्त्र्यविनिर्मुक्तानां स्वमतिकल्पनया उग्रविहारिणामपि विधिसेवाबहिर्भावो विद्योतितः, मोहपारतन्त्र्याऽनपायात् । तदुक्तं पञ्चाशके --> पाय अहिण्णगठीतमाउ तह दुक्करंपि कुव्वंता । वज्झा व ण ते साहू धंखाहरणेण विण्णेया ॥ <-- [११/३८] इति ।

अनौचित्यपरिहारेण च सर्वत्र दीनादौ इति । अपुनर्बन्धकादारभ्य केवलिपर्यन्तमौचित्यस्य विशुद्ध-विशुद्धतरत्वादिनाऽनुवर्तनात् । ततश्च तदाऽऽनुगुण्येनैवाऽनुबन्धसारत्वं विधिपरिकलितदानादेरस्यात्, नान्यथा । तदुक्तं योगबिन्दौ --> अस्यौचित्यानुसारित्वात्, प्रवृत्तिर्नासती भवेत् । सत्प्रवृत्तिश्च नियमात्, ध्रुवः कर्मक्षयो यतः ॥३४०॥ औचित्यं भावतो यत्र तत्रायं सम्प्रवर्तते । उपदेशं विनाऽप्युच्चैरन्तस्तेनैव चोदितः ॥३४४॥ <-- इति । औचित्यस्यैव गुणेष्वग्रेसरत्वम् । तदुक्तं योगसारे --> औचित्यं ये विजानन्ति सर्वकार्येषु सिद्धिदम् । सर्वप्रियङ्करा ये च ते नरा विरला जने ॥१६७॥ औचित्यं परमो बन्धुरौचित्यं परम

<u>ગાથાર્થ</u> - દાનાદિને વિશે સૂત્રાનુસાર જ વિધિસેવા થાય. તે વિધિપાલન નિયમા ગુરુપારતન્ત્ર્યના યોગથી અને બધા જ સ્થાને ઔચિત્યસેવનથી થાય. [૫/૧૨]

## વિધિપાલનના બે કારણને ધ્યાનથી પીછાણીએ

<u>ટીકાર્થ</u> - [અધ્યારોપના અભાવમાં] દાનાદિને વિશે સર્વાંગપરિશુદ્ધ પ્રવૃત્તિરૂપી વિધિપાલન સૂત્રના અભ્રાન્ત જ્ઞાન અનુસાર જ થાય. તે વિધિપાલન નિયમા ગુરુપરતન્ત્રતાના યોગથી જ થાય, સ્વચ્છન્દજ્ઞાનમાત્રથી નહિ. તેમ જ ગરીબ વગેરે સર્વને વિશે અનૌચિત્યના પરિહારથી જ થાય. [૫/૧૨]

<u>વિશેષાર્થ</u> - અહીં બે વાત ખ્યાલમાં રાખવા જેવી છે. પ્રથમ એ કે આગમને વિશે અપ્રામાણ્યના ભ્રમસ્વરૂપ અધ્યારોપ ન હોય તો દાનાદિને વિશે હેતુ-સ્વરૂપ-અનુબંધથી વિશુદ્ધ વિધિપાલન થાય અને તે પણ આગમના સમ્યક્જ્ઞાન મુજબ જ. તેનું મુખ્ય કારણ ગુરુપારતન્ત્ર્ય છે. ગુરુપારતન્ત્ર્યના યોગથી તેવા પ્રકારની વિશેષ સમજણ, વિશિષ્ટ ભાવોલ્લાસ, વીર્યાંતરાયક્ષયોપશમ, અનુકૂળ સંયોગ, પ્રેરક વાતાવરણ, સુયોગ્ય કાળ, પવિત્ર ક્ષેત્ર વગેરે આવી મળે છે. માટે ગુરુપારતન્ત્ર્યથી જ વિશુદ્ધ વિધિપાલન શક્ય બને. ગુરુપરતન્ત્રતાને છોડી સ્વતંત્ર રીતે શાસ્ત્રને પોપટપાઠની જેમ બોલી જવા માત્રથી કે સ્વયં વાંચી લેવાથી કે પોથીપંડિત થઈ જવાથી વિશુદ્ધ વિધિપાલન ન આવે. કદાચ બાહ્ય રીતે સંપૂર્ણ વિધિપાલન દેખાય છતાં ક્રિયામાં જે પ્રાણ પૂરાવા જોઈએ તે તાત્ત્વિક ગુરુપારતન્ત્ર્ય વિના ન જ સંભવે. મડદાના સોનેરી-રૂપેરી શણગારનું મહત્ત્વ શું ? માટે સાનુબંધ વિશુદ્ધ આરાધના માટે ગુરુપારતન્ત્ર્ય અતિઆવશ્યક છે. તેમ જ બીજી વાત એ છે કે ગરીબ, ભિખારી, અપંગ, અંધ, અસમર્થ, અનિરોગી વગેરેને વિશે ધિક્કાર વગેરે અનુચિત વ્યવહાર શુભાનુબંધ તોડે છે. માટે તેનો પરિહાર પણ સાનુબંધ વિધિવિશુદ્ધ આરાધનામાં જરૂરી છે. પ્રતિબંધકની હાજરીમાં કાર્યનિષ્પત્તિ થઈ ન શકે. અનુચિત વ્યવહાર ન છોડે અને કદાચ બાહ્ય દૃષ્ટિએ પૂર્ણ વિધિપાલન કરે તો તે 'આંધળી દળે અને કૂતરો લોટ ચાટી જાય' તેના જેવું થાય. આ બન્ને મુદ્દા ઉપર ગંભીરતાથી ધ્યાન આપવાની આવશ્યકતા છે. [૫/૧૨]

દાનાદિવિધિસેવનના વિશે મહાદાન અને દાનની વિશેષતા બતાવતા મૂલકારશ્રી કહે છે કે —

**न्यायात्त स्वल्पमपि हि भृत्यानुपरोधतो महादानम् । दीन-तपस्व्यादौ गुर्वनुज्ञया दानमन्यत्तु ॥५/१३॥**

न्यायेन = ब्राह्मण-क्षत्रिय-विट्शुद्राणा स्वजातिविहितव्यापारेण आत्त = स्वीकृत **स्वल्पमपि हि दीनतपस्व्यादौ** विषये गुरूणा = पित्रादिकुलवृद्धाना अनुज्ञया भृत्यानुपरोधेन = पोष्यवर्गाऽविघातेन, भृत्यपदमितरपोष्योपलक्षण,

कल्याणकन्दली

सुखम् । धर्मादिमूलमौचित्यमौचित्य जनमान्यता ॥१६८॥ <— इति । अत एव न कुत्राऽप्यनुकम्पाया निषेध । पार्श्वस्थादीना-मवन्दनीयत्वेऽप्यनुकम्प्यत्वानति-क्रमादिति भावनीयम् ॥५/१२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> दीनतपस्व्यादौ गुर्वनुज्ञया भृत्यानुपरोधतो न्यायात्त हि स्वल्पमपि महादानम् । अन्यत्तु दानम् ॥५/१३॥ इय कारिका **पञ्चाशकवृत्तौ** [२/२३] **अधिकारविंशिकावृत्तौ** च समृद्धृता ।

**न्यायेन = ब्राह्मण-क्षत्रिय-विट्-शुद्राणा स्वजातिविहितव्यापारेणेति** । ''यावन्नाभेयो भगवान् नाद्यापि राज्यलक्ष्मीमध्यास्ते तावदेकैव मनुष्यजाति. । तस्यैव राज्योत्पत्तौ भगवन्तमेवाश्रित्य ये स्थितास्ते क्षत्रिया शेपाश्च शोचनाद्रोदनाच्च शूद्रा । पुनर-ग्न्युत्पत्तावयस्कारादिशिल्पवाणिज्यवृत्त्या वेशनाद् वैश्याः । भगवतो ज्ञानोत्पत्तौ भरतकाकिणीलाञ्छनात् श्रावका एव ब्राह्मणा जज्ञिरे । एते शुद्राः'' [१/१/१/पृ.७] इति **आचाराङ्गवृत्तिकारः** प्राधान्यापेक्षया 'ब्राह्मण-क्षत्रिय-वैश्य-क्षुद्रा' इति क्रमो बोध्य. । यथाक्रम 'शास्त्राध्यापन-देवपूजादि-'दुष्टनिवारण-स्त्रीशीलरक्षण-शत्रुभयत्राणादि-'कृपिक्रयविक्रयादि-'परसेवा-पञ्चशील्प-कर्मादिना स्वामिद्रोहादिशून्येन व्यापारेणेत्यर्थ । 'न्यायेन = शुद्धमानतुलोचितकलाव्यवहारादिरूपेण' [ध बि.१/३ वृ ] इति **धर्मबिन्दुवृत्तिकारः** । शुद्धव्यवहारो न्याय इति भाव । **स्वीकृत** = उपार्जितम् । वित्तमिति गम्यते । तादृशस्यैवोभयलोकहितावह-त्वात् । तदुक्त **धर्मबिन्दौ** —> न्यायोपात्त हि वित्तमुभयलोकहितायेति <— [१/४] । **स्वल्पमपि** कि पुन सुबहु इत्यपिशब्दार्थ । अमृत हि स्तोकमपि महते हिताय, न तु सुबह्वपि जलम् विप वा । तदुक्त **श्रावकधर्मविधौ** —> उचिय सेवइ वित्ति सा पुण नियकुलकमागया सुद्धा । माहण-खत्तिय-वइसाण सुद्ध-सुद्धाण निय-नियगा <—॥७॥ इति । —> ''स्वान्वयपरिपाट्या आगता = प्राप्ता शुद्धा = तथाविधदोपरहिता । अनेन कुलक्रमागतामपि तथाविधाशुद्धा योनिपोपणादिका वृत्तिमनुचितामाह । शुद्धविशेषण शुद्राणा तथाविधधीवरादिव्यवच्छेदार्थम्'' <— इति तद्वृत्तिकार । ब्राह्मणादिविहितव्यापारस्तु —> शमो दमस्तप शौच क्षान्तिरार्जवमेव च । ज्ञान विज्ञानमास्तिक्य ब्रह्मकर्म स्वभावजम् ॥ शौर्य तेजो धृतिर्दाक्ष्य युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्र कर्म स्वभावजम् ॥ कृपि-गौरक्ष्य-वाणिज्य वैश्यकर्म स्वभावजम् । परिचर्यात्मक कर्म शूद्रस्यापि स्वभा-वजम् ॥[ ] <— इत्येव बोध्य. । —> अध्यापनमध्ययन यजन याजन तथा । दान प्रतिग्रह चैव ब्राह्मणानामकल्पयत् ॥ <— [१/८८-८९-९०-९१] इत्यादिना **मनुस्मृतौ** अपि चतुर्वर्णव्यापारोभिहित. ।

**दीन-तपस्व्यादौ** । आदिपद प्रत्येकमभिसम्बध्यते । ततश्च दीनपदेन तदुत्तरादिपदेन वाऽनुकम्पनीयानामन्धानाथ-याचक-व्याधिग्रस्त-क्रियान्तराशक्तादीना ग्रहणम् । तपस्विपदोत्तरादिपदेन सुपात्राणा धर्माचार्य-साधुप्रभृतीनामुपग्रह । तदुक्त **योगबिन्दौ** —> व्रतस्था लिङ्गिन पात्रमपचास्तु विशेपत । स्वसिद्धान्ताविरोधेन वर्तन्ते ये सदैव हि ॥१२२॥ <—

**पित्रादिकुलवृद्धानामिति** । आदिपदेन मातृ-गौरव्यज्ञातिजनग्रहणम्, तेपा गुरुत्वेन प्रसिद्धत्वात् । तदुक्त **अध्यात्मतत्त्वालोके न्यायविजयेन** —> पिता च माता च कलागुरुश्च तज्ज्ञातयो ज्ञानविवेकवृद्धा । धर्मप्रकाशप्रवणाश्च सन्त सता मत श्रीगुरुवर्ग एप ॥ <— [२/३] इति । **भृत्यानुपरोधेनेति** । —> भृत्या = भरणीया भार्या-पुत्रादय <— [९/२१६] इति **मिताक्षराख्याया याज्ञवल्क्यस्मृतिवृत्तौ विज्ञानेश्वर.** । **पोष्यवर्गाऽविघातेनेति** । तद्विघातस्य वर्जनीयत्वात्, अन्यथा परपीडया लोकोत्तरतत्त्वहाने , तदुक्त **योगदृष्टिसमुच्चये** —> परपीडेह सूक्ष्मापि वर्जनीया प्रयत्नत <— [१५०] इति । **भृत्यपदमितरपोष्योपलक्षणमिति** । शिशु-भार्याप्रमुखज्ञापकम्, यत —> 'वृद्धौ मातापितरौ साध्वी भार्या लघूनि च शिशूनि । अप्युपायशत कृत्वा पोष्याणि मनुरब्रवीत् ॥ <— इति । तथा —> चत्वारि ते तातगृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे । 'सखा दरिद्रो भगिनी' व्यपत्या

<u>**ગાથાર્થ**</u> - ગરીબ, તપસ્વી વગેરેને ગુરુની અનુજ્ઞાથી, પોષ્યવર્ગને બાધા ન આવે તે રીતે ન્યાયોપાર્જિત ખરેખર અલ્પ પણ આપવામા આવે તે મહાદાન છે બાકીનુ દાન જાણવુ [૫/૧૩]

## ॥ મહાદાન અને દાનની ભેદરેખા પારખીએ ॥

<u>**ટીકાર્થ**</u> - બ્રાહ્મણ, ક્ષત્રિય, વૈશ્ય, શુદ્ર જાતિના લોકો પોતાની જાતિમા વિહિત = પૂર્વપુરુષોને માન્ય એવા વેપારથી જે કાઈ ધન વગેરે મેળવે તે ન્યાયોપાર્જિત કહેવાય તેવુ દ્રવ્ય અત્યત થોડુ પણ ગરીબ, તપસ્વી વગેરે વિષે પોતાના પિતા, પિતામહ વગેરે કુલવૃદ્ધ પુરુષોની સમતિથી તેમ જ પોતાના પોષ્યવર્ગ નોકર આદિને પીડા ન પહોચે તે રીતે આપવુ તે મહાદાન જાણવુ મૂળ શ્લોકમા ભૃત્યપદ છે તેનો અર્થ નોકર થાય છે પરતુ તે શબ્દ નોકર સિવાયના પોષ્યવર્ગનુ ઉપલક્ષણ છે [અર્થાત્ ભૃત્યશબ્દથી

यद्दान तत् महादानम् । अन्यत्तु = एतद्विविशेषणरहित पुन दान एव ॥५/१३॥

कल्याणकन्दली

'ज्ञातिश्च वृद्धो विधन 'कुलीन ॥ <— इति । पोष्यापोषकत्वे तु गृहिणा न परिजनो न धर्मार्हताऽपि । इदञ्च व्यवहारतोऽवगन्तव्यम् । निश्चयत देव-गुरु-स्वात्मान त्रय एव पोष्या । परमनिश्चयेन च स्वात्मैव पोष्य इत्यादिक श्राद्धगुणविवरणादित [पृ ८७] ज्ञेयम् ।

महादानप्रतिपादनञ्च योगविन्दो —> पात्रे दीनादिवर्गे च दान विधिवदिष्यते । पोष्यवर्गाऽविरोधेन, न विरुद्ध स्वतश्च यत् ॥१२३॥ <— इति । दानस्थले विधिश्च —> दत्त यदुपकाराय, द्वयोरप्युपजायते । नातुरापथ्यतुल्य तु तदेतद्विधिवन्मतम् ॥१२४॥ <— इत्येव योगविन्दौ प्रदर्शित । कार्त्तिकेयानुप्रेक्षावृत्तो शुभचन्द्रेण तु —> [१] श्रद्धा, [२] तुष्टि , [३] भक्ति , [४] विज्ञानम्, [५] अलुब्धता, [६] क्षमा, [७] शक्ति <— [गा.६३१] इत्येव दानगुणा दर्शिता । प्रकारान्तरेण तु —> 'श्रद्धा ²भक्तिरलोलत्व³ दया' शक्ति ' क्षमा' परा । विज्ञान चेति सप्तैते गुणा दातु प्रकीर्त्तिता ॥ <— [ ] इत्यपि बोध्यम् । —> आनन्दाश्रूणि रोमाञ्चो बहुमान प्रिय वच । किञ्चानुमोदन पात्रे दानभूषणपञ्चकम् ॥<— [ ] इति दानभूषणानि । —> 'अनादरो विलम्बश्च तिरस्कारोऽभिमानता । पश्चात्तापश्च पञ्चापि सद्दान दूषयन्त्यमी ॥ <— इति दानदूषणानि । न च किमित्यादौ दानस्य प्रदर्शनमकारि लोकोत्तरतत्त्वनिरूपणे इति शङ्कनीयम्, तस्यैव धर्माऽऽदिपदत्वात् । तदुक्त योगविन्दो —> धर्मस्यादिपद दान, दान दारिद्र्यनाशनम् । जनप्रियकर दान, दान कीर्त्त्यादिवर्धनम् ॥१२५॥ <— इति । दर्शनकुलकेऽपि —> दाण सोहग्गकर दाण आरुग्गकारण परम । दाण भोगनिहाण दाण ठाण गुणगणाण ॥३॥ <—इत्येव दानमाहात्म्यमुक्तम् । चाणक्यसूत्रेऽपि —> दान धर्म <— [१५५] इत्युक्तम् । महादान = लोकोत्तरदानमित्यर्थ· । उपलक्षणादाशसाराहित्यादिकमपि बोध्य, यथोक्त पुष्पमालाया —> आससाइविरहिओ सद्धारोमचकचुइज्जतो । कम्मक्खयहेउ चिय दिज्जा दाण सुपत्तेसु ॥४६॥ <— इति । इदमेव परँ सात्त्विकादिदानमुच्यते, यथोक्त महाभारते —> दातव्यमिति यद्दान दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दान सात्त्विक स्मृतम् ॥ <— [भीष्मपर्व ४१/२०] इति । स्कन्दपुराणे च—> पात्रेभ्यो दीयते नित्यमनवेक्ष्य प्रयोजनम् । केवल धर्मबुद्ध्या यत्, धर्मदान तदुच्यते ॥ <— [माहेश्वरखण्ड-कौमा ४/५६] इत्येवमुक्तम् ।

वस्तुतस्त्वभयदानमेव महादानम्, तदुक्त सूत्रकृताङ्गे —> दाणाण सेट्ठ अभयप्पयाण <— [१/६/२३]।प्रश्नव्याकरणेऽपि —> दाणाण चेव अभयदाण <—[२/४] इत्युक्तम् । पद्मपुराणेऽपि —> सर्वेषामेव दानानामिदमेवैकमुत्तमम् । अभय सर्वभूताना नास्ति दानमत परम् ॥ <— [५/१८/४३८] इत्युक्तम् । धर्मरत्नकरण्डकेऽपि —> सर्वजीवाभय भावाद्दत्त येन दयालुना यद्दातव्य तकत्सर्व दत्त तेन महात्मना ॥२२९॥ <— इत्युक्तम् । —> सर्वेषु दानेष्वभयप्रदानम् <— [हितोपदेश-पृ १२४] इत्यप्यत्रानुस्मर्तव्यम् । अन्यत्रापि —> गोभूमि-सुवन्न-हिरन्नमाइदाण दिति बहुया वि । जे दिति अभयदाण ते वीरला जीवलोगम्मि ॥ <— [ ] इत्युक्तम् । मूलकारैरपि समरादित्यकथाया —> अभयदाणोवट्ठम्भदाणाण ओवओ कि पहाणयर ति । भगवया भणित - सोम ! सुण, अभयदाण <— [भव ९पृ ९८६] इत्युपदर्शितम् ।

एतद्विशेषणरहितमिति । अन्यायार्जित पोष्यवर्गोपरोधेन गुर्वसम्मत्या अनुकम्पा-सुपात्रव्यतिरिक्तविषयेऽविधिना आतुरापथ्यतुल्य वा यद् दीयते तत् पुन दानमेव, लौकिकानुष्ठान, न तु लोकोत्तरमिति भाव । तदुक्त —> दत्त स्वल्पोऽपि भद्राय स्यादर्थो न्यायसङ्गत । अन्यायात्त पुनर्दत्त पुष्कलोऽपि फलोज्झित ॥ <— [श्राद्धगुणविवरण-पृ ४] इति । यदपि महाभारते —> यत्तु प्रत्युपकारार्थ फलमुद्दिश्य वा पुन । दीयते च परिक्लिष्ट तद्दान राजस स्मृतम् ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञात तत्तामसमुदाहतम् ॥ <— [भीष्मपर्व ४१/२०-२१] इत्युक्त तदपि लौकिक विज्ञेयम् ॥५/१३॥

नोकर, पोताना नाना भाई-बहेन, मतान वगेरे पोष्यवर्गने समजी लेवानो ] अहीं बतावेल विशेषणथी रहित जे अपाय ते मात्र दान जाणवु [५/१३]

**विशेषार्थ** - आर्यावर्तना शिष्ट पुरुषोए पूर्व काळमा ब्राह्मण, क्षत्रिय, वैश्य [= वेपारी] अने शुद्र [हरिजन वगेरे BC] आम चार जातिमा मानवोने वहेंची दीधा हता तेम ज तेमनी आजीविकाना साधनो पण नक्की करेला जेम के ब्राह्मण भिक्षाथी गुजरान करे, क्षत्रियो युद्ध, सरक्षण वगेरे द्वारा जीवननिर्वाह करे, वैश्यो वेपारधंधा-वहाणवटा द्वारा धाराधोरणमुजब आजीविका मेळवे, शुद्र लोको कारीगीरी द्वारा रोजीरोटी मेळवे वणकर, लुहार, सुथार, घांची, मोची, हजाम वगेरे कारीगरवर्ग शुद्रविभागमा आवे हाथवणाट, लुहारी, सुथारी वगेरे उद्योग होवाथी तेमने उद्योगपति पण कहेवाय वैश्य = वेपारीवर्ग कापड बनावे नहि पण वणकरे [= हरिजने] बनावेल कापडने वेचे नवो माल बनाववानो महाआरभ वेपारी ना करे टूकमा माल बनाववानु काम उद्योगपति = कारीगरवर्ग = शुद्रलोको करे माल वेचवानु काम वेपारीवर्ग = वैश्य लोको करे पूर्वपुरुषोनी आ मर्यादा द्वारा जे कोई द्रव्य यथोचित रीते मळे ते न्यायोपार्जित द्रव्य कहेवाय आनो मतलब ए थयो के क्षत्रिय वेपार करीने जे द्रव्य मेळवे अथवा वेपारी लोको राजमान्य धाराधोरणनु उल्लघन करीने जे द्रव्य मेळवे ते अन्यायोपार्जित कहेवाय आ रीते अर्थव्यवस्था

देवार्चनेऽप्येनमतिदेशमाह --> 'देवे'त्यादि ।

देवगुणपरिज्ञानात् तद्भावानुगतमुत्तमं विधिना । स्यादादरादियुक्तं यत्तद्देवार्चनं चेष्टम् ॥५/१४॥

देवगुणानां वीतरागत्वादीनां परिज्ञानात् तेषु गुणेषु यो भावः = बहुमानः तेन अनुगतं = युक्तं, **उत्तमं** = प्रधानं **विधिना** = शास्त्रोपदेशेन **यत्** आदरादिना युक्तं **स्यात्**, आदिना करणप्रीत्यविघ्नसम्पदागमादिसङ्ग्रहः । **तद्देवार्चनं चेष्टम्** । अन्यत्तु देवार्चनमात्रम् ॥५/१४॥ अन्यत्राऽप्येनमतिदेशमाह --> **'एवमि'**त्यादि ।

कल्याणकन्दली

देवार्चनेऽपि एनं = लौकिक-लोकोत्तरभेदभिन्नं **अतिदेशमाह** । एकत्र श्रुतस्यान्यत्राभिसम्बन्धोऽतिदेशः । स चातिदेशः षोढा --> [१] शास्त्रातिदेशः, [२] कार्यातिदेशः, [३] निमित्तातिदेशः, [४] व्यपदेशातिदेशः., [५] तादात्म्यातिदेशः., [६] रूपातिदेशश्चेति व्यक्तं **शब्दकौस्तुभे** ।

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> देवगुणपरिज्ञानात् तद्भावानुगतं आदरादियुक्तं विधिना यत् उत्तमं स्यात् तद्देवार्चनं चेष्टम् ॥५/१४॥ इयञ्च कारिका **प्रतिमाशतकवृत्त्यादौ** [प्र.श का ६६ पृ.३६४] समुद्धृता । तत्र च 'देवगुणप्रणिधानादि'ति पाठः । वीतरागत्वादीनामिति । आदिपदेन समन्तभद्रत्वादिग्रहणम् । **परिज्ञानात्** = यथावस्थितनिश्चयात् । अनेनाऽऽभोगद्रव्यस्तवत्वमस्याऽऽविष्कृतम् । तदुक्तं **सम्बोधप्रकरणे** --> देवगुणपरिन्नाणा तब्भावाणुगयमुत्तमं विहिणा । आयरसारं जिणपूयणेण आभोगदव्वत्थओ ॥२०३॥ <-- इति । **करणप्रीत्यविघ्नसम्पदागमादिसङ्ग्रहः** इति । आदिपदात् जिज्ञासादिग्रहणम् । इत्थमेव सदनुष्ठानलक्षणसाम्राज्यात् । तदुक्तं मूलकारैरेव **योगदृष्टिसमुच्चये ललितविस्तरायाञ्च** परमतानुवादेन --> आदरः करणे प्रीतिरविघ्नः सम्पदागमः । जिज्ञासा तन्निसेवा च सदनुष्ठानलक्षणम् ॥ <-- [यो १२३] इति । **तत् देवार्चनञ्च इष्टम् अन्यत्तु** = देवगुणपरिज्ञानाऽप्रयुक्तं तद्बहुमानापेतं विधिविकलमादरादिरहितं वा **देवार्चनमात्रं**, अनुबन्धाऽसाधकत्वात् । --> 'इत्थञ्च प्रणिधानेनैव महापूजा, अन्यथा तु पूजामात्रमिति शास्त्रगर्भार्थः' [प्र श. पृ ३६४] इति व्यक्तं **प्रतिमाशतकवृत्तौ** । पूजामात्रमिति अनाभोगद्रव्यस्तवः । तदुक्तं **सम्बोधप्रकरणे** --> पूयाविहिविरहाओ अपरिन्नाणाओ जिणगयगुणाणं । सुहपरिणामकयत्ताण्णसोऽणाभोगदव्वत्थओ ॥२०५॥ <-- इति ॥५/१४॥

જળવાવાથી બેકારી જેવો પ્રશ્ન પૂર્વકાળમા ક્યારેય નહતો આજે તેનાથી ઊલટુ થવાથી બેકારી વગેરે સમસ્યાઓ સર્જાઇ છે દા.ત કાપડની મિલોએ વણકરોને બેકાર બનાવ્યા બુટ-ચપ્પલ-સેન્ડલ વગેરે બનાવનાર Bata કપનીએ મોચીઓને ખલાસ કર્યા પ્રાચીન ભારતની પશુપ્રધાન-કૃષિપ્રધાન અર્થવ્યવસ્થાની સસ્કૃતિને તોડી યન્ત્રપ્રધાન પશ્ચિમી અર્થવ્યવસ્થા આવવાથી બેકારી, મોંઘવારી વગેરે અનેક સળગતી સમસ્યાઓ સર્જાઇ છે દા.ત હિરાના વેપારમા લેઝરમશિન આવવાથી હિરા ઘસનારા લાખો લોકો બેકાર થઇ ગયા ઋષિપ્રધાન અને કૃષિપ્રધાન ભારતીય સસ્કૃતિ-મર્યાદાનો ભગ કરી શોષણખોરી વગેરે અનેક પ્રદૂષણોને પ્રગટાવનાર યન્ત્રવાદગર્ભિત પશ્ચિમી સસ્કૃતિ અનુસાર ઔદ્યોગીકરણ દ્વારા હાલ વેપારીવર્ગ ધન મેળવે છે તે ટીકાકાર મહોપાધ્યાયજીના મતમુજબ અન્યાયોપાર્જિત કહેવાય તેનુ અર્પણ કરવુ તે મહાદાન નહિ પણ દાન કહેવાય ન્યાયોપાર્જિત દ્રવ્યનુ દાન જ મહાદાન બની શકે તે દ્રવ્ય પણ પોતાના સતાન કે સગાવહાલાને નહિ પણ ગરીબ વગેરે અનુકપાપાત્રમા અને તપસ્વી, ધર્મગુરુ વગેરે ભક્તિપાત્રમા આપવામા આવે તો જ તે મહાદાન બની શકે તેમ જ તે અર્પણ પણ પોતાના પિતા, દાદા વગેરે કુલવૃદ્ધ, જ્ઞાતિવૃદ્ધ વગેરેની સમતિથી અપાય તો જ તે મહાદાન બની શકે વળી, દ્રવ્યસમર્પણ એટલી હદ સુધી ન થવુ જોઈએ કે પોતાના સતાન, પત્ની વગેરે કુટુબીજન અને પોતાના નોકર, ચોકિદાર વગેરેને સ્વજીવનનિર્વાહ માટે બીજા પાસે ભીખ માગવી પડે આમ આ ચાર શરતનુ પાલન થાય તો જ તે મહાદાન બને તેનો ભગ થાય તો તે માત્ર દાન કહેવાય [૫/૧૩]

દેવની પૂજામા પણ આ અતિદેશને મૂલકારશ્રી જણાવે છે અતિદેશનો અર્થ છે એક સ્થાને કહેવાયેલ કે સભળાયેલ પદાર્થનો અન્યત્ર સબધ = સાકળ જોડવી

<u>ગાથાર્થ</u> - ભગવાનના ગુણોને જાણીને તેના વિશે બહુમાનગર્ભિત આદરાદિથી યુક્ત એવુ વિધિપૂર્વક જે થાય તે ઈષ્ટ દેવપૂજન થાય [૫/૧૪]

### .... તો ઈષ્ટ દેવાર્ચન કહેવાય

<u>ટીકાર્થ</u> - ભગવાનના વીતરાગતા વગેરે ગુણોના વ્યવસ્થિત જ્ઞાનથી તે ગુણોના વિશે બહુમાનથી યુક્ત, પ્રધાન, શાસ્ત્રોપદેશાનુસારે જે આદરાદિથી યુક્ત હોય તે દેવાર્ચન ઈષ્ટ દેવાર્ચન થાય મૂળ ગાથામા 'आदरादियुक्त' મા જે આદિપદ છે તેનાથી તે દેવાર્ચન કરતી વખતે પ્રીતિ હોય, નિર્વિઘ્ન રીતે દેવાર્ચન થાય, દેવાર્ચન કરતા સપત્તિ મળે-આ બધુ પણ સમજી લેવાનુ તો તે ઈષ્ટ દેવાર્ચન બને એ સિવાયનુ દેવાર્ચન માત્ર બને [૫/૧૪]

एवं गुरुसेवादि च काले सद्योगविघ्नवर्जनया । इत्यादिकृत्यकरणं लोकोत्तरतत्त्वसम्प्राप्तिः ॥५/१५॥

एवं = विधिनैव [1]गुरूणां धर्माचार्यप्रभृतीनां सेवा, तदादि आदिशब्दात् पूजनादिग्रहः, काले = अवसरे सद्योगानां = शोभनधर्मव्यापाराणां स्वाध्याय-ध्यानादीनां विघ्नवर्जनया = विघातत्यागेन, विधेयमिति वाक्यशेषः । इत्यादीनां

**कल्याणकन्दली**

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> एवं च सद्योगविघ्नवर्जनया काले गुरुसेवादि इत्यादिकृत्यकरणं लोकोत्तरतत्त्वसम्प्राप्तिः ॥५/१५॥ इयं कारिका पञ्चाशकवृत्त्यादौ [२/३३] समुद्धृता । विधिना = सूत्रोक्तविधिवत् पुरुषाद्यपेक्षयेत्यर्थः । तदुक्तं मूलकारैः उपदेशपदे –> पुरिसंतरमुवयार अवयार चणणो य णाऊण । कुज्जा वेयावडियं, आणं काऊं निरासंसो <– ॥२३७॥ इति । अत एव भर्तृहरिणाऽपि –> 'सेवाधर्मः परमगहनो योगिनामप्यगम्यः' <– [५८] इति नीतिशतके प्रोक्तम् । धर्माचार्यप्रभृतीनामिति । प्रभृतिपदेनोपाध्याय-तपस्व्यादिग्रहणम् । सेवा = आहारादिना वैयावृत्त्यं, यद्वा शरीरविश्रामणादिकं यथोक्तं योगदृष्टिसमुच्चये –> आचार्यादिष्वपि ह्येतद्विशुद्धं भावयोगिषु । वैयावृत्त्यं च विधिवच्छुद्धाशयविशेषतः ॥२६॥ <– इति । न च वैयावृत्त्यस्य कायक्लेशरूपत्वात्कथं लोकोत्तरतत्त्वसम्प्राप्तावुपयोग इत्याशङ्कनीयम्, विध्यादरादिपरिकलितस्य तस्य जिननामकर्माक्षेपकत्वात्, यदुक्तं उत्तराध्ययनसूत्रे –> वेयावच्चेणं तित्थयरनामगोत्तं कम्मं निबंधइ <– [२९/४४] इति ।

पूजनादिग्रह इति । तदुक्तं योगदृष्टिसमुच्चये –> गुरवो देवता विप्रा यतयश्च तपोधनाः । पूजनीया महात्मानः सुप्रयत्नेन चेतसा ॥१५१॥ <– इति । मुख्यवृत्त्या साधूनां पूजनञ्चाऽत्र न नवाङ्गिवासचूर्णप्रक्षेपस्वरूपं न वा स्वर्णनाणकादिढोकनरूपं न वाऽऽरात्रिकादिलक्षणं, यथोक्तं योगशास्त्रे आन्तरश्लोकेषु –> अन्नादीनामिदं दानमुक्तं धर्मोपकारिणाम् । धर्मोपकारवाह्यानां स्वर्णादीनां न तन्मतम् ॥ दत्तेन येन दीप्यन्ते क्रोध-लोभ-स्मरादयः । न तत् स्वर्णं चरित्रिभ्यो दद्याच्चारित्रनाशनम् ॥<– [३/८७/१-२] इति । किन्तु विशुद्धाऽन्न-वस्त्र-पात्र-प्रभृतिप्रदानात्मकं तत् बोध्यम् । –> 'वसही-'सयणाऽऽसण'-'भत्त-'पाण-'भेसज्ज-'वत्थ-'पत्ताइ । जइवि न पज्जत्तधणो थोवा वि हु थोवयं देइ ॥ <– [ ] इत्यष्टप्रकारदाने यतीनां पूजनं उपदेशसारवृत्तावपि स्पष्टम् । तदुक्तं दशवैकालिकचूर्णौ अगस्त्यसिंहसूरीश्वरेणापि –> वत्थ-भत्तादिप्पदाणमुभयजोग्गं पूयणं <– [द. वै. चू.-पृ. २५७] । दर्शनशुद्धिप्रकरणेऽपि श्रीचन्द्रप्रभसूरिभिः –> बहुमाणं वंदणयं निवेयणा पालणा य जत्तेण । उवगरणदाणमेयं गुरुपूया होइ विण्णेया ॥१६६॥ <– इत्युक्तम् । प्रशंसायामपि पूजापदप्रयोगः प्रवर्तते-यथा दशवैकालिकचूर्णौ –> गिहत्था वि णं पूयंति - 'अहो भट्टारओ अप्पमत्तो' <– [द. वै. अ. चू. अ. ५ उ. २ सू. ४२ पृ. १३६] इति । श्रीजिनेश्वरसूरिभिः कथाकोषे –> पूएइ साहुणो पराए भत्तीए, चउव्विहाहारेण वत्थ-पत्त-कंवल-ओसह-भेसज्जाइणा ॥ <– [ ] इत्युक्तम् । श्रीजिनेश्वर-सूरिभिः अष्टकप्रकरणवृत्तौ अपि –> गृणन्ति शास्त्रार्थमिति गुरवः = साधवः, तेषां पूजनं = भक्त-पान-वस्त्र-पात्र-प्रणामादि-भिरभ्यर्चनं = गुरुपूजनं <–[अ. २४/गा. ८ वृ.] इत्युक्तम् । उपदेशमालादोघट्टीटीकायामपि –> प्रौढप्रीतितरङ्गसङ्गि हृदयं वाणीं गुणग्राहिणीं, कायं कैतववन्ध्यवन्दनकवान् दुश्चेष्टितालोचनम् । प्रायश्चित्त-पवित्रपालनविधिर्वस्त्रान्नपानाश्रयप्रावार-प्रमुखदानमिति सत्पूजा गुरोर्गीयते ॥[उप. मा. २४०/दो. पृ. ४२२] <– इत्युक्तम् । यथोक्तं पञ्चकल्पभाष्येऽपि –> णाणे चरणे गुणकारगाणि आहारउवहिमादीणि । एतेण अणुण्णाता तहि ठिताण तु तो पूजा ॥१८९७॥ <– इत्युक्तम् । –> आहाराईणि नाणाइण गुणकारगानि त्ति तेन अणुन्नाय । तेसु पुण नाणाइसु ठियस्स पूया वि इच्छिज्जइ । जहा गणहारिस्सुक्कोसाहारोवहिमाईणं <– इति पञ्चकल्पचूर्णिकारः । उत्तराध्ययनवृत्तौ अपि –> यः पूजा = वस्त्र-पात्राऽऽहारादिभिः अर्चां नेच्छति <– [१५/

મૂલકારશ્રી અન્ય સ્થાને પણ આ અતિદેશને બતાવે છે —

**ગાથાર્થ** - આ રીતે સુંદર યોગોમાં વિઘ્નના પરિહારપૂર્વક અવસરે ગુરુસેવા વગેરે કરવી - ઈત્યાદિ કર્તવ્યપાલન લોકોત્તરતત્ત્વસંપ્રાપ્તિ છે. [૫/૧૫]

## ❀ ગુરુસેવા કઈ રીતે કરવી ? ❀

**ટીકાર્થ** - વિધિપૂર્વક જ ધર્માચાર્ય વગેરે ગુરુભગવંતોની સેવા વગેરે કરવી. મૂળ શ્લોકમાં 'સેવાદિ' માં જે આદિપદ છે તેનાથી પૂજન વગેરેને સમજી લેવા. સેવા, પૂજન વગેરે અવસરે કરાય તથા ગુરુદેવના સ્વાધ્યાય, ધ્યાન વગેરેમાં ખલેલ ન પડે તે રીતે સેવા કરવી જોઈએ. 'કરવી જોઈએ' આનો ઉલ્લેખ મૂળ શ્લોકમાં નથી. પરંતુ ટીકાકારશ્રીએ અધ્યાહારથી તેનું ગ્રહણ

[1] ह. प्रतौ 'गुरूणां' इति पदं नास्ति ।

= एवमादीना महत्पदेष्टपद-सत्पदादिभिर्विशिष्यते । तदेव लोकोत्तरपदाभिधेयमिति भाव ॥५/१५॥

इय पुनरेकार्थक्रियाया सकलार्थक्रियासापेक्षा स्यादित्याह –> [१] इतरेतरे'त्यादि ।

**इतरेतरसापेक्षा त्वेषा पुनराप्तवचनपरिणत्या । भवति यथोदितनीत्या पुसा पुण्यानुभावेन ॥५/१६॥**

**एषा पुन** लोकोत्तरतत्त्वसम्प्राप्ति आप्तवचनस्य परिणत्या = एकक्रिया सकलक्रियासापेक्षे ति सस्काररूपया,

## कल्याणकन्दली

५] इत्येव **लक्ष्मीवल्लभगणिना** निषेधमुखेन मुनिवर्णनमकारि । **नेमिचन्द्रसूरिभिरपि** –> अभिलपति न पूजा = वस्त्रादिसपर्याम् <– [१५/५] इत्युक्तम् **उत्तराध्ययनवृत्तौ** । **शान्तिसूरिभिरपि** –> पूजा = वस्त्र-पात्रादिभिः सपर्या <– [१५/५] इत्येवमेव **उत्तराध्ययनबृहद्वृत्तौ** प्रोक्तम् । **उत्तराध्ययनावचूर्णौ** अपि –> नैव पूजा वस्त्रादिभि. सयत इच्छति <– [१५/५] इत्येव ध्वनितम् । शास्त्रश्रुत जगद्गुरु-कलिकालसर्वज्ञादीना नवाङ्गिपूजनादिक तु चरितानुवादरूपम् । न च चरितानुवादवचनानि विधि-निषेधसाधकानि भवन्ति अन्यथा **सूर्याभादिदेववक्तव्यताया** बहूना शस्त्रादिवस्तूनामर्चन श्रूयत इति तदपि विधेय स्यादिति व्यक्त **ज्ञाताधर्मकथाङ्गवृत्तौ** [अ १६ सू १२५ द्रौपदी] । **सङ्घाचारभाष्येऽपि** –> चरितानुवादविहितानि हि नोत्सर्गाभिधविधिवादस्य बाधकानि साधकानि वा भवितुमर्हन्ति, कारणाश्रितत्वेन द्वितीयपदान्तर्वर्तित्वात्तेषाम् <– [गा १३४] इत्युक्तम् । क्वचित् श्रूयमाण विधान तु न यथेच्छ सार्वत्रिक कार्यम्, अन्यथा जिनाज्ञाविलोपप्रसङ्गादिति दिक् ।

**लोकोत्तरतत्त्वसम्प्राप्तिः** कारणे कार्योपचारात् **उच्यते** । **विधियुक्त हि** = विधि-बहुमानौचित्यादिपरिकलितमेव **दानादि** = दान-देवार्चन-गुरुसेवादि **यत्** = यस्मात् **महत्पदेष्टपदसत्पदादिभिः विशिष्यते** = यथाक्रम 'महादान इष्टदेवार्चन सद्गुरु-सेवादी'त्येव परिभाष्यते । महत्पदाद्युपसन्दानेनेदमभिव्यज्यते यदुत तथाविधकर्मोदयाद् भ्रष्टमपि विध्यादरादिपरिकलितमनुष्ठानमचिर-कालेनैवाऽऽत्मलाभ लभते, क्षयोपशमभावप्रयुक्तपरमादरविधिप्रभृतिप्रयुक्तत्वात्, यथोक्त **पञ्चाशके** –> खाओवसमिगभावे दढ-जत्तकय सुह अणुट्ठाण । परिवडियपि हु जायइ पुणोऽवि तब्भावबुड्ढिकर ॥ <– [३/२४] इत्यादि विभावनीयम् ॥५/१५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> एषा पुन आप्तवचनपरिणत्या यथोदितनीत्या पुसा पुण्यानुभावेन इतरेतरसापेक्षा तु भवति ॥५/१६॥

**'एकक्रिया** = एकाऽपि क्रिया **सकलक्रियासापेक्षा** = स्वेतरसकलकर्तव्याऽविरोधिनी' इति **सस्काररूपया** । करणे

---

કરેલ છે આવા પ્રકારના આગમોક્ત કર્તવ્યોને વિધિથી કરવા તે લોકોત્તરતત્ત્વસપ્રાપ્તિ કહેવાય વિધિયુક્ત દાન, દેવાર્ચન અને ગુરુસેવા ક્રમિક રીતે મહા, ઈષ્ટ અને સત્ પદથી વિશિષ્ટ થાય છે [અર્થાત્ મહાદાન, ઈષ્ટ દેવાર્ચન અને સત્ ગુરુસેવા બને છે ] વિધિયુક્ત મહાદાન વગેરે જ લોકોત્તર છે આવુ જણાવવાનો શ્રીમદ્જીનો આશય છે [૫/૧૫]

<u>વિશેષાર્થ</u> - ગુરુસેવા સત્ ગુરુસેવા બને તે માટે ૩ શરત છે [૧] ગુરુસેવા વિધિયુક્ત થવી જોઈએ, [૨] યોગ્ય અવસરે થવી જોઈએ, [૩] ગુરુના યોગોમા વ્યાઘાત ન આવે તે રીતે જ થવી જોઈએ ગુરુને વિના કારણે દોષિત ગોચરી-પાણી વપરાવે તે ગુરુસેવા સમ્યક્ નથી ગુરુમહારાજના આરામના સમયે બપોરે પડિલેહણ કરવા જાય તે ગુરુભક્તિ સાચી ન કહી શકાય ગુરુદેવ ભરઊંઘમા હોય તે વખતે તેમના પગ દબાવવા તે ગુરુભક્તિ વિવેકહીન કહેવાય ગુરુદેવ ધ્યાન ધરતા હોય, વાચના આપતા હોય, સ્વાધ્યાય કરતા હોય, શાસ્ત્રસર્જન કરતા હોય તે સમયે તેમની કમર દબાવવા કે માથુ દબાવવા જવુ તે ગુરુસેવા ઉચિત ન કહેવાય તીર્થસ્થળ વગેરેમા ગુરુદેવ પરમાત્મભક્તિમા એકાકાર થઈ ગયા હોય તે વખતે તેમને ગોચરી વાપરવા બોલાવવા, ગોચરી વપરાવવાની ઉત્કઠા બતાવવી તે ગુરુભક્તિ પણ તાત્ત્વિક ન બને ગુરુદેવને શરદી થઈ હોય ત્યારે તેમને ભક્તિથી શીખડ વપરાવવો તે સાચી ગુરુભક્તિ નથી ઉપરોક્ત ૩ શરતનુ પાલન થાય તો જ તે સાચી-સારી ગુરુસેવા બની શકે, જેનો લોકોત્તરતત્ત્વસપ્રાપ્તિમા શ્રીમદ્જીએ નિર્દેશ કરેલ છે [૫/૧૫]

લોકોત્તરતત્ત્વસપ્રાપ્તિ એક ક્રિયા કરતી વખતે પણ સર્વ ક્રિયાને સાપેક્ષ હોય છે આ વાતને મૂલકારશ્રી જણાવે છે કે –

<u>ગાથાર્થ</u> - વળી, લોકોત્તરતત્ત્વસપ્રાપ્તિ એ આપ્તવચનપરિણતિ દ્વારા પૂર્વોક્ત પદ્ધતિથી જીવોના પુણ્યપ્રભાવથી અન્યોન્ય સાપેક્ષ જ હોય છે [૫/૧૬]

## ❀ ક્રિયામાં પણ સાપેક્ષવાદ સન્માન્ય ❀

<u>ટીકાર્થ</u> - 'એક ક્રિયા સર્વ ક્રિયાને સાપેક્ષ હોય' આવા પ્રકારની આપ્તવચનની સસ્કારાત્મક પરિણતિ દ્વારા પૂર્વોક્ત ન્યાયથી

---

१ ह प्रता –> 'इतरे'त्यादि <– इति पाठान्तरम् ।

यथोदितनीत्या = यथोक्तन्यायेन पुंसां पुण्यानुभावेन = सद्बुद्धिहेतुपुण्यविपाकेन इतरेतरसापेक्षा तु = परस्परकार्याऽविरोधिन्येव भवति । कार्यान्तरविरोधिनः सत्कार्यस्यापि लौकिकत्वादिति भावः ॥५/१६॥

॥ इति पञ्चमं लोकोत्तरतत्त्वप्राप्तिषोडशकम् ॥

कल्याणकन्दली

तृतीया ज्ञेया । सद्बुद्धिहेतुपुण्यविपाकेन = मार्गानुसारिप्रज्ञोपधायकशुभादृष्टोदयेन । प्रकृते तृतीया हेतौ बोध्या । परस्परकार्याविरोधिन्येवेति । अनेनानेकान्तवादस्य ज्ञान-क्रियोभयपर्याप्तत्वमाविदितम् । एवकारफलं कण्ठतो व्याचष्टे - कार्यान्तरविरोधिनः = स्वपरगोचरान्यकृत्यव्याघातकारिणः सत्कार्यस्याऽपि = स्वरूपतः शोभनधर्मव्यापारस्यापि लौकिकत्वात् = अनुबन्धविकलत्वात् । तदुक्तं श्रीमुनिचन्द्रसूरिभिः उपदेशपदवृत्तौ —> न हि धर्मान्तराणि बाधमानो धर्मो धर्मरूपतां प्रतिपद्यते <— [गा.८८७]। यथोक्तं —> धर्मं यो बाधते धर्मो न स धर्मः सतां मतः । अविरोधेन यो धर्मः स धर्म इति कीर्त्तितः ॥ <— [ ] इति । इदमेवाभिप्रेत्य टीकाकृताऽपि ज्ञानसारे —> तदेव हि तपः कार्यं दुर्ध्यानं यत्र नो भवेत् । येन योगा न हीयन्ते क्षीयन्ते नेन्द्रियाणि च ॥ [३१/७] <—इत्युक्तम् । अत एवाऽसमाहितचित्तस्य शारीरिकाऽऽतापनादौ तत्त्वमपाकृतम्, पापतापविरहेण तपःपदप्रवृत्तिनिमित्तविरहात् । यदुक्तं निशीथचूर्णौ —> तप्पते अणेण पावं कम्ममिति तवो <— [४६]। असंयमादिदोषसाम्राज्येऽपि तपोविरहो दृष्टव्यः, तयोः समव्याप्तत्वात् यथोक्तं निशीथचूर्णौ —> यत्र तपः तत्र नियमात् संयमः, यत्र संयमः तत्रापि नियमात् तपः <— [३३३२] । अतो न ततोऽपवर्गावाप्तिसम्भवः —> न हि बालतवेण मुक्खु त्ति <—[२१४] इति आचाराङ्गनिर्युक्तिवचनात् । एतावता सर्वत्रौचित्याऽऽयव्ययविवेक-तत्त्वदृष्टिप्रभृतीनामभ्यर्हितत्वमाविष्कृतम् । तदुक्तं निशीथभाष्ये —> जो तु गुणो दोसकरो, ण सो गुणो, दोस एव सो होती । अगुणो वि य होति गुणो, जो सुंदर णिच्छओ होती ॥५८७७॥ <— इति भावनीयं तत्त्वमेतत् पर्युपासितगुरुकुलैः ॥५/१६॥

इति मुनियशोविजयविरचितायां कल्याणकन्दल्यां पञ्चमषोडशक-योगदीपिकाविवरणम् ।

જીવોને સદ્બુદ્ધિ આપનાર પુણ્યના વિપાકોદયથી લોકોત્તરતત્ત્વસંપ્રાપ્તિ પરસ્પર કાર્યમાં વિરોધ નહિ કરનાર જ હોય છે. અન્ય કાર્યનું વિરોધી સત્કાર્ય પણ લૌકિક બને છે - એવો ભાવાર્થ છે. [૫/૧૬]

<u>વિશેષાર્થ</u> - તારક યોગો શ્રી તીર્થંકર ભગવંતોએ અપરિમિત બનાવેલ છે. દરેકે દરેક યોગની આરાધના પ્રત્યેક સાધક કરે તે શક્ય પણ નથી. પરંતુ જે કોઈ પોતાને ઉચિત યોગ હોય તેની ઉપાસના ગુરુગમથી એવી થવી જોઈએ કે તેનાથી બીજા યોગને બાધા ન પહોંચે, બીજા યોગો પ્રત્યે દ્વેષ-અરુચિ પેદા ન થઈ જાય. આવી આપ્તવચનની પરિણતિ સંસ્કારરૂપે વિદ્યમાન હોવાના લીધે લોકોત્તર-તત્ત્વપ્રાપ્તિરૂપે માન્ય એક પણ ક્રિયા અન્ય સર્વ ક્રિયાને સાપેક્ષ જ હોય. દા.ત. પોતે કાપ કાઢવા બેસે તો પગત, ડોલ વગેરે ખખડવાનો અવાજ બીજાના સ્વાધ્યાય, ધ્યાન, વ્યાખ્યાન વગેરે યોગોમાં વ્યાઘાત ઊભો ન થાય તેની કાળજી હોય તો જ વિધિ અને યતનાપૂર્વકની તે કાપ કાઢવાની ક્રિયા પણ લોકોત્તરતત્ત્વપ્રાપ્તિરૂપ બને. પોતે તપ એવો ન કરે જેથી પોતાના અધ્યયન-અધ્યાપન વગેરે યોગોને હાનિ પહોંચે. પોતે અંતર્મુખી સંયમજીવન જીવે પણ વ્યાખ્યાન વાચનાર કે શાસનપ્રભાવક પુરુષો પ્રત્યે ઘૃણા કે અરુચિ હોય તો પોતાની ઉગ્ર સાધના પણ વાસ્તવમાં લોકોત્તરતત્ત્વસંપ્રાપ્તિ બની ન શકે. માટે જ 'સાધ્વીઓને સંભાળનાર અન્ય યોગ્ય સાધુ તૈયાર થયેલ ન હોય તો સાધ્વીના આચાર્યશ્રીને જિનકલ્પ સ્વીકારવાનો નિશીથસૂત્રમાં નિષેધ કરેલ છે.' તેમ જ પર્યુષણાદિમાં શ્રીસંઘને આરાધના કરાવવાની અને સાથે સાથે સ્વયં અટ્ઠમ કરવાની શક્તિ ન હોય તો આગળ-પાછળ સંવત્સરીનો અટ્ઠમ વાળી આપવાનું શાસ્ત્રમાં વિધાન આવે છે. તે જ રીતે બીજો કોઈ વિકલ્પ સંભવિત ન હોય ત્યારે સંયમવિરાધનાને ગૌણ કરીને પણ આત્મવિરાધનાથી બચવું અને આત્મવિરાધનાને ગૌણ કરીને શાસનવિરાધના અટકાવવી-આવો ઉલ્લેખ પણ શાસ્ત્રકાર પરમર્ષિઓએ કરેલ છે. માટે તો ઉદાયીરાજાનું વિનયરત્ન નામના વેષધારી સાધુએ ખૂન કર્યું તેનો ખ્યાલ આવતા તેના ગુરુ શ્રીકાલિકસૂરિએ તે જ છરીથી આત્મવિલોપન કર્યું તો પણ આરાધક બન્યા. શ્રેણિક મહારાજે વેશ્યાયુક્ત શકરમંદિરમાં જૈન સાધુને પૂરી દીધા ત્યારે સ્વયં રજોહરણ બાળી નાખીને અઘોરી બાવા બનનાર તે જૈન સાધુ જિનાજ્ઞાના આરાધક બન્યા. લાભ-નુકસાનનો વિચાર કરીને તથા લાંબા ગાળાના પરિણામને વિચારીને તેમ જ પોતાના નિમિત્તે થતી બીજાની આરાધના વગેરેને લક્ષમાં રાખીને જે કોઈ પણ વૈરાગ્યસંયુક્ત વિધિયુક્ત વિવેકપ્રયુક્ત જિનોક્ત અનુષ્ઠાન થાય તે લોકોત્તરતત્ત્વસંપ્રાપ્તિસ્વરૂપ બની જાય- એ નિષ્કર્ષ મનનીય છે. [૫/૧૬]

હે કરુણાસાગર !
મને નિર્વિકારી, નિરહંકારી, નિર્દંભી બનાવજે, વિનયી, વિવેકી, વૈરાગી બનાવજે.
ધીર, વીર, ગંભીર બનાવજે. શાંત, પ્રશાંત ઉપશાંત બનાવજે.

## પાંચમા ષોડશકનો સ્વાધ્યાય

**(અ) ચારથી પાચ મુદ્દામા નીચેની સમસ્યાનુ સમાધાન આપો**

૧ લોકોત્તર તત્ત્વ એટલે શુ ? તેનો અધિકારી કોણ બને ?
૨ સજ્ઞાપરિહાર કેવી રીતે સુલભ બને ?
૩ લોકોત્તર તત્ત્વની ભેદ-પ્રભેદથી ઓળખાણ આપો
૪ અધ્યારોપ એટલે શુ ? તે રવાના થાય તો શુ બને ?
૫ દાન અને મહાદાન વચ્ચેની ભેદરેખા સ્પષ્ટ કરો
૬ જ્ઞાનના ત્રાણ ભેદ સમજાવો
૭ સાચી ગુરુભક્તિની કેટલી શરતો છે ? તે દષ્ટાત સાથે સમજાવો
૮ 'એક ક્રિયા પણ સર્વ ક્રિયાને સાપેક્ષ હોય' આ હકીકતને દષ્ટાત સાથે સમજાવો
૯ અચરમાવર્ત કાળમા સદ્ધર્મ ઔષધ આપવાનુ પરિણામ શુ આવે ?
૧૦ ચરમાવર્ત ક્યારે આવે ? તથા અવિધિસેવન શેનુ સૂચક છે ?

**(બ) યોગ્ય જોડાણ કરો**

| | |
|---|---|
| (૧) આગમવચન | (A) અધ્યાત્મયોગ |
| (૨) અવિધિ | (B) લોકોત્તરતત્ત્વસપ્રાપ્તિ |
| (૩) વિધિપાલન | (C) અચરમાવર્ત |
| (૪) દેવગુણ | (D) આગમવચનપરિણતિ |
| (૫) પ્રાથમિક ભાવારોગ્ય | (E) સર્વજ્ઞવચન |
| (૬) અયોગ્ય કાળ | (F) ક્રિયામલ |
| (૭) ભવરોગનુ ઔષધ | (G) વીતરાગતા |
| (૮) જ્ઞાનફલાભાવ | (H) દોષપ્રકાશન |
| (૯) અપવાદ | (I) સદનુષ્ઠાનપૂર્ણતાપ્રયોજક |
| (૧૦) સજ્ઞારોધ | (J) અપરિણામ |

**(ક) ખાલી જગ્યા યોગ્ય રીતે પૂરો**

૧ અવિધિસેવનને લાવનાર ______ છે (આળસ, અધ્યારોપ, અવિરતિ)
૨ વિધિપાલન લાવનાર ______ છે (ઉત્સાહ, ગુરુપારતત્ર્ય, વીર્યાતરાયક્ષયોપશમ)
૩ તાવ ______ હોય ત્યારે અપાયેલ ઔષધ ગુણકારી થાય (વધતો, ઘટતો, સ્થિર)
૪ અપુનર્બધક પ્રક્રિયા ______ દર્શનસબધી છે (જૈન, યોગ, અન્ય, સર્વ)
૫ ચતુર્થ ગુણસ્થાનકે ______ જ્ઞાન હોય (વિષયપ્રતિભાસ, આત્મપરિણતિવાળુ, તત્ત્વસવેદન, અવધિ)
૬ ૧૩ મા શ્લોકમા ભૃત્યપદ ______ નુ ઉપલક્ષણ છે (ગુરુવર્ગ, પોષ્યવર્ગ, નોકર)
૭ ______ એ આગમવચનના અજીર્ણનુ સૂચક છે (ગુસ્સો, અવિધિસેવન, અભિમાન)
૮ ક્રિયામલ અને ભાવમલની નિવૃત્તિથી ______ નો પ્રતિરોધ થાય છે (સજ્ઞા, કષાય, મનની ચચળતા)
૯ ______ થી યુક્ત ગુરુસેવા એ લોકોત્તરતત્ત્વપ્રાપ્તિરૂપ છે (વિનય, વિવેક, વૈરાગ્ય)
૧૦ સદનુષ્ઠાનનુ એક લક્ષણ ______ છે (નિર્વિઘ્નતા, સ્થિરતા, ચોકસાઈ)

નોધ આ પ્રશ્નપત્રમા કોઈએ પેન-પેન્સીલ વગેરેથી કોઈ પણ નિશાની વગેરે ન કરવા ખ્યાલ રાખવો

## षष्ठ जिनभवनषोडशकम्

लोकोत्तरतत्त्वसम्प्राप्तिरुक्ता । तदुत्तरं यल्लभ्यते तदाह -> 'अस्यामि'त्यादि ।

**अस्यां सत्यां नियमाद्विधिवज्जिनभवनकारणविधानम् । सिध्यति परमफलमलं ह्यधिकार्यारम्भकत्वेन ॥६/१॥**

**अस्यां** = लौकोत्तरतत्त्वसम्प्राप्तौ **सत्यां नियमात्** = योग्यतानियमात् **विधिवत्** = विधिना जिनभवनस्य कारणं प्रयोज्यकर्तृभिः कृत्वा विधानं = सम्पादनं **सिध्यति, परमफलं** = प्रकृष्टफलं **हि अलं** = अत्यर्थं अधिकारी आरम्भको यत्र तत्त्वेन तद्भावेन ॥६/१॥ ¹कीदृग्गुणः पुनरयमधिकारीत्याह -> **'न्याये'**त्यादि ।

### कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् -> अस्यां सत्यां नियमात् विधिवत् जिनभवनकारणविधानं हि अधिकार्यारम्भकत्वेन अलं परमफलं सिध्यति ॥६/१॥

**नियमात् = योग्यतानियमात्** = जिनभवनकारणविधानस्वरूपयोग्यतासद्भावावश्यम्भावात् । तेन जिनभवनकारणविधानमन्तरेण दीक्षाऽऽदानेऽपि न क्षतिः । न हि घटस्वरूपयोग्यतालिङ्गिते सकलेऽपि मृद्द्रव्ये घटो नियमेन जायते । न चैतावतैव तत्र घटस्वरूपयोग्यता निह्नोतुमुचितेति भावनीयम् । **विधिना** = पूजाबलिविधानेन, तदुक्तं **शिल्पस्मृतिवास्तुविद्यायां** -> पूजाबलिविधानञ्च कृत्वा कर्म समारभेत् । सर्वं सिध्यति तत्कर्म सर्वकामफलप्रदम् ॥३९॥ <- इति । शास्त्रोक्तविध्यननुसरणे तु नेष्टफलसिद्धिः । तदुक्तं **भगवद्गीतायामपि** -> यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ <- [१६/२३]

**प्रयोज्यकर्तृभिः** शील्पशास्त्र-कलाशास्त्रप्रभृतिनिपुणैः सूत्रधारादिभिः, न तु स्वयमेव जिनालयविधाने उद्यम्यते, न वा शील्पशास्त्राद्यनभिज्ञैः सूत्रधारादिभिः । तदुक्तं **शिल्पस्मृतिवास्तुविद्यायां** -> सूत्रधारः शास्त्रयुक्तो वास्तुवेदोपलक्षकः । सूत्रकम्बीसमायुक्तः सर्वशास्त्रसुकोशलः ॥२९॥

**प्रकृष्टफलं** = इहाऽमुत्र सर्वविरति-वैमानिकद्युलोक-सुलभबोधित्वाऽपवर्गप्राप्तिलक्षणफलं **सिध्यति** । तदुक्तं **शत्रुञ्जयमाहात्म्ये धनेश्वरसूरिभिः** -> कारयन्ति जिनानां ये तृणाऽऽवासानपि स्फुटम् । अखण्डितविमानानि ते लभन्ते त्रिविष्टपे ॥<- [५/४८९] इति । **उपदेशतरङ्गिण्यामपि** -> कारयन्ति जिनेन्द्राणां तृणावासानपीह ये । मणि-रत्न-विमानानि ते लभन्ते भवे भवे ॥ [२/पृ ११०] <- इत्युक्तम् । यद्यपि **महानिशीथे** -> काउंपि जिणायणेहिं मंडियं सव्वमेइणीवट्टं । दाणाइचउक्केणं सड्ढो गच्छेज्ज अच्चुयं जाव न परं ॥ <- इत्युक्तं **सम्बोधसप्ततौ श्रीरत्नशेखरसूरिभिरपि** -> उक्कोसं दव्वत्थयआराहगो जाव अच्चुअं जाई <- [४५] इत्युक्तं तथापि -> जिणभवण-बिंबठावण-जत्तापूआ य सुत्तओ विहिणा । दव्वत्थउ त्ति नेयं भावत्थयकारणत्त-णेण ॥[स.प्र.१/१९५ द.शु.७८] <- इति **सम्बोधप्रकरण-दर्शनशुद्धिप्रकरणा**दिवचनात् द्रव्यस्तवस्य भावस्तवहेतुतया परम्परयाऽपवर्गहेतुत्वमनिषिद्धमेव, अन्यथा -> 'सिद्धवेयावच्चेणं महानिज्जरा महापज्जवसाणं चेवत्ति' <- [ ] इति **व्यवहार-सूत्र**वचनं विरुध्येत । न हि सिद्धवैयावृत्त्यं तद्बिम्ब-तदायतनादिकमृते सम्भवति । अग्रे 'नियमादपवर्गबीजं' [६/१४] इति वक्ष्यति ग्रन्थकृदेव । जिनभवनविधानमाहात्म्यञ्च -> यस्तृणमयीमपि कुटीं कुर्याद् दद्यात्तथैकपुष्पमपि भक्त्या परमगुरुभ्यः पुण्योन्मानं कुतस्तस्य ? । किं पुनरुपचितदृढघनशिलासमुद्घातघटितजिनभवनं ये कारयन्ति शुभमतिविधायिनः ते महाधन्याः ॥ [२/पृ १२५] इत्यादिना उपदेशतरङ्गिण्यादितो बोध्यम् ॥६/१॥

### ❀ रतिदायिनी (ગુજરાતી વ્યાખ્યા) ❀

પાંચમાં ષોડશકમાં લોકોત્તરતત્ત્વસંપ્રાપ્તિ કહી ગયા. તેના પછી જે પ્રાપ્ત થાય તેને મૂલકારશ્રી છઠ્ઠા ષોડશકમાં જણાવે છે.

<u>**ગાથાર્થ**</u> - લોકોત્તરતત્ત્વસંપ્રાપ્તિ થઈ હોય ત્યારે નિયમા વિધિયુક્ત જિનાલયનું કારણો દ્વારા નિર્માણ, ખરેખર અધિકારીકર્તૃક હોવાથી અત્યંત પરમફલવાળું સિદ્ધ થાય છે. [૬/૧]

### ❀ જિનભવન સંપાદન ❀

<u>**ટીકાર્થ**</u> - લોકોત્તર તત્ત્વની સંપ્રાપ્તિ થાય ત્યારે નિયમા એવી યોગ્યતા પ્રગટે છે, જેના લીધે તે (= શ્રાવક) વિધિપૂર્વક જિનાલયના પ્રયોજ્યકર્તાઓ [કારીગર, કડિયા, શિલ્પી, સુથાર વગેરે] વડે દેરાસર નિર્માણ કરાવે છે. લોકોત્તરતત્ત્વસંપ્રાપ્તિવાળો પ્રયોજક કર્તા [શ્રાવક] ખરેખર દેરાસર બંધાવવાનો અધિકારી છે. તેથી તે ચૈત્યનિર્માણ તેને અત્યંત પ્રકૃષ્ટફલદાયી સિદ્ધ થાય છે. [૬/૧]

કેવા ગુણવાળો પ્રયોજક કર્તા દેરાસર બંધાવવાનો અધિકારી થાય ? તેવી જિજ્ઞાસાનું શમન કરવા મૂલકારશ્રી કહે છે કે —

१ 'कीदृशः गुणः' इति ह प्रतौ अशुद्धः पाठः ।

न्यायार्ज्जितवित्तेशो मतिमान् स्फीताशयः सदाचारः । गुर्वादिमतो जिनभवनकारणस्याऽधिकारीति ॥६/२॥

न्यायार्जितवित्तस्य ईश = स्वामी, मतिमान् = आयतिहितज्ञ, स्फीताशय = प्रवृद्धधर्माध्यवसाय सदाचार = अनिन्द्याचार, गुर्वादीनां = पितृ-पितामहादि-राजामात्यादीनां अभिमत = बहुमत जिनभवनकारणस्य अधिकारी शास्त्राज्ञाशुद्धत्वात् इति अधिकारिविशेषणसमाप्त्यर्थं ॥६/२॥ कारणविधिमाह —> "कारणे'त्यादि ।

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> न्यायार्ज्जितवित्तेशो मतिमान् स्फीताशयः सदाचारः गुर्वादिमतो जिनभवनकारणस्य अधिकारीति ॥६/२॥ इयं कारिका श्राद्धविधिवृत्ति-धर्मसङ्ग्रहवृत्त्यादौ [श्रा प्रकाश-६ गा १० वृ पृ.३० ध स ६८] समुद्धृता। एतदनुसारेण भक्तिद्वात्रिंशिकायामपि —> न्यायार्जितधनो धीरः सदाचारः शुभाशयः । भवनं कारयेज्जैनं गृही गुर्वादिसम्मतः ॥ <— [७/२] इति प्रोक्तम् । उपदेशतरङ्गिण्यामपि —> न्यायोपार्जितवित्तो मतिमान् स्फीताशयः सदाचारः । गुर्वादिमतो जिनभवनकारकस्याधिकारी स्यात् ॥ <— [तरङ्ग २/पृ १२०] इत्युक्तम् । न्यायार्ज्जितवित्तेश इति । धनविरहे जिनालयनिर्मापणाऽसम्भवादिदं प्राधम्येनाऽधिकारिणो विशेषणम् । तत्राप्यन्यायगृहीतस्याऽग्राह्यत्वं, तदुक्तं देवीभागवतेऽपि —> अन्यायोपार्जितेन द्रव्येण सुकृतं कृतम् । न कीर्तिरिहलोके च परलोके न तत्फलम् ॥ <— [३/१२/८] इति । अन्यायोपात्तवित्तस्य कुत्सितत्वात्, वस्तुगत्या दानाऽप्रतियोगित्वाच्च 'न्याय'ेति ग्रहणम् । आयतिहितज्ञः = भाविकल्याणज्ञाता, अन्यथा चैत्यनिर्मापणे बहुधनव्ययसाध्ये नैव प्रवर्त्तेत ।

प्रवृद्धधर्माध्यवसाय इति । एतद्विशेषणविरहे आरब्धमपि जिनगृहनिर्मापणं परित्यजेत् ।

अनिन्द्याचारः = परस्त्रीगमन-मद्य-द्यूतप्रभृतिलोकविरुद्धाचारपरिहारवान्, अन्यथा देवगृहे निष्पन्नेऽपि न तत् परेषां तथाविधफलोपधायकं स्यात् । विस्तरतस्त्वत्र योगबिन्दुप्रदर्शितो विंशतिविधः सदाचारो ज्ञेयः [यो.बि गा १२६-१२७-१२८-१२९-१३०-१३१] । पितृ-पितामहादि-राजामात्यादीनां बहुमत इति । पित्रादिबहुमतत्वेन कुटुम्बकलहादिपरिहारः राजादिबहुमतत्वेन च निष्पन्नस्य देवालयादेः निरुपद्रवो द्योतितः । गुर्वादिबहुमतत्वञ्च गुर्वादिविनय-भक्ति-बहुमानादिनैव स्यात् । तच्च सतताभ्यासयोगतो धर्मानुष्ठानतयाऽवगन्तव्यम् । वक्ष्यमाणजिनभवनविधान-जिनबिम्बकारण-प्रतिष्ठा-पूजादिकं तु विषयाभ्यासयोगतो धर्मानुष्ठानतया बोध्यम् । ततश्च वक्ष्यमाणतात्त्विकसम्यग्दर्शन-ज्ञान-चारित्राराधनञ्च भावाभ्यासयोगतो धर्मानुष्ठानमवसेयमित्यन्ये । यथोक्तं उपदेशपदे —> अण्णे भणंति तिविहं सययं-विसय-भावयोगओ णवरं । धम्मम्मि अणुट्ठाणं जहुत्तरपहाणरूवं तु ॥१९०॥ <— इति । एतद्विस्तरस्तु सोदाहरणं तद्वृत्तितो ज्ञेयः । जिनभवनकारणस्येति । उपलक्षणात् जिनबिम्बादिकारणस्येत्यपि बोध्यम्, अन्यायोपात्तवित्तकारितजिनबिम्बादेरपि निषिद्धत्वात्, तदुक्तं विवेकविलासे —> अन्यायद्रव्यनिष्पन्ना, परवास्तुदलोद्भवा । हीनाधिकाङ्गी प्रतिमा स्व-परोन्नतिनाशिनी ॥ <— [ ] इति । शास्त्राज्ञाशुद्धत्वात् = आगमोक्तजिनप्रासादादिकारकाधिकारिविशेषणसम्पादनप्रयुक्तपरिशुद्धिकलितत्वात् ।

इतिः अधिकारिविशेषणसमाप्त्यर्थं, तदुक्तं हलायुधकोशे —> इतिशब्दः स्मृतो हेतौ प्रकारादिसमाप्तिषु ॥ <— [१/

**ગાથાર્થ** - જે ન્યાયોપાર્જિત ધનનો માલિક હોય તથા બુદ્ધિમાન, સ્ફીતાશયવાળો તેમ જ સદાચારી હોય તથા ગુરુ વગેરેને માન્ય હોય તે દેરાસર કરાવવાનો અધિકારી બને છે [૬/૨]

## ❀ દેરાસર બનાવવાના અધિકારીને ઓળખીએ ❀

**ટીકાર્થ** - જે માણસ ન્યાયથી ઉત્પન્ન કરેલ ધનનો માલિક હોય, તેમ જ ભવિષ્યના હિતોને જાણનાર હોય, તથા જેના સુંદર ભાવો પ્રકૃષ્ટ રીતે વધેલા હોય અને અનિંદનીય આચારવાળો હોય, વળી પિતા, દાદા વગેરેને અને રાજા, મંત્રી વગેરેને તે બહુમત હોય તે માણસ દેરાસર બનાવવાનો અધિકારી બને, કેમ કે તે શાસ્ત્રાજ્ઞાથી શુદ્ધ છે મૂળ શ્લોકમા છેલ્લે 'इति' શબ્દ છે તે દેરાસર કરાવનાર અધિકારી વ્યક્તિના વિશેષણોની સમાપ્તિ અર્થમા છે (અર્થાત્ ચૈત્ય નિર્માણ કરાવનાર અધિકારી વ્યક્તિના આટલા જ વિશેષણો છે, વધુ નહિ) [૬/૨]

**વિશેષાર્થ** - દેરાસર બનાવવા સૌપ્રથમ ધનની જરૂર પડે તેથી પ્રથમ વિશેષણ તરીકે ન્યાયસંપન્નવૈભવ ગુણ જણાવ્યો અન્યાયથી મેળવેલ પૈસાથી નિર્માણ થયેલ જિનાલય વિશિષ્ટ લાભદાયી બનતુ નથી તેમ જ દેરાસર બંધાવનાર લાંબા ગાળે પોતાને પ્રાપ્ત થનાર હિતનો વિચારક ન હોય તો માતબર રકમથી તૈયાર થનાર ચૈત્યને નિર્માણ કરવાના તેને મનોરથ પણ ન જાગે કદાચ તેવી ભાવના જાગી જાય પરન્તુ ધર્મની પરિણતિ પ્રકૃષ્ટ રીતે વધી ન હોય તો આયવા મંડેલ દેરાસર વધુ ખર્ચા વગેરે થતા અધૂરુ મૂકી દે માટે ત્રીજુ વિશેષણ પણ આવશ્યક છે તે જ રીતે જિનાલય બંધાવનાર દુરાચારી હોય તો તેનાથી તૈયાર થયેલ જિનગૃહ લોકોને વિશિષ્ટ ભક્તિમા નિમિત્ત બની ન શકે માટે 'સદાચારી' આવુ ચોથુ વિશેષણ પણ જરૂરી છે તે જ રીતે દેરાસર બંધાવનાર વ્યક્તિ તેના પિતા, દાદા વગેરેને માન્ય ન હોય તો દેરાસર નિમિત્તે ઘરમા ઝઘડો થવા પણ સંભવ છે અને રાજા, મંત્રી વગેરેનો તે દ્રોહી હોય તો તૈયાર થયેલ દેરાસર પણ ચિરસ્થાયી

१ मुद्रितप्रतौ —> 'कारणे'त्यादि <— इदं नास्ति ।

**कारणविधानमेतच्छुद्धा भूमिर्दलञ्च दार्वादि । भृतकानतिसन्धान स्वाशयवृद्धिः समासेन ॥६/३॥**

कारणे = निर्वर्त्तनप्रयोजकव्यापारे विधान **एतत्** विधिद्वारराशिरिष । **शुद्धा भूमि** वक्ष्यमाणा, **दल च दार्वादि** = दारुप्रभृति । भृतकाना = कर्मकराणा अनतिसन्धान = [1]अप्रपञ्चन, स्वाशयस्य = शुभपरिणामस्य वृद्धि **समासेन** = सङ्क्षेपेण ॥६/३॥ तत्र शुद्धभूमिस्वरूप तावदाह —> **'शुद्धा त्वि'**त्यादि ।

**शुद्धा तु वास्तुविद्याविहिता सन्यायतश्च योपात्ता । न परोपतापहेतुश्च सा मुनीन्द्रैः[2] समाख्याता ॥६/४॥**

**शुद्धा तु** = शुद्धा पुन भूमि वास्तुविषया या [3]विद्या तया विहिता = समर्थिता अनिराकृतेति यावत् ।

**कल्याणकन्दली**

८८७] तथापि शुभस्वजनादिगुणवैशिष्ट्यमवगन्तव्य सामर्थ्यत , **पञ्चाशके** जिनभवनकारणाधिकारिण —> 'अहिगारी उ गिहत्थो सुहसयणो वित्तसजुओ कुलओ । अक्खुद्दो धिइबलिओ मइम तह धम्मरागी अ ॥ गुरुपूयाकरणरई, सुस्सूसाइगुणसगओ चेव । रायाहिगयविहाणस्स धणियमाणापहाणो य ॥ <— [७/४-५] इत्येव मूलकारैरेव निर्देशादिति ध्येयम् । **कथारत्नकोशे** च **देवभद्रसूरिभिः** —> अहियारी य इह च्चिय निम्मलकुलसभवो विभवभागी । गुरुभत्तो सुहचित्तो अचत धम्मपडिबद्धो ॥ बहुसुहिसयणो सुस्सूसपमुहगुणसगओ विसुद्धमई । आणापहाणचिट्ठो दढव्वो जिणहरविहाणे ॥ <— [पृ ६७-गा ३/४] इत्युक्तम् । एतादृशाधिकारिकारितजिनभवनस्य महागुणत्वात्, यथोक्त **पञ्चाशके** —> एसो गुणड्ढिजोगा अणेगसत्ताण तीइ विणिओगा । गुणरयणवियरणेण त कारिता हिय कुणइ ॥ त तह पवत्तमाण दट्ठु केइ गुणरागिणो मग्ग । अण्णे उ तस्स बीय सुहभावाओ पवज्जति ॥ <— [७/६-७] इति ॥६/२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> शुद्धा भूमि , दल दार्वादि, भृतकानतिसन्धान, स्वाशयवृद्धिश्च एतत् समासेन कारणविधानम् ॥६/३॥ इयञ्च कारिका **उपदेशरहस्यवृत्त्यादौ** [गा.१६१ वृ.पृ २८१] समुद्धृता वर्तते । एतदर्थानुपातिनी गाथा **स्तवपरिज्ञायां** —> जिणभवणकारणविही सुद्धा भूमी दल च कट्ठाइ । भियगाणइसधाण सासयवुड्ढी समासेण ॥३॥ <— इत्येव वर्तते ।

**निर्वर्त्तनप्रयोजकव्यापारे** = जिनभवननिर्वर्त्तनस्य य प्रयोजक कर्ता तस्य कर्तव्ये **एषः विधिद्वारराशिः** = विधि-प्रतिषेधात्मकाना द्वाराणा समूह । दल = जिनभवनोपादानकारणमिति वक्ष्यते [६/७] अग्रे । इय द्वारगाथाऽनुपदमेव स्पष्टीभविष्यति ॥६/३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> सा तु मुनीन्द्रै शुद्धा [भूमि ] समाख्याता या वास्तुविद्याविहिता सन्न्यायतश्च उपात्ता न च परोपतापहेतु ॥६/४॥ इय कारिका **धर्मसङ्ग्रहवृत्त्यादौ** [गा.६८] समुद्धृता । एतदनुसारेण **भक्तिद्वात्रिंशिकायामपि** टीकाकृता —> तत्र शुद्धा महीमादौ गृह्णीयाच्छास्त्र-नीतित । परोपतापरहिता भविष्यद्भद्रसन्ततिम् ॥<— [५/३] इत्युक्तम् ।

**वास्तुविषया या विद्या तया समर्थिता,** तदुक्त **प्रतिष्ठासारोद्धारे** —> रम्ये स्निग्ध सुगन्धादि दूर्वाद्याढ्या स्वत. शुचिम् । जिनजन्मादिना वास्ये स्वीकुर्याद् भूमिमुत्तमाम् <— ॥१८॥ तादृशभूम्यलाभे तु वास्तुविद्यया **अनिराकृता** ग्राह्या इति यावत् तात्पर्यम् । उपदेशप्रासादेऽपि —> भव्येऽहनि शुभे क्षेत्रे प्रासादो विधिपूर्वकम् । मानादिदोषमुक्तेन कार्यते पुण्यशा-

ન બની શકે માટે દેરાસર બનાવવાના અધિકારીના પાચેય વિશેષણો ઉચિત છે શાસ્ત્રકારોની કેવી દીર્ઘ અને ઉમદાદષ્ટિ હોય છે ! તેનો આના દ્વારા આછો ખ્યાલ આવી શકે છે [૬/૨]

દેરાસર કરાવવાની વિધિને મૂલકારશ્રી બતાવે છે કે —

**ગાથાર્થ** - શુદ્ધ ભૂમિ, લાકડા વગેરે ઉપાદાન કારણ, કારીગરોને ન ઠગવા અને શુભ પરિણામની વૃદ્ધિ-આ દેરાસર કરાવવાની સક્ષેપથી વિધિ છે [૬/૩]

**ટીકાર્થ** - દેરાસરને નિર્માણ કરવામા પ્રયોજક કર્તાના કાર્યોના વિધાનોના દ્વારોનો આ સક્ષેપથી સમૂહ છે કે - [૧] આગળ કહેવામા આવશે તે મુજબ શુદ્ધ ભૂમિ, [૨] લાકડા વગેરે ચૈત્યઉપાદાન કારણો, [૩] કારીગરોને [સોમપૂરાઓને] ઠગવા નહિ, [૪] શુભ પરિણામની વૃદ્ધિ [૬/૩]

આ દ્વારા ગાથા છે તેમાથી પ્રથમ દ્વાર શુદ્ધ ભૂમિના સ્વરૂપને મૂલકારશ્રી બતાવે છે કે —

**ગાથાર્થ** - તે ભૂમિ મુનીન્દ્રોએ શુદ્ધ જણાવેલી છે કે જે વાસ્તુવિદ્યાથી વિહિત છે અને સમ્યક્ ન્યાયથી ગ્રહણ કરેલ છે તથા જે અન્યને પીડાનુ કારણ ન બને [૬/૪]

## દેરાસરની ભૂમિ કેવી જોઈએ ?

**ટીકાર્થ** - પરમજ્ઞાની પુરુષોએ દેરાસરસબધી તે ભૂમિને શુદ્ધ કહેલી છે કે જે વાસ્તુવિષયક વિદ્યાથી સમર્થન કરાયેલ હોય, અર્થાત

१ मुद्रितप्रतौ 'अवञ्चन' इति पाठान्तरम् । २. 'जिनेन्द्रै' इति ह प्रतौ मुद्रितप्रता च पाठ तथापि योगदीपिकानुसारेण 'मुनीन्द्रै' इति पाठ सम्भाव्यते । ३ ह प्रता 'विद्या तया' इति नास्ति, पाठ त्रुटित इति सम्भाव्यते ।

[1]सन्न्यायतश्च = शोभनन्यायेन या उपात्ता = गृहीता, न तु धनिकपराभवेन । न = नैव परस्य = प्रातिवेश्मिकादे उपतापहेतुश्च सा मुनीन्द्रै = परमज्ञानिभि समाख्याता ॥६/४॥

## कल्याणकन्दली

लिना ॥[स्त १३/व्या १८६] <-- इत्युक्तम् । आचारोपदेशे चारित्रसुन्दरगणिना --> शुचिप्रदेशे नि.शल्ये कुर्याद्देवालय सुधी । सौधे याता वामभागे सार्धहस्तोच्चभूमिके ॥ [२/२४] <-- इत्येवमुक्तम् । भूमिशुद्धिनिरूपण श्रीरत्नशेखरसूरिभिः श्राद्धविधिवृत्तौ --> सुस्थान पुन शल्य-भस्म-क्षारादिदोषनिषिद्धाऽऽयादिना च रहित बहलदुर्वा-प्रवाल-कुश-स्तम्ब-प्रशस्तवर्णगन्धमृत्तिका-सुस्वादुजलोद्गमनिधानादिमच्च <-- [६/१०/पृ ३१] इत्येवमकारि । धर्मसङ्ग्रहवृत्तौ --> शल्यादिरहितभूमौ स्वयसिद्धस्योपलकाष्ठा-दिदलस्य ग्रहेणन सूत्रकारादिभृतकानतिसन्धानेन भृत्यानामधिकमूल्यवितरणेन पञ्चजीवनिकायरक्षायतनापूर्व जिनभवनस्य विधापनम् <-- [ध स गा ७० पृ ३०४] इत्युक्तम् । वास्तुसारप्रकरणे --> चउवीसगुलभूमी खणेवि पूरिज्ज पुणवि सा गत्ता । तेणेव मट्टियाए हीणाहियसमफला नेया । अह सा भरिय जलेण य चरणसय गच्छमाण जा सुसइ । ति-दु-इग अगुलभूमी अहम-मज्झम-उत्तमा जाण ॥ सियविप्पि अरुणखत्तिणि पीयवइसी अ कसिणसुद्दी अ । मट्टियवण्णपमाणा भूमी नियनियवण्णसुक्खयरी ॥ <-- [१/३-४-५] इति ठक्कुरफेरुप्रोक्तमत्रानुसन्धेयम् । यथोक्तमन्यत्रापि --> शीत-स्पर्शोष्णकाले याऽत्युष्णस्पर्शा हिमागमे । वर्षासु चोभयस्पर्शा सा शुभा सर्वदेहिनाम् ॥ हस्तमात्र खनित्वाऽदौ पूरिता तेन पासुना । श्रेष्ठा समधिके पांसौ हीने हीना समे समा ॥ पदशतिशत यावच्चाम्भ.पूर्णा न शुष्यति । सोत्तमैकाङ्गुलहीना मध्यमा तत्पराऽधमा ॥ अथवा तत्र पुष्पेषु रात सत्सुपितेषु तु । समार्द्रसमशुष्केषु शुभश्रेष्ठमध्यमादिशेत् ॥ त्रि-पञ्च-सप्तदिवसैरस्तत्रीह्यादिरोहणात् । उत्तमा मध्यमा हीना विज्ञेया त्रिविधा मही ॥ व्याधि वल्मीकिनी नैस्व्य शुषिरा स्फुटिता मृतिम् । दत्ते भू शल्ययुग दु ख ज्ञेय तु यत्नत ॥ <-- [श्राद्धविधिप्रकाश-६-गाथा-१२ वृत्ति-पृ ३१] । तदुक्त कल्याणकलिकाया --> भूमि सुलक्षणा ज्ञात्वा, तत्र वास्तु निवेशयेत् । तेन कारक-कर्तृणा भवेदुदयसिद्धये ॥१८॥ <-- इति । बीजवपनत भूमिपरीक्षा चैव ज्ञेया --> 'फालकृष्टेऽथवा देशे, सर्वबीजानि वापयेत् । त्रि-पञ्च-सप्तरात्रेण यत्र रोहन्ति तान्यपि ॥१॥ ज्येष्ठोत्तम-कनिष्ठा भू वर्जयेदितरा सदा । पञ्चगव्यौषधीजले परीक्षित्वाऽथ सेचयेत् ॥२॥ <-- [ ] जलप्लवेन भूमिपरीक्षा त्वेव विज्ञेया --> उदगादिप्लवमिष्ट विप्रादीना प्रदक्षिणेनैव । विप्र सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम् ॥ <-- [५३/९१] --> भूमयो ब्राह्मणादीना या प्रोक्ता वास्तुकर्मणि । ता एव तेषा शस्यन्ते, देवायतनेष्वपि ॥[५६/७] <-- इति बृहत्संहितायां वराहमिहिरः । शल्यादिदूषिता भूमिस्तु निषिद्धा । तदुक्त कल्याण-कलिकाया --> सुलक्षणेऽपि भूभागे, शल्यादिदोषदूषिते । नोदयस्तत्र तेनादौ, शल्यमुद्ध्रियते बुधै <-- ॥१९॥ इति ।

शल्यस्य दोषावहत्व तु बृहत्संहितायां वराहमिहिरेण --> धनहानिर्दारुमये, पशुपीडारुग्भयानि चास्थिकृते । लोहमये शस्त्रभय, कपालकेशेषु मृत्यु स्यात् ॥ अङ्गारे स्तेनभय भस्मनि च विनिर्दिशेत् सदाऽग्निभयम् । शल्य हि मर्मसस्थ सुवर्ण-रजतादृतेऽत्यशुभम् । मर्मण्यमर्मगो वा रुणद्ध्यर्थागम तुषसमूह । अपि नागदन्तको मर्मसस्थितो दोषकृद् भवति ॥ <-- [बृ स ] इत्येवमुक्तम् । --> तत्र यजमानाङ्गकण्डूयनादिना क्षेत्रे शृगालादिप्रवेशेन वा लग्नेन वा ध्वजाद्यायैर्वा कचटतपसहयजनैव-र्भिर्वर्णै प्रश्नैर्वा शल्य जानीयात् <-- [भूपरीक्षा-पृ १०] इति निर्वाणकलिकायां पादलिप्तसूरयः । भूमिशल्यदोषपरिहार --> जानुमात्र खनेद् भूमिमथवा पुरुषोन्मिताम् । अध पुरुषमात्रात्तु न शल्य दोषद गृहे ॥ जलान्तकस्थित शल्य, प्रासादे दोषद नृणाम् । तस्मात् प्रासादिकी भूमि खनेद्यावज्जलान्तिकम् ॥ <-- [ ] इत्येव ज्ञेय । आचारदिनकरे च --> क्षेत्रशुद्धि-युक्तिर्यथाशुद्धमृत्तिकापर्यन्त भूमिखनन, तत काष्ठास्थि-चर्म-केश-नख-दन्त-तृणामेध्यावकराणा दूरतोऽपसारण, तत्र च गारसुरभि-मृत्स्नानपरिक्षेप तत उपरि गोमूत्र-गोमयस्थापन <-- [१४८] इत्याद्युक्तम् । विस्तरतस्तु भूमिशल्य-तदुद्धारादिकञ्च विषय-विलास-प्रश्नविद्या-राजवल्लभ-विश्वकर्मप्रकाश-ज्योतिर्निबन्धप्रभृतिग्रन्थेभ्योऽवसेयम् । तपस्विजनोचितप्रदेशे जिनालयकारणे तत्स्फातिमद् भवति, अनुचितप्रदेशे जिनभवनविधाने तु न तद्वृद्धि प्रत्युत शासनमालिन्यादिदोषवृन्दोपनिपात , तदुक्त पञ्चा-शके --> अप्पदेसमि ण वुड्ढी कारवणे जिणघरस्स ण य पूया । साहूणमणणुवाओ, किरियाणासो उ अववाए ॥ सासणगरिहा लोए, अहिगरण कुत्थियाण सपाए । आणादीया दोसा, ससारणिबधणा घोरा ॥ कीलादिसल्लजोगा, होति अणिव्वाणमादिया दोसा । एएसि वज्जणट्ठा, जइज्ज इह सुत्तविहिणा उ ॥ <-- [७/११-१२-१३] इति । इयञ्च द्रव्यतो भूमिशुद्धिरवसेया । भावतो भूमिशुद्धिमाह- न तु धनिकपराभवेन गृहीता, नेव प्रातिवेश्मिकादेः उपतापहेतुश्चेति । द्विविधाऽपि भूमिशुद्धि

નિષિદ્ધ કરેલ ન હોય તે શુદ્ધ જાણવી. વળી, ઉચિત ન્યાયની પદ્ધતિથી જે જમીન ખરીદાયેલ હોય, નહિ કે ધનિકોના પરાભવથી. તેમ જ પાડોશી વગેરેને પીડાનો હેતુ ન બને તે જમીન શુદ્ધ જાણવી [૬/૪]

[1] 'सन्न्यायत = सुशोभनन्यायेन' इति मुद्रितप्रतौ पाठ । मूलानुसारेण स चाशुद्ध प्रतिभाति ।

किमित्येवमुपदिश्यते ? इत्याह –> 'शास्त्रे'त्यादि ।

**शास्त्रबहुमानतः खलु सच्चेष्टातश्च धर्मनिष्पत्तिः । परपीडात्यागेन च विपर्ययात्पापसिद्धिरिव ॥६/५॥**

शास्त्रस्य = प्रकृतविध्युपदेशकस्य वास्तुशास्त्रादे बहुमानत खलु = बहुमानादेव, **सच्चेष्टातश्च** = 'उत्पन्न-पराभिभवत्यागप्रधानोद्यमाच्च, परपीडाया = परोपतापस्य त्यागेन भाविनोऽनुत्पादेन **च धर्मनिष्पत्ति** भवति । **विपर्ययात्** = उक्तविपरीतहेतुत्रयात् शास्त्राऽबहुमानाऽसच्चेष्टा-परपीडालक्षणात् पापस्य सिद्धि = उत्पत्ति **इव**, यद्विपर्यय पापहेतु स धर्म्महेतुरिति न्यायगति ॥६/५॥

**कल्याणकन्दली**

**स्तवपरिज्ञाया** –> दव्वे भावे अ तहा सुद्धा भूमी पएसऽकीला य । दव्वेऽपत्तिगरहिआ अन्नेसि होइ भावे उ ॥४॥ <– इत्येव समासतो वर्णिता । **कथारत्नकोशे**ऽपि –> एत्थ विही पुण सुद्धा दव्वे सल्लाइवज्जिया भूमी । भावे य परापत्तियरहिया पढम निरूवेज्जा ॥ वेसा-धीवर-जूयारमाइदुगुच्छणिज्जजणरहिए । गिहिसाहूण सद्धम्मबुद्धिजणगे पएसम्मि ॥ <– [पृ ६७/ गा ५/६] इत्युक्तम् ॥६/४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> शास्त्रबहुमानत खलु सच्चेष्टातश्च परपीडात्यागेन च धर्मनिष्पत्ति , विपर्ययात् पापसिद्धि इव ॥६/५॥ इय कारिका **षष्टिशतकवृत्त्यादौ** [गा ४५] समुद्धृता ।

**शास्त्रबहुमानत** इति । धर्मनिष्पत्तिरित्यनेनाऽग्रेऽन्वय । तदुक्त मूलकारैरेव **योगबिन्दौ** –> शास्त्रे भक्तिर्जगद्वन्द्यैर्मुक्तेर्दूती परोदिता । अत्रैवेयमतो न्याय्या तत्प्राप्त्यासन्नभावत ॥२३०॥ <– इति । इदश्च सामान्यत । प्रकृते **वास्तुशास्त्रादेः बहुमानतः** । अत एव तदनुल्लङ्घनेन प्रवृत्ति , तदुक्त **प्रतिष्ठासारोद्धारे** –> जैन चैत्यालय चैत्यमुत निर्मापयन् शुभम् । वाञ्छन्स्वस्य नृपादेश्च वास्तुशास्त्र न लङ्घयेत् ॥१७॥ <– इति । **सचेष्टात** इति । तदुक्त **श्राद्धदिनकृत्ये** –> 'ववहारसुद्धी धम्मस्स मूल सव्वन्नु भासए <– [१५९] । **शास्त्राऽबहुमानेत्यादि** । अत एवोक्त **योगबिन्दौ** –> यस्य त्वनादर शास्त्रे तस्य श्रद्धादयो गुणा । उन्मत्तगुणतुल्यत्वान्न प्रशसास्पद सताम् <– ॥२२८॥ <– इति । एवमसचेष्टाया अपि पापजनकत्व, अशुभयोगस्य दुरितबन्धहेतुतया **कर्मग्रन्थादौ** उपदिष्टत्वात् प्रसिद्धमेव ।

शारीरिकदु खरूपा मनोऽप्रीतिरूपा वा परपीडा तु धर्मार्थिना सर्वप्रयत्नेन त्याज्या । अत एव श्री**महावीरो**ऽपि पराप्रीति-परिहारार्थ वर्षाकालेऽपि विहतवान् । तदुक्त **स्तवपरिज्ञाया** –> धम्मत्थमुज्जएण्ण सव्वस्साऽपत्तिय न कायव्व । इय सजमोऽवि सेओ एत्थ य भयव उदाहरण ॥५॥ सो तावसासमाओ तेसि अपत्तिय मुणेऊण । परम अबोहिबीय तओ गओ हतऽकाले वि ॥६॥ <– इति । परपीडापरिहारोपाये सत्यपि तदपरिहारे पराऽप्रीतिपरिहारप्रयत्नप्रतिपादनलक्षण-शास्त्रार्थबाधनात् पापकर्मबन्ध एव स्वस्यापि, –> निमित्तभावत तस्य सत्युपाये प्रमादत । शास्त्रार्थबाधनेनेह पापबन्ध उदाहत ॥ <– [७/६] इति **अष्टक-प्रकरण**वचनात् । यथोक्त टीकाकृताऽपि **भक्तिद्वात्रिंशिकाया** –> अप्रीतिर्नैव कस्यापि कार्या धर्मोद्यतेन वै । इत्थ शुभानुबन्ध स्यादत्रोदाहरण प्रभु ॥<– [५/४] इति । दोषायतनत्वेन परपीडाया. त्यागे एव शुद्धि , अन्यथा भजना, तदुक्त **निशीथभाष्ये** –> जे जे दोसायतणा ते सुत्ते जिणवरेहि पडिकुट्ठा । ते खलु अणायरतो सुद्धो, इतरो उ भइयव्वो ॥४१०५॥<– इति ।

**यद्विपर्ययः पापहेतुः स धर्महेतुरिति** यथा अहिंसाविपर्ययो हिंसा पापहेतुरिति अहिसा हि धर्महेतु । युक्तश्चैतत्, अन्वय-

–> 'શા માટે આવો ઉપદેશ અપાય છે ?' <— આ શકાનુ સમાધાન કરતા મૂલકારશ્રી ફરમાવે છે કે —

<u>**ગાથાર્થ**</u> - શાસ્ત્રબહુમાનથી જ અને સારી ચેષ્ટાથી તથા પરપીડાના પરિહારથી ધર્મ ઉત્પન્ન થાય છે, જેમ તેના વિપરીતપણાથી પાપ ઉત્પન્ન થાય છે (તેમ આ સમજવુ ) [૬/૫]

## તાત્ત્વિક ધર્મની ત્રણ શરત

<u>**ટીકાર્થ**</u> - [૧] પ્રસ્તુત વિધિ-વિધાનના ઉપદેશક વાસ્તુશાસ્ત્ર વગેરેના બહુમાનથી જ ધર્મ ઉત્પન્ન થાય છે તથા [૨] દેરાસરની જમીન ખરીદવાથી ઉત્પન્ન થયેલ અન્યવ્યક્તિસબધી પરાભવના પરિહારનો પ્રધાનપણે પુરુષાર્થ કરવાથી ધર્મ ઉત્પન્ન થાય છે અને [૩] અન્યની પીડાના પરિહારથી તથા ભવિષ્યમા પીડાને ન ઉત્પન્ન કરવાથી ધર્મની નિષ્પત્તિ થાય છે ઉપરના ત્રણ હેતુઓથી વિપરીત [૧] શાસ્ત્ર અબહુમાન, [૨] ખરાબ ચેષ્ટા અને [૩] પરપીડા આ ત્રણ હેતુથી જેમ પાપ ઉત્પન્ન થાય છે તેમ આ સમજવુ જેનાથી (= શાસ્ત્રબહુમાનથી) ઊલટુ (= શાસ્ત્ર અબહુમાન) કરવાથી પાપ થાય તે (= શાસ્ત્રબહુમાન) ધર્મનો હેતુ બને - એ ન્યાયની = નિયમની અહીં પ્રવૃત્તિ સમજવી [૬/૫]

<u>**વિશેષાર્થ**</u> - આ શ્લોકમા ખૂબ જ ગભીર વાત શ્રીમદ્જીએ કરેલી છે વાસ્તુશાસ્ત્ર દ્વારા જે ભૂમિ દેરાસર માટે નિષિદ્ધ થયેલ ન હોય તેવી ભૂમિ દેરાસર માટે લેવાની કાળજી રાખવાનુ કારણ છે વાસ્તુશાસ્ત્ર ઉપર બહુમાન શાસ્ત્રબહુમાન ન હોય તો દેરાસર માટે શાસ્ત્રવિહિત

१ 'इत्पन्न ' इति पाठान्तरम् ।

अन्यदपि तदा धर्मसिद्ध्यङ्गमाह - 'तत्रे'त्यादि ।

तत्राऽऽसन्नोऽपि जनोऽसम्बन्ध्यपि दान-मान-सत्कारैः । कुशलाशयवान् कार्यो नियमाद् बोध्यङ्गमयमस्य ॥६/६॥

तत्र = जिनभवनारम्भे आसन्नोऽपि = तद्देशवर्ती जनः असम्बन्ध्यपि = स्वजनादिसम्बन्धरहितोऽपि, सोऽपि दानं = अन्न-वस्त्रादिवितरणं, मानं = अभ्युत्थानादिक्रिया, सत्कारं = आसनप्रदानादिव्यापारं, तैः कृत्वा कुशलाशयवान् = धन्योऽयं जैनो धर्मो यत्रैतादृशमौचित्यमिति प्रशंसाभिव्यङ्ग्यशुभपरिणामयुक्तः कार्यः । नियमात् = निश्चयेन अयं = कुशलाशयः अस्य जनस्य बोध्यङ्गं = बोधिहेतुः । अतश्च परोपकारगुणात् कारयितुः महांल्लाभः¹ ॥६/६॥

कल्याणकन्दली

व्यतिरेकेण संसारापवर्गयोः तुल्यहेतुकत्वात् । इत्थमेव → जे जत्तिया य हेऊ भवस्स, ते चेव तत्तिया मुक्खे । गणणाईया लोगा दुण्ह वि पुण्णा भवे तुल्ला ॥५३॥← इति ओघनिर्युक्तिवचनमपि सङ्गच्छते, विधि-निषेधयोः तुल्यसङ्ख्यत्वात् ॥६/५॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् → तत्र असम्बन्ध्यपि आसन्नोऽपि जनः दान-मान-सत्कारैः कुशलाशयवान् कार्यः [यतः] अयं नियमात् अस्य बोध्यङ्गम् ॥६/६॥ इयं कारिका प्रतिमाशतकवृत्त्यादौ [गा. ३१ वृ. पृ. ५१३] समुद्धृता । एतदनुसारेण भक्तिद्वात्रिंशिकायामपि → आसन्नोऽपि जनस्तत्र मान्यो दानादिना यतः । इत्थं शुभाशयस्फात्या बोधिवृद्धिः शरीरिणाम् ॥ [५/५] ← इत्युक्तम् । स्वजनादिसम्बन्धरहितोऽपि = स्वज्ञाति-जाति-कुलादि-सम्बन्धशून्योऽपि ।

प्रशंसाभिव्यङ्ग्यशुभपरिणामयुक्तः कार्य इति । इत्थञ्च दानादिना धर्मोन्नतिर्भवति तथा स्वस्य तृष्णाविच्छेदात् अपरिग्रहव्रतस्य दृढता भवति ।

कुशलाशयः बोधिहेतुः = बोधिलाभहेतुः, 'जिनधर्मप्राप्तिः बोधिलाभः' [१/१६ पृ. ३२] इति प्रागुक्तम् । तदुक्तं पञ्चाशकेऽपि → जो च्चिय सुहभावो खलु सव्वण्णुमयम्मि होइ परिसुद्धो । सो च्चिय जायइ बीयं, बोहीए तेगणाणं ॥ ← [७/८] इति । इदञ्च नैश्चयिकं परम्परानिपारलौकिकं फलमावेदितम् । अस्य चोपलक्षणत्वात् व्यावहारिकमपि तत्फलमुन्नेयम्, यथा नूतनयात्रिकाणां साधुप्रभृतीनाञ्च स कुशलाशयवान् जनः जिनालयोपाश्रयादिपथप्रदर्शको भवति, काले साध्व्यादीनां भक्तिकारको भवति अवसरे च जिनगृहसंरक्षणेऽपि यतते, चैत्यनाशकश्च नैव सञ्जायते । ततश्चाऽऽय-व्ययाऽऽलोचनपूर्वकारी लोकोत्तरतत्त्वसम्प्राप्तिव्यवस्थितः चैत्यनिर्मापको विशेषतोऽत्र गुरुणा सद्धर्मदेशनादिना प्रवर्तनीयः । इत्थमौचित्यगुणपालनेन द्रव्यस्तवस्यापि भावस्तवहेतुताऽनाविला, अन्यथा तत्त्वतो द्रव्यस्तवत्वमपि न स्यात्, यथोक्तं स्तवपरिज्ञायां → जं पुण एयविउत्तं एगंतेणेव

જમીન લેવાના પરિણામ જ ન જન્મે. શાસ્ત્રનું અબહુમાન, અનાદર, આશાતના જેમ પાપજનક છે તેમ શાસ્ત્રનું બહુમાન, આદર, વિનય ધર્મજનક છે. આમ સર્વત્ર પ્રવૃત્તિપૂર્વે 'આ કાર્ય શાસ્ત્રવિહિત છે ને ! ?' આ બાબતનો અધ્યવસાય ધર્મ ઉત્પન્ન કરાવે છે. તેમ જ દેરાસર માટેની જમીન ખરીદવાના લીધે જમીન વેચનાર શ્રીમંતને અથવા અન્ય કોઈ શ્રીમંતને પોતાનો પરાભવ લાગે તો તે પરાભવને દૂર કરવા પૂરેપૂરો પ્રયત્ન કરવો. આ સત્પ્રવૃત્તિ કે જે ધર્મને ઉત્પન્ન કરે છે તેનાથી ઊલટું અન્યનો પરાભવ કરવાનો જ પરિણામ ચૈત્યભૂમિને ખરીદવા પાછળ રહેલો હોય તો પાપ કર્મ બંધાય છે. કિયા ધર્મની, બંધ પાપનો. તથા જે જગ્યાની બાજુમાં જ હોસ્પીટલ, દવાખાનું હોય કે કાયમ માંદા-વૃદ્ધો વગેરે રહેતા હોય અને તે જગ્યાએ દેરાસર બંધાવવાથી આરતી વગેરે સમયે ઘંટનાદ વગેરે દ્વારા દર્દીઓ-વૃદ્ધો વગેરેને અપ્રીતિ-પીડા થાય તેવું હોય તો તેવી જગ્યાના બદલે અન્ય સ્થાને દેરાસર બાંધવું, જેથી કોઈને દેરાસરના નિમિત્તે તકલીફ ઉભી ન થાય. તો જ તાત્ત્વિક ધર્મ પ્રગટે. બાકી પરપીડામાં નિમિત્ત બનવાથી દેરાસર બંધાવનાર પણ પાપ બાંધે તથા અન્ય દર્દી, વૃદ્ધો વગેરે દેરાસર ઉપર અરુચિ કરીને પાપ બાંધે-બોધિદુર્લભ બને. આ વિવેકદૃષ્ટિ દેરાસરની જમીન ખરીદતી વખતે ખ્યાલમાં રાખવી જોઈએ. એટલું જ નહિ, દરેક કાર્ય કરતી વખતે આ ત્રણ બાબતનો ખ્યાલ રાખવો જોઈએ. આ ત્રણેય ભેગા થાય તો જ તાત્ત્વિક ધર્મ ઉત્પન્ન થાય છે. [૬/૫]

તે અવસરે ધર્મની સિદ્ધિનું = નિષ્પત્તિનું અંગ = કારણ બનનાર અન્ય વસ્તુને પણ મૂલકારશ્રી જણાવે છે કે —

<u>ગાથાર્થ</u> - તે અવસરે અસબંધી એવા પણ દેરાસરની નજીક રહેનાર માણસને દાન, માન, સત્કાર વડે કુશલાશયવાળા કરવા જોઈએ, કારણ કે કુશલાશય નિયમા તેને બોધિનું કારણ બને છે. [૬/૬]

### ❀ 'વાહ ! કેવો બેનમુન જૈન ધર્મ !' ❀

<u>ટીકાર્થ</u> - જે માણસ દેરાસરની નજીક રહેતા હોય તે કદાચ સ્વજન વગેરે સગપણથી રહિત હોય તો પણ દેરાસર બનાવવાના અવસરે તેને અન્ન, વસ્ત્ર વગેરેના દાનથી, અભ્યુત્થાન (= ઉભા થઈને સામે લેવા જવું) વગેરે માનદ્યોતક પ્રવૃત્તિ દ્વારા અને (તે આવે ત્યારે બેસવા માટે) આસન આપવું વગેરે સન્માનથી કુશલાશયવાળો કરવો. અર્થાત્ તેવા પ્રકારના વ્યવહારથી તે 'વાહ ! ધન્ય છે આ જૈન ધર્મને, જ્યાં આવા પ્રકારનું ઔચિત્ય છે ! કેવો બેનમુન જૈન ધર્મ !' આવી પ્રશંસા કરે, જેનાથી ખ્યાલ આવે કે તેના હૈયામાં જૈન ધર્મ પ્રત્યે શુભ પરિણામ પ્રગટેલ છે. આવા કુશલ આશયવાળો તેને કરવો. નિશ્ચયથી આ કુશલાશય તે માણસને ભવાંતરમાં જૈનધર્મપ્રાપ્તિનો

1. ह प्रतौ 'महालाभ' इति पाठान्तरम् ।

'दलञ्च दार्वादि (६/३) इत्युक्तम् । तत्राह —> 'दलमि'त्यादि ।

**दलमिष्टकादि तदपि च शुद्धं तत्कारिवर्गतः क्रीतम् । उचितक्रयेण यत्स्यादानीतञ्चैव विधिना तु ॥६/७॥**

**दल** = जिनभवनोपादान **इष्टकादि**, आदिना पाषाणादि, **तदपि (च) शुद्ध**. 'कीदृक् शुद्धम् ?' [1]यत् तत्कारिणा = [2]स्वप्रयोजनसिद्ध्यर्थमेवेष्टकादिकरणशीलाना पुरुषाणा वर्गत = समूहात् **उचितक्रयेण** = उचितमूल्येन **क्रीत** = स्वीकृत **तु** = पुन **विधिना** लोकशास्त्रदृष्टेन भारवाहकाऽपरिपीडनादिलक्षणेन **आनीतञ्चैव** ॥६/७॥

**कल्याणकन्दली**

भावसुण्ण ति । त विसयम्मि वि ण तओ भावत्थयाऽहेउओ नेय ॥ <— [३८] इति । यत् = अनुष्ठान, एतद्वियुक्त = औचित्यविकल, भाव = बहुमान, विषयेऽपि = वीतरागेऽपि विधीयमान, तक = द्रव्यस्तव , शिष्ट स्पष्टम् ॥६/६॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> इष्टकादि = दलम् । तदपि च शुद्ध, यत् तत्कारिवर्गत उचितक्रयेण क्रीत स्यात् विधिना तु आनीतञ्चैव ॥६/७॥ इयञ्च कारिका **पञ्चाशकवृत्ति-[७/१७]-धर्मसङ्ग्रहवृत्ति[६८]-प्रतिमाशतकवृत्त्यादौ** [गा ६७ पृ ३७९] अतिदिष्टा । एतदनुसारेण **भक्तिद्वात्रिंशिकायामपि** —> इष्टकादि दल चारु वा सारवन्नवम् । गवाद्यपीडया ग्राह्य मूल्यौचित्येन यत्नत ॥ <— [५/६] इति प्रोक्तम् । **तदपि** = इष्टकादिकमपि **च शुद्ध** इति विधेयनिर्देश । उद्देश्यनिर्देशमाह यदिति **स्वप्रयोजनसिद्ध्यर्थमेव** = कुलक्रमायाताऽऽजीविकासाधनप्रवृत्तिनान्तरीयक-धनान्नादिप्राप्तिलक्षणोद्देश्यनिष्पत्तये स्वय एव **इष्टकादिकरणशीलाना** = विधेयतया इष्टकादिषु प्रवृत्ताना, न तु श्रावकादिभि तन्निष्पादने प्रेरिताना, **समूहात्**, न त्वेकस्मादेव तादृशपुरुषात्, यावदावश्यकेष्टकादिक्रयणम्, पश्चात् विशेषत आरम्भान्तरप्रसङ्गात् । तदपि **उचितमूल्येन** न त्वाच्छोटिकया, अतिमस्तकस्फोटिकया, वञ्चनादिना वा । **विधिना लोकशास्त्रदृष्टेन** = लोकाविरोधिना शास्त्राऽनिषिद्धेन च **भारवाहकाऽपरिपीडनादिलक्षणेन** आदिपदेन अकालोत्थापनपरिहार-योग्यमूल्यार्पणादिग्रहणम् । न च बलीवर्दादिमारणादिनोपनीतम् । यदुक्त **स्तवपरिज्ञाया** —> नो अविहिणोवणीय सय च काराविय जन्नो ॥<— [८] अन्यथाऽप्रीति-प्रवचनापभ्राजनादिदोष स्यात् ॥६/७॥

હેતુ બને છે આથી પરોપકાર ગુણથી દેરાસર બનાવનારને મહાન લાભ છે (કેમ કે જિનશાસન પ્રત્યે અહોભાવવાળા થયેલા તે જૈનેતર લોકો જિનશાસન પ્રાપ્તિ બાદ સમ્યગ્ દર્શન, ચારિત્ર વગેરેના લાભથી મોક્ષમા જશે, તેમા નિમિત્ત બનવાનુ સૌભાગ્ય ઉદારતાથી દેરાસર બનાવનાર વ્યક્તિ મેળવે છે ) [૬/૬]

**વિશેષાર્થ** - જૈનમદિરની આસપાસ રહેનાર લોકોને દાન-માન-સન્માનથી ખુશ રાખવાથી તેઓ જૈન ધર્મ પ્રત્યે શ્રદ્ધા ઉત્પન્ન થવાના લીધે ભવાતરમા તો તે જિનશાસનમા પ્રવેશ મેળવે જ છે પરતુ આ ભવમા પણ બહારગામથી આવનાર અજાણ્યા યાત્રિકો, સાધુ, સાધ્વીજી વગેરેને દેરાસર, ઉપાશ્રય બતાવવા સામે ચાલીને આવે થાકેલા સાધુ-સાધ્વી વગેરેની ભક્તિ કરે જૈન મદિરનુ અવસરે રક્ષણ કરે અવસરે દેરાસરની દેખભાળ કરે, દેરાસરમા ચોરી ન કરે જિનાલયનો વિરોધ-વિનાશ ક્યારેય પણ ન કરે આ બધા લૌકિક લાભો પણ એમા ગર્ભિત રીતે રહેલા છે માટે દેરાસર બનાવતી વખતે, પ્રતિષ્ઠા વખતે, વાર્ષિક ધજા ચડાવવાના દિવસે, દિવાળી-પર્યુષણ વગેરે પર્વના સમયે આસપાસના લોકોને ખુશ કરવા જોઈએ મીઠા મોઢા કરાવવા જોઈએ આવુ થાય તો જૈનોના પ્રતિષ્ઠામહોત્સવ વગેરેની ઈતર લોકોમા નિદા પણ ન થાય આ બાબત ઉપર વર્તમાન કાળમા ખાસ લક્ષ્ય દેવા જેવુ છે [૬/૬]

આ ષોડશકના ૩જા શ્લોકમા 'લાકડા વગેરે દલ' આમ બીજા દ્વારનો નિર્દેશ કરેલો હતો તેનુ મૂલકારશ્રી સાતમી ગાથામા વિવેચન કરે છે કે —

**ગાથાર્થ** - ઈંટ વગેરે દલ જાણવા, તે પણ શુદ્ધ જોઈએ કે જે તેને બનાવનાર લોકોના સમૂહ પાસેથી ઉચિત કિંમતથી ખરીદેલ હોય અને વળી વિધિપૂર્વક જ લવાયેલ હોય [૬/૭]

## ❀ દલદ્વાર નિરૂપણ ❀

**ટીકાર્થ** - ઈંટ, પત્થર વગેરે દેરાસરના ઉપાદાન કારણો છે તે પણ શુદ્ધ જોઈએ 'કેવી ઈંટ વગેરે શુદ્ધ કહેવાય ?' તેનો જવાબ એ છે કે પોતાના [ધનપ્રાપ્તિ વગેરે] પ્રયોજનની સિદ્ધિ માટે જ ઈંટ વગેરે બનાવવાનો જેમનો સ્વભાવ = ધધો છે તેવા લોકોના સમૂહ પાસેથી યોગ્ય કિંમત ચૂકવીને જે ઈંટ વગેરે સ્વીકારાય તે શુદ્ધ દલ જાણવા અને વળી તે ઈંટ વગેરેને ઉપાડનાર લોકોને તકલીફ વગેરે ન પહોચે તે રીતે લોકશાસ્ત્રપ્રસિદ્ધ વિધિ-વિધાનથી તે ઈંટ-પત્થર વગેરે આવેલ હોવા જોઈએ [૬/૭]

**વિશેષાર્થ** - દલશુદ્ધિ દ્વારમા ૪ બાબત વિશેષત ઉલ્લેખનીય છે [૧] દેરાસર માટે સ્પેશીયલ ઈંટ-પત્થર વગેરે ન બનાવવા જોઈએ પોતાની મેળે, આજીવિકાના ઉદ્દેશથી, જે લોકો દેરાસરનો સકલ્પ કર્યા વિના સહજ રીતે ઈંટ વગેરે બનાવતા હોય તેવા લોકો પાસેથી જ ઈંટ વગેરે ખરીદાય [૨] તેમા પણ જો એક જ વ્યક્તિ પાસેથી દેરાસર બનાવવા માટે જરૂરી બધી જ ઈંટ વગેરે ખરીદી લેવામા આવે કે તેટલી બધી ઈંટ વગેરેનો ઓર્ડર આપવામા આવે તો પણ દેરાસરના નિમિત્તે નિષ્કારણ હિસા-આરભ થાય માટે દેરાસર બનાવવા માટે આવશ્યક ઈંટ વગેરે તેવા લોકોના સમૂહ પાસેથી લેવી અર્થાત્ જે રીતે એક સરખી સાઈઝ વગેરેનો મેળ પડે તે રીતે તેવા અનેક લોકો પાસેથી દેરાસરસબધી ઈંટ, પત્થર, આરસ, લાદી વગેરે લેવા [૩] યોગ્ય કિંમત ચૂકવીને ઈંટ વગેરે દેરાસર માટે ખરીદવી ભાવ-તાલ માટે બહુ ખેચતાણ કરીને, ઝઘડો-ગુસ્સો કરીને દેરાસરની સામગ્રી ન ખરીદવી [૪] તેમ જ મજૂરની શક્તિ મુજબ તેની પાસે

१ ह प्रता 'यत्कारिणा' इति त्रुटित पाठ । २ ह प्रता 'स्वप्रयोजनसिद्ध्यर्थञ्चेष्ट' इति पाठ ।

दलविशेषमाह –> दार्वपि चे'त्यादि ।

दार्वपि च शुद्धमिह यत्नानीतं देवतादुपवनादेः । प्रगुणं सारवदभिनवमुच्चैर्ग्रन्थ्यादिरहितञ्च ॥६/८॥

**दार्वपि च इह** = जिनभवनविधाने **शुद्ध** तद् ज्ञेयमिति गम्यम् । **यत्नानीतं देवतादीना** = देव्यादीनां **उपवन** = समीपवर्ति वनं तदादेः, प्रथमादिपदात् पुदेवग्रहः द्वितीयाऽऽदिपदात् तिर्यङ्मनुष्यसम्बन्धिकाननग्रहः । तथा **प्रगुणं** = अवक्रं, **सारवत्** = स्थिरं खादिरसारवत्, **अभिनवं** = प्रत्यग्रं, न जीर्णं, **उच्चैः** = अतिशयेन ग्रन्थ्यादिभिर्दोषैः रहितम् ॥६/८॥

दलं विधिनाऽऽनीतं इत्युक्तं (६/७) तत्र [१]विधिमेवाह –> सर्वत्रे'त्यादि ।

**कल्याणकन्दली**

मूलग्रन्थे दृष्टान्वयस्त्वेवम् –> दार्वपि च देवताद्युपवनादेः यत्नानीतं, प्रगुणं, सारवत्, अभिनवं, उच्चैः ग्रन्थ्यादिरहितञ्च इह शुद्धम् ॥६/८॥ इयञ्च कारिका धर्मसङ्ग्रहवृत्तौ[६८] समुद्धृता । प्राग्वदत्रापि उद्देश्य-विधेयभावः ऊहनीयः ।

यथोक्तं स्तवपरिज्ञायां –> कट्ठादि वि दलं इह सुद्धं जं देवताऽऽदुपवणाओ ॥ <– [८] **प्रथमादिपदात् पुदेवग्रहः द्वितीयादिपदात् तिर्यङ्मनुष्यसम्बन्धिकाननग्रहः** इति । न च श्रीहरिभद्रसूरिभिस्तु पञ्चवस्तुकवृत्तौ स्तवपरिज्ञाव्याख्याने –> 'देवताद्युपवनाद्, आदिशब्दात् श्मशानग्रहः' <– [प.व.गा.११२७ वृ.] इति व्याख्यातमिति विरोध इति शङ्कनीयम्, तथाव्याख्यानं भिन्नक्रमेण दृष्टव्यम्, इह त्वभिन्नक्रमेणेति न विरोधलेशोऽपि । इदमेवाभिप्रेत्य न्यायविशारदेनापि प्रतिमाशतकवृत्तौ स्तवपरिज्ञाव्याख्यानावसरे –> देवताद्युपवनादिना भिन्नक्रमेण श्मशानग्रहः <– [गा.६७ पृ.३७०] इत्युक्तम् । अभिन्नक्रमत्वं साजात्यापेक्षया भिन्नक्रमत्वञ्च वैजात्यविवक्षयेति भावनीयम् ।

**ग्रन्थ्यादिभिः दोषैः रहितमिति** । इदञ्चावधेयं –> उपर्युक्तप्रगुणत्व-सारवत्त्वादिगुणयुक्तमपि प्लक्षादिवृक्षकाष्ठं न गृह्णीयात्, तदुक्तं विवेकविलासे –> प्लक्षाद्रोगोदयं विद्यादश्वत्थात्तु सदा भयम् । नृपपीडा वटाज्ज्ञेया व्याधिमुदुम्बरात् ॥ लक्ष्मी-नाशकरः क्षीरी कण्टकी शत्रुभीप्रदः । अपत्यघ्नः फली तस्मादेषां काष्ठमपि त्यजेत् ॥ <– इति । बृहत्संहितायामपि –> आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय । फलिनः प्रजाक्षयकराः दारूण्यपि वर्जयेदेषाम् ॥ <– [५३/८६] इति प्रोक्तम् । विशिष्य च जिनभवनोपयोगि - विधिविशुद्धकाष्ठादिगुणसमपार्यमभिमतम् । तदुक्तं आचारोपदेशे चारित्रसुन्दरगणिना –> चैत्यं यः कारयेद् धन्यो जिनानां भक्तिभावतः । तत्परमाणुसङ्ख्यानि पल्यान्यैष सुरो भवेत् ॥ <– [६/१०] इति । धनेश्वरसूरिभिः शत्रुञ्जयमाहात्म्ये –> काष्ठादीनां जिनावासे यावन्तः परमाणवः । तावन्ति पल्यलक्षाणि तत्कर्ता स्वर्गभाग् भवेत् ॥ [सर्ग-१/४०१]' <– इत्येवमुक्तम् । अन्यत्र च –> काष्ठादीनां जिनावासे यावन्तः परमाणवः । तावन्ति वर्षलक्षाणि तत्कर्ता स्वर्गभाग्भवेत् ॥ <– [ ] इत्युक्तम् । भावविशेषमाश्रित्यात्र फलतारतम्यमवगन्तव्यम् । अत्र च परमाणुस्वरूपं –> जालान्तरगते सूर्ये यत्सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते ॥ <– [ ] इत्येवं लौकिक-मनुमन्तव्यमिति व्यक्तं उपदेशप्रासादे उपदेशतरङ्गिण्यां च [स्त.१३/व्या.१८६, उप.तर.-२/पृ.१०६] ॥६/८॥

ઈંટ, પત્થર વગેરેને ઉંચકાવવા ઢોરની જેમ તેની પાસે ભાર ન ઉંચકાવવો. તેવું કરાવવાથી જૈન ધર્મની નિંદા થાય, મજૂરના નિઃસાસા લાગે. શક્તિ કરતા વધુ ભાર ઉંચકતા તેનો મણકો વગેરે ખસી જાય તો તેને કાયમ માટે જૈન ધર્મ પ્રત્યે દ્વેષ-અરુચિ થઈ જાય. આવું ન થાય તે માટે ઉચિત રીતે ઈંટ વગેરે મજૂર પાસે ઉંચકાવવી. શાસ્ત્રકાર પરમર્ષિઓ નાનામાં નાની બાબત માટે પણ કેટલી કાળજી રાખે છે ! (અહીં ચતુર્વિધ સંઘના શ્રાવક-શ્રાવિકા વગેરેને એક સૂચન કરવાનું મન થાય કે તીર્થયાત્રા વગેરે માટે જતી વખતે બોક્ષ વગેરેની સંખ્યા ઓછી દેખાય તે માટે બહુ મોટા ભારે બોક્ષ તૈયાર કરવામાં આવે તો મજૂરને તકલીફ પડે. તેના બદલે જરૂરિયાત મુજબ નાના બોક્ષ બનાવવામાં આવે તો આર્થિક રીતે જિનશાસનને સાપેક્ષ બનાય. અસ્તુ) [૬/૭]

દલદાર સંબંધી વિશેષ વક્તવ્યને મૂલકારશ્રી જણાવે છે કે —

<u>ગાથાર્થ</u> - લાકડા વગેરે પણ દેવતા વગેરેના ઉપવન આદિથી યત્નપૂર્વક લવાયેલ હોય, સીધા હોય, સ્થિર હોય, નવા હોય અને અત્યંત ગાંઠ વગેરેથી રહિત હોય તે અહીં શુદ્ધ જાણવા. [૬/૮]

<u>ટીકાર્થ</u> - જિનમંદિર બનાવવા વિશે લાકડા વગેરે પણ તે શુદ્ધ જાણવા કે જે યત્નપૂર્વક = જયણાપૂર્વક દેવી વગેરેના સમીપવર્તી વન વગેરેમાંથી લવાયેલ હોય. મૂળ ગ્રંથમાં 'देवताद्युपवनादेः' પદમાં રહેલ દેવતાપદની ઉત્તરવર્તી પ્રથમ આદિપદથી પુરુષદેવનું ગ્રહણ કરવું. તેમ જ તે જ પદમાં બીજું આદિપદ (ઉપવનપદની ઉત્તરવર્તી) પશુ-માનવસંબંધી જંગલનું સૂચક છે. [અર્થાત્ દેવ, દેવીના ઉપવન તેમ જ પશુ, માનવના જંગલમાંથી યત્નપૂર્વક લવાયેલ લાકડા શુદ્ધ જાણવા. દેરાસર માટે સ્પેશીયલ લાકડા-ઝાડ ન ઉગાડવા.] તેમ જ તે લાકડા વાંકા-ચૂંકા ન હોવા જોઈએ અને ખદિરસાર વગેરે લાકડાની જેમ મજબૂત હોવા જોઈએ. (અર્થાત્ સાગ, સીસમ વગેરે ટકાઉ લાકડા દેરાસર માટે શુદ્ધ કહેવાય.) તથા તે લાકડા નવા હોવા જોઈએ, જૂના નહિ. વળી, ગાંઠ વગેરે દોષથી અત્યંત રહિત હોવા જોઈએ.

[१] ह.प्रतौ 'विधिमेवमाह' इति पाठान्तरम् ।

सर्वत्र शकुनपूर्वं ग्रहणादावत्र वर्त्तितव्यमिति । पूर्णकलशादिरूपश्चित्तोत्साहानुगः शकुनः ॥६/९॥

**अत्र** = जिनभवनलक्षणमहाकार्यारम्भे **सर्वत्र** इष्टकादौ **ग्रहणादौ** = ग्रहणाऽऽनयनादौ **शकुनपूर्वं** = शकुनमूलं यथा [1]स्यात्तथा **वर्तितव्यम्**, नान्यथा । कः पुनः शकुनः ? इत्याह –> **पूर्णकलश** = जलपरिपूर्णघटः तदादिरूपः, आदिना दधि-दूर्वाऽक्षत-भारोद्धृतमृत्तिकादिग्रहणम् । अयञ्च बाह्य इत्यान्तरपरिग्रहार्थं विशेषणमाह - **चित्तोत्साहानुगः** = मनःप्रत्ययानुसारी **शकुनः** । इदमुपलक्षणं [2]गुरुवचनानुमतत्वस्याऽपि, अन्यत्राऽऽत्मप्रत्यय-गुरुप्रत्यय-शकुनप्रत्ययैस्त्रिधा शुद्धस्य कार्यस्य सिद्ध्युन्मुखत्वप्रतिपादनादिति द्रष्टव्यम् ॥६/९॥ भृतकानतिसन्धानगतमाह

**कल्याणकन्दली**

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> अत्र सर्वत्र ग्रहणादौ शकुनपूर्वं वर्त्तितव्यम् इति । शकुनः पूर्णकलशादिरूपः चित्तोत्साहानुगः ॥६/९॥ इयञ्च कारिका धर्मसङ्ग्रहवृत्त्यादौ [गा ६८] समुद्धृता । **ग्रहणानयनादौ** आदिपदेन तदानयनहेतुकप्रस्थान-कथा-दिग्रहणम् । **शकुनमूलं वर्तितव्यम्, नान्यथा**, यथोक्तं –> कुर्वन्ति न हि शास्त्रज्ञाः कार्यं शकुनवारितम् <– [ ]।

**दधि-दूर्वा-ऽक्षत-भारोद्धृतमृत्तिकादिग्रहणमिति** । दधि प्रसिद्धं, दूर्वाभिधानं तृणं, अक्षतपदेन व्रीहयः, शिरोन्यस्तमृत्पिण्डस्त्र्यादिजनः, आदिपदेन नन्दि-शङ्खध्वनिप्रभृतिग्रहणम् । तदुक्तं **निशीथभाष्ये** –> नन्दीतूरं पुन्नस्स दसणं संख-पडहसद्दो य । भिंगार-छत्त-चामर एवमादी पसत्थाइं ॥३०२०॥ <– इति । **ओघनिर्युक्तिभाष्येऽपि** –> जंबू य चास-मऊरे भारद्दाए तहेव नउले अ । दसणमेव पसत्थं पयाहिणे सव्वसपत्ती ॥८४॥ समणं संजयं दंतं सुमणं मोयगा दहिं । मीणं घंटं पडागं च सिद्धमत्थं वियागरे ॥८६॥ <– [बृ क भा.१५६८] इत्युक्तम् । **बृहत्कल्पभाष्येऽपि** –> नंदीतूरं पुण्णस्स दसणं संख-पडहसद्दो य । भिंगार-छत्त-चामर-वाहण-जाणा पसत्थाइं ॥१५६७॥ <– इत्युक्तम् । **पञ्चाशकेऽपि** –> णंदादि सुहो सद्दो भरिओ कलसो य सुंदरा पुरिसा । सुहजोगाइ य सउणो कंदियसद्दादि इअरो उ ॥ <– [७/१९] इति गदितम् । **शकुनसारोद्धारेऽपि श्रीमाणिक्यसूरिभिः** –> सेतिका-शर्करोपानत्प्राभृतं व्यावहारिकं । प्रतिसीराप्रभृतयोऽभिमुखाः सर्वसिद्धये ॥ <– [अध्याय-११/गा २३] इत्युक्तम् । यथोक्तमन्यत्रापि –> गो-कन्या-शङ्ख-वाद्यं दधि-फल-कुसुमं पावकं दीप्यमानं, यानं वा विप्रयुग्मं हय-गज-वृषभं पूर्णकुम्भं ध्वजं वा । उत्खाता चैव भूमिर्जलचरयुगलं सिद्धमन्नं शवं वा, वेश्या-स्त्री-मांसपिण्डं प्रियहितवचनं मङ्गलं प्रस्थितानाम् ॥ व्रजित्वा वामदिग्भागं दक्षिणान्मधुरस्वरः । काकः पूरयते नित्यं प्रस्थितानां मनोरथान् ॥ <– [ ] इति । अत्र च सर्वत्र –> शुभं प्रागशुभं पश्चादशुभं प्राक् ततः शुभं । पाश्चात्यं फलदोऽवश्यं शकुनः सर्वकर्मसु ॥ <–[१/४२] इति **शकुनसारोद्धारवचनमनुस्मर्तव्यम्** । **चित्तोत्साहानुग इति** । यथोक्तं –> प्रशस्ताः शकुना यानेऽनुकूलपवनस्तथा । उत्साहो मनसश्चैतत् सर्वं लाभस्य सूचकम् ॥ <– इति । अन्यत्रापि –> चित्तोत्साहो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् <– [ ] इत्युक्तम् । **बृहत्संहितायां तु** –> अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् । यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ॥ <– [८६/५] इति **वराहमिहिरेण** गदितम् । अन्यत्र = **योगबिन्दुप्रमुखे आत्मप्रत्ययेत्यादि** । यथोक्तं **योगबिन्दौ** –> तथाऽऽत्म-गुरु-लिङ्गानि, प्रत्ययस्त्रिविधो मतः । सर्वत्र सदनुष्ठाने, योगमार्गे विशेषतः ॥ आत्मा तदभिलाषी

તેવા લાકડાને શુદ્ધ જાણવા. મૂળ ગાથામાં 'ज्ञेय' પદ નથી પરંતુ તેનો અધ્યાહાર કરવો-એવું યોગદીપિકાકારનું સૂચન છે. [૬/૮]

સાતમા શ્લોકમાં 'દલ વિધિપૂર્વક લાવેલ જોઈએ' આવું કહેલ. તેથી દલ = લાકડા વગેરે લાવવા વિશેની વિધિસંબંધી બાબતોને જ મૂલકારશ્રી ફરમાવે છે કે —

<u>ગાથાર્થ</u> - પ્રસ્તુતમાં સર્વત્ર લાવવા વગેરે પ્રવૃત્તિને વિશે શુકનપૂર્વક પ્રવૃત્તિ કરવી. જલપૂર્ણ કળશ વગેરે ચિત્તોત્સાહ અનુસારી શુકન જાણવા. [૬/૯]

## ⋙ દલગ્રહણવિધિમાં શુકનનું મહત્ત્વ ⋙

<u>ટીકાર્થ</u> - જિનાલયસ્વરૂપ મહાન કાર્યના આરંભમાં ઈંટ, લાકડા, પત્થર વગેરે લેવા, લાવવા આદિ પ્રવૃત્તિને વિશે શુકનપૂર્વક જે રીતે થાય તે રીતે વર્તવું જોઈએ, શુકન વગર નહિ. 'શુકન કોને કહેવાય ?' એવી જિજ્ઞાસાનું શમન કરતા શ્રીમદ્જી કહે છે કે -પાણીથી સંપૂર્ણ ભરેલો ઘડો વગેરે શુકન કહેવાય. વગેરે કહેવાથી દહીં, દુર્વા નામનું ઘાસ, ચોખા, માથે ઉંચકેલી માટી આદિ પણ સમજી લેવા. આ બાહ્ય શુકન છે. તેથી આંતરિક શુકનનો સંગ્રહ કરવા માટે પૂર્ણકલશ વગેરેનું 'ચિત્તોત્સાહ અનુસારી' આવું વિશેષણ મૂકેલ છે. 'ચિત્તના ઉત્સાહને અનુસાર ' [અર્થાત્ દેરાસર માટે લાકડા, ઈંટ, આરસ વગેરે લેવા જતી વખતે જેવા પ્રકારનો પોતાના મનનો ઉત્સાહ હોય તેને અનુસારે ત્યારે જલપૂર્ણ કળશ વગેરે સામે જોવા મળે છે. આ શુકન કહેવાય ] મનનો ઉલ્લાસ એ ગુરુવચનની સંમતિનું પણ ઉપલક્ષણ છે, કારણ કે અન્યત્ર આત્મપ્રત્યય, ગુરુપ્રત્યય અને શુકનપ્રત્યય-એમ ત્રણ પ્રકારે શુદ્ધ થયેલ કાર્ય સિદ્ધિને અભિમુખ છે - એવું મૂલકારશ્રીએ

१ ह प्रतौ 'स्यात् तथा' इति पाठः नास्ति । २ मुद्रितप्रतौ 'गुरुवचनानुगतत्त्व ' इति पाठः ।

—> 'भृतका' इत्यादि ।

भृतका अपि कर्त्तव्या य इह विशिष्टाः स्वभावतः केचित् । यूयमपि गोष्ठिका इह वचनेन सुखं तु ते स्थाप्याः ॥६/१०॥

भृतका = कर्मकरा अपि कर्त्तव्या इह ये विशिष्टा लोकव्यवहारेण, स्वभावत = स्वभावेनैव केचित्

**कल्याणकन्दली**

स्यात्, गुरुराह तदेव तु । तल्लिङ्गोपनिपातश्च, सम्पूर्णं सिद्धिसाधनम् ॥ <— [२३१/२३२] इति । विशेषावश्यकभाष्ये श्रीजिनभद्रगणिक्षमाश्रमणैश्च —> आया गुरवो सत्थ ति पच्चया <— [२१४१] इत्येवमुक्तम् । प्रकृते —> दलमवि य सयं सिद्धं विसिट्ठकट्ठिट्टगोवलप्पमुहं । उस्सग्गेण सम्मं सुसउणगुरुद्धीण घेत्तव्वं ॥ तयभावे बहुगुणसंभवे य अतहग्गहो वि उणुन्नाओ । इहरा मग्गुच्छेओ सद्धाभंगो य सुगिहीणं ॥ <— [पृ ६७/गा ७/८] इति कथारत्नकोशगाथे स्मर्तव्ये ।

काष्ठकथा-ग्रहणादौ शकुननिरूपणेन प्रकृते दलशुद्धिरपि दर्शिता, यथोक्तं स्तवपरिज्ञायां —> तम्मवि य इमो णेओ सुद्धा-सुद्धपरिजाणणोवाओ । तक्कहगहणाओ सो जो सउणेयरसन्निवाओ उ ॥ नंदाइ सुहो सद्दो, भरिओ कलसोऽथ सुंदरा पुरिसा । सुहजोगाइ य सउणो, कंदियसद्दाइ इयरो उ ॥ सुद्धम्मि वि गहियम्मि पसत्थदिअहम्मि सुहमुहुत्तेण । संकामणम्मिवि पुणो विन्नेआ सउणमाईआ ॥ <— [९-१०-११] । मुहूर्त्तादपि शकुनस्य बलाधिकृत्य गणिविद्याप्रकीर्णके —> मुहुत्ता सउणो बली <— [८०] इत्येवमुक्तम् । यथोक्तं व्यवहारप्रकाशे अपि —> नक्षत्रस्य मुहूर्त्तस्य तिथेश्च करणस्य च । चतुर्णामपि चैतेषां शकुनो दण्डनायकः ॥ <— [ ] इति । दण्डनायकः = सेनापतिः । लल्लेनाऽप्युक्तं —> अपि सर्वगुणोपेतं न ग्राह्यं शकुनं विना । लग्नं यस्मान्निमित्तानां शकुनो दण्डनायकः ॥ [ ] <— इति । युक्तश्चैतत् शुभशकुनदर्शनादेः सकाशादभ्युदयसम्भवात्, यथोक्तं —> 'ओषधं शकुनं मन्त्रं नक्षत्रं गृहदेवता । भाग्यकाले प्रसीदन्ते त्वभाग्ये यान्ति विक्रियाम् ॥ <— [ ] इत्यादि विभावनीयम् ॥६/९॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> इह भृतका अपि ये केचित् स्वभावतः विशिष्टा [ते] कर्तव्याः । 'इह यूयमपि गोष्ठिका' [इति] वचनेन ते सुखं तु स्थाप्याः ॥६/१०॥ इयञ्च कारिका धर्मसङ्ग्रहवृत्त्यादौ [गा ६८] समुद्धृता । एतदनुसारेण भक्तिद्वात्रिंशिकायां —> भृतका अपि सन्तोष्याः, स्वयं प्रकृतिसाधवः । धर्मो भावेन न व्याजाद्धर्ममित्रेषु तेषु तु ॥ <— [७/७] इत्युक्तम् ।

विशिष्टाः लोकव्यवहारेण = औचित्य-प्रसन्नमुखमुद्रा-ललितवागादिबाह्यसच्चेष्टया स्वभावेनैव = धैर्य-माधुर्य-दाक्षिण्य-

---

પ્રતિપાદન કરેલ છે - આમ જાણવું [૬/૯]

## કાર્યસિદ્ધિના ત્રણ લિંગ

<u>**વિશેષાર્થ**</u> - યોગબિંદુ ગ્રંથમાં મૂલકારશ્રીએ કાર્યસિદ્ધિના ૩ લિંગ બતાવેલ છે [૧] કાર્ય કરવાનો પોતાને અંદરથી ઉલ્લાસ-ઉમંગ હોય, [૨] ગુરુ પણ તે જ કાર્ય કરવાનું સૂચન કરે તથા [૩] કાર્યના પ્રારંભમાં પૂર્ણકળશ વગેરે શુકન મળે. આ ત્રણ લિંગનો ઉલ્લેખ કરેલ છે. તેથી મધ્યવર્તી દ્વિતીય લિંગનું પણ ગ્રહણ સમજી લેવાનું. પોતાને જે કાર્ય કરવાનો ઉલ્લાસ હોય અને ગુરુદેવ પણ પોતાને તે જ કાર્ય કરવાની વાત જણાવે તો કાર્ય કરનારનો ઉત્સાહ ઘણો વધી જાય. અને પછી તે કાર્ય કરવા જતાં પ્રારંભમાં શુભ શુકન વગેરે થાય તો તો અત્યંત ઉલ્લાસ વધતો જાય. એ ઉત્સાહ વિઘ્નને દૂર કરે છે, મદદ પાડે છે. પ્રાયઃ કરીને તે રીતે જે કાર્ય થાય તેમાં વિઘ્ન આવતાં જ નથી. કાર્યસિદ્ધિનો અદ્વિતીય વિશ્વાસ પ્રગટે છે. તે પુરુષાર્થને બળવાન + અપ્રમત્ત બનાવી કાર્ય સિદ્ધિ લાવે છે. પોતાને જે કામ કરવાની ઈચ્છા ન હોય અને ગુરુદેવ તે જ કાર્ય સોંપે અને કાર્યની શરૂઆતમાં જ અપશુકન થાય તો કાર્ય કરવાનો ઉત્સાહ થતો નથી, થાય તો ટકતો નથી. કદાચ ઉત્સાહ ટકાવે તો પણ તે કાર્યમાં અવાર-નવાર વિઘ્નો - અડચણ આવ્યા કરે. તેથી કાર્ય અટવાઈ જાય. લગભગ તે કાર્ય સિદ્ધ ન થાય. સિદ્ધ થાય તો ઘણા વિલંબે થાય. એથી કાર્ય સિદ્ધ થવા છતાં તેનો કોઈ આનંદ ન થાય. માટે સાધકનું કર્તવ્ય છે કે ગુરુ જે કાર્ય કહે તેને અનુરૂપ પોતાની ઈચ્છા પ્રગટાવવી. તેમ જ સારા મુહૂર્તે શુભ શુકનપૂર્વક કાર્ય પ્રારંભ કરવો. અપશુકન કે શુકન વગેરેની ઉપેક્ષા કરીને પ્રવર્તનારને કાર્યસિદ્ધિ થતી નથી. આ વાતનો ખાસ ખ્યાલ રાખવો. નિશીથસૂત્ર, બૃહત્કલ્પભાષ્ય, ઓઘનિર્યુક્તિ ભાષ્ય વગેરેમાં પણ શુકનનું મહત્ત્વ જણાવેલ છે. [૬/૯]

'કારીગર વગેરેને છેતરવા નહિ' આ રીતે ૩૭ ગાથામાં ૩જા દ્વારનો ઉલ્લેખ કરેલ. તેના સબંધી વક્તવ્યને મૂલકારશ્રી જણાવે છે કે —

<u>**ગાથાર્થ**</u> - પ્રસ્તુતમાં કારીગર વગેરે પણ જે કોઈ સ્વભાવથી વિશિષ્ટ હોય તેને કરવા. 'અહીં તમે પણ સહાયક છો' આવા વચનથી તેઓને સુખેથી જ રાખવા. [૬/૧૦]

## દેરાસરના કારીગરો સાથે ઉચિત વ્યવહાર રાખવો.

<u>**ટીકાર્થ**</u> - કેટલાક કારીગરો સ્વભાવથી જ લોકવ્યવહાર વગેરેથી વિશિષ્ટ પ્રકારના હોય છે. તેઓને જ અહીં દેરાસરમાં નક્કી કરવા. તેમ જ 'આપ પણ દેરાસર બનાવવામાં સહાયક છો' આવા વચનથી તેઓને સુખેથી જ રાખવા, કેમ કે તેઓ વિશિષ્ટ કારીગર છે. આ

भवन्ति । **यूयमपि** = भवन्तोऽपि **गोष्ठिका** = सहाया **इह** = जिनभवनविधाने' अनेन **वचनेन सुखं तु** = सुखेनैव **ते स्थाप्या**, विशिष्टत्वात् । इत्थं स्थापिता ते निर्वाहका भवन्ति ॥६/१०॥ **'अती'**त्यादि ।

**अतिसन्धानञ्चैषां कर्त्तव्यं न खलु धर्म्ममित्राणां । न व्याजादिह धर्मो भवति तु शुद्धाशयादेव ॥६/११॥**

**एषां** = भृतकानां **अतिसन्धानं च न खलु** = नैव **कर्त्तव्यं धर्म्ममित्राणां** = धर्म्मसुहृदां, किमिति ? **इह** = शुभकर्मणि **न व्याजात् धर्मः (भवति)** किं **तु शुद्धाशयादेव** = निर्व्याजपरिणामादेव ॥६/११॥

कल्याणकन्दली

नैपुण्यादिगुणपरिपुष्टस्वभावेनैव **केचित् भवन्ति । 'भवन्तोऽपि सहाया इह जिनभवनविधाने'** 'भवतां साहाय्येनैव जिनभवनं निष्प्रत्यूहं पूर्णतां गमिष्यति' 'भवतामेवेदं कार्यमप्रमत्ततामवलम्ब्य निष्पादनीयम्' इत्येवमपशब्दमन्तरेण यथा तेऽप्रमादिनो भवेयुः तादृशेन प्रशस्तेन **वचनेन सुखेनैव ते** = कर्मकराः **स्थाप्याः, विशिष्टत्वात्** = विशिष्टशिष्टव्यवहारनिपुणत्वात् । **कथारत्नकोशे श्रीदेवभद्रसूरिणा**ऽपि —> कम्मयराण वि इत्थं थेवं पि न वयणं विहेयव्वं । अवि सविसेसं देयं तेसिं सुहभाव-वुड्ढिकए ॥ <— [पृ ६७/गा १०] इत्युक्तम् । कर्मकरस्थापनविधिश्च **वेधवास्तुप्रभाकरे प्रभाशङ्करेण** —> कर्मकराणां सर्वेषां, धनं दद्याच्च सर्वतः । वस्त्र-प्रावरणे कृत्वा, उत्तमादिक्रमेण तु ॥३४१॥ योजनीयास्तथा सर्वे, मिष्टान्नैः खण्डपक्वकैः । ताम्बूलं विलेपनं दद्यात्, यावत् सन्तुष्टचेतसः ॥३४२॥ <— इत्यादिरूपेणोक्तः । **शिल्पस्मृतिवास्तुविद्यायामपि** एवप्रायो विधिः वर्तते [पृ २९२-अध्याय-६ गा २६-२७] । **शत्रुञ्जयतीर्थोद्धारप्रबन्धे** **श्रीविवेकधीरगणिभिः** श्रीकर्मसाधुकृतशत्रुञ्जयतीर्थोद्धारवर्णनावसरे —> सुखासिकाभिर्विविधाभिराशु भोज्यैश्च साज्यैः ससितैः पयोभिः । स सूत्रधारान् करमोऽपि नित्यमावर्जयामास वदान्यधुर्यः ॥८९॥ शतशः सूत्रधारास्ते यद्यदीषुर्यदा यदा । तत्तदानीमेवाऽग्रेऽपश्यन् श्रीकर्मसाधुना ॥९०॥ कर्मणाऽऽवर्जितास्ते तु सूत्रधारास्तथा यथा । चक्रुर्मासविधेयानि कार्याणि दशभिर्दिनैः ॥९२॥ <— इत्युक्तम् । **कथारत्नकोशे** दर्शिता **विजयकृता** सूत्रधारप्रतिपत्ति-रप्यत्रानुसन्धेया [पृ ७१/गा १०३-४-५] ।

**इत्थं** जिनभवनादिकार्ये **स्थापिताः ते** सावधानतया सन्तोषपूर्वकं अर्हच्चैत्यादिकार्यस्य **निर्वाहकाः** = परिसमापका **भवन्ति**, अन्यथा प्रारब्धमपि जिनप्रासादादि कार्यं ते मुञ्चेयुः, तेषां विशिष्टत्वेनाऽन्यत्राऽपि यथेप्सितमूल्यपूर्वं भवनादिनिर्माणनियोगसम्भवादित्यवधेयम् ।

जिनगृहनिर्माणानन्तरञ्च सूत्रधारादीनां वस्त्रालङ्कारादिप्रदानं कर्तव्यम्, यथोक्तं **शिल्परत्नाकरे** —> अनन्तरञ्च कर्तव्यं, सूत्रधारस्य पूजनं । वस्त्रालङ्कारभोज्येन, गोमहिष्यश्ववाहनैः ॥ अन्येषां शिल्पिनां पूजा, कर्तव्या कर्मकारिणाम् । स्वाधिकारानुसारेण, वस्त्रताम्बूलभोजनैः ॥ शिल्पिनं पूजयेत् प्राज्ञ, सोमपुराभिधं सदा । तस्य हस्तेन कल्याणं, कर्तव्यं रिद्धिसिद्धिदम् ॥ <— [१३/७७-७८-७९] इत्यपि वदन्ति । क्वचित् प्रतिष्ठानन्तरमपि सूत्रधारादीनां वस्त्रालङ्कारादिप्रदानं श्रूयते । तदुक्तं **शत्रुञ्जय-तीर्थोद्धारप्रबन्धे** —> स्वर्णोपवीत-मुद्राङ्गद-कुण्डल-कङ्कणादिकाऽऽभरणैः । वस्त्रैश्च सूत्रधारानतुतूषत्सोऽपि कर्मकृतः ॥ <— [उल्लास-२/१५६] सोऽपि = श्रीकर्मसाधुरपि प्रतिष्ठाऽनन्तरमिति तत्प्रकरणादवगम्यते ॥६/१०॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> एषां च धर्ममित्राणां अतिसन्धानं न खलु कर्तव्यम् । इह धर्मो न व्याजात् [भवति, अपि] तु शुद्धाशयादेव भवति ॥६/११॥ इयञ्च कारिका **धर्मसङ्ग्रह-षष्टिशतकप्रकरणवृत्त्यादौ** [गा.६८ ष श १२] समुद्धृता वर्तते ।

**भृतकानां अतिसन्धानं** = **वञ्चनं नैव कर्तव्यं**, अपि तु 'भावनीयमौदार्य'मिति [ ] **ललितविस्तरादि**वचनमवधार्य अधिकप्रदानं मूल्यस्य कर्तव्यम्, तदुक्तं **स्तवपरिज्ञायां** —> कारवणेऽवि य तस्सिह, भयगाणतिसंधणं न कायव्वं । अवियाऽहियप्पयाणं, दिट्ठादिट्ठप्फलं एयं ॥ ते तुच्छया वराया, अहिण्णं दढं उवेंति परितोसं । तुट्ठा य तत्थ कम्मं, तत्तो अहियं पकुव्वंति ॥ धम्मपसंसाए तह केइ, निबंधंति बोहिबीआइं । अन्ने य लहुयकम्मा एत्तोच्चिय संपबुज्झंति ॥ लोगे

રીતે કારીગર-કડિયા વગેરેને રાખેલા હોય તો તેઓ દેરાસર બનાવવાનું કામ પૂર્ણ કરે [૬/૧૦]

**વિશેષાર્થ** - જે કારીગર, કડિયા, સુથાર, સોમપુરા વગેરે દેરાસર બનાવવાની વિશિષ્ટ આવડતવાળા હોય તેઓને જ અહીં પસંદ કરવા તથા લોકવ્યવહારથી પણ જે સોમપુરા વગેરે વિશિષ્ટ કક્ષાના હોય તેને જ પ્રસ્તુતમાં નક્કી કરવા, જેથી તે મજૂર વગેરે પાસે વ્યવસ્થિત રીતે કામ કરાવી શકે. આવા વિશિષ્ટ દરજ્જાના સોમપુરા વગેરેની સાથે જો મીઠો, સાચો, સારો અને ઉચિત વ્યવહાર રાખવામાં ન આવે તો તેઓ દેરાસરનું કામ અધૂરું મૂકીને ચાલ્યા જાય માટે તેઓને પણ સારી રીતે સાચવવા. [૬/૧૦]

**ગાથાર્થ** આ ધર્મમિત્રોને છેતરવા નહિ જ. અહીં ધર્મ કપટથી નથી થતો, પરંતુ શુદ્ધ આશયથી જ ધર્મ થાય છે. [૬/૧૧]

**ટીકાર્થ** - દેરાસરના કારીગરો ધર્મમિત્રો છે. તેથી તેની સાથે છેતરપિંડી ન જ કરવી, કારણ કે શુભ કાર્યમાં ધર્મ કપટથી નથી થતો, પરંતુ નિષ્કપટ પરિણામથી જ ધર્મ થાય છે. [૬/૧૧]

अथ स्वाशयशुद्धिर्वाच्या । तत्र कः स्वाशयः ? इत्याह —> देवे'त्यादि ।

देवोद्देशेनैतद् गृहिणा कर्तव्यमित्यलं शुद्धः । अनिदानः खलु भावः स्वाशय इति गीयते तज्ज्ञैः ॥६/१२॥

**देवोद्देशेन** = जिनभवनभक्त्यभिसन्धिमात्रेण **एतत्** = जिनभवनं **गृहिणा कर्तव्यं** न त्वैहिकादिफलाभिलापेण इति एषः **अलं** = अत्यर्थं **शुद्धः** = निर्दोषः **अनिदानः खलु** = निदानरहित एव **भावः** = अध्यवसायः **स्वाशयः** = शुभाशयः **इति गीयते तज्ज्ञैः** = तद्वेदिभिः ॥६/१२॥ एतद्वृद्धिमाह —> 'प्रती'त्यादि ।

प्रतिदिवसमस्य वृद्धिः कृताकृतप्रत्युपेक्षणविधानात् । एवमिदं क्रियमाणं शस्तमिह निदर्शितं समये ॥६/१३॥

**कल्याणकन्दली**

अ माहुवाओ अतुच्छभावेन सोहणो धम्मो । पुरिसुत्तमपण्णीओ पभावणा एव तित्थस्स ॥ <— [१२-१३-१४-१५] इति दृष्टाऽदृष्टफलं मृतकानतिसन्धानम् । न व्याजात् = कौटिल्यात् धर्मः भवति, यथोक्तं महाभारतेऽपि —> सर्वं जिह्मं मृत्युपदं <— [शान्तिपर्व ७९/२१] । धर्मः शुद्धाशयादेव = निर्व्याजपरिणामादेव भवति । तदुक्तं उत्तराध्ययनेऽपि —> 'धम्मो सुद्धस्स चिट्ठइ <— [३/१२] ॥६/११॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> देवोद्देशेन एतत् गृहिणा कर्तव्यं इति अलं शुद्धः अनिदानः खलु भावः स्वाशयः इति तज्ज्ञैः गीयते ॥६/१२॥ इयं कारिका प्रतिमाशतकवृत्त्यादौ [गा.३५] समुद्धृता । एतदनुसारेण भक्तिद्वात्रिंशिकायामपि —> स्वाशयश्च विधेयोऽत्राऽनिदानो जिनगोचरः । अन्यारम्भपरित्यागाज्जलादियतनावता ॥ <— [५/८] इत्युक्तम् ।

जिनभवनभक्त्यभिसन्धिमात्रेण = जिन-तद्गृहयोः केवलभक्तिभावेन । मात्रपदव्यवच्छेद्यमाह - न त्वैहिकादिफलाभिलापेण इति । आदिपदेन पारलौकिकफलग्रहणम् । निदानरहित एव इति । यद्यपि ध्यानशतके —> 'देविंद-चक्कवट्टित्तणाइ गुणरिद्धिपत्थणमईयं । अहमं नियाणचिंतणमण्णाणाणुगयमच्चंतं ॥९॥ <— इत्यादिना पारलौकिकफलाशंसाया एव निदानत्वोक्तिः तथापि श्लाघाशंसासाजात्यादैहिकफलाभिलापग्रहणमपि निषेध्यतया न विरुध्यत इति ध्येयम् ।

एवमेव 'भवाम्भोनिधिनिमग्नसत्त्वानामालम्बनभूतोऽयमि'त्येवं भुवनगुरुजिनेन्द्रगुणपरिज्ञया जिनबिम्बस्थापनावसरे स्वाशयशुद्धिरवसेया, यथोक्तं स्तवपरिज्ञायां —> सासयवुड्ढी वि इहं भुवणगुरुजिणिंदगुणपरिण्णाए । तब्बिंबठावणत्थं, सुद्धपवित्तीइ णियमेण ॥१६॥ <— इति भावनीयम् ॥६/१२॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> कृताऽकृतप्रत्युपेक्षणविधानात् प्रतिदिवसं अस्य वृद्धिः [कार्या] । एवं इदं क्रियमाणं इह समये शस्तं प्रदर्शितम् ॥६/१३॥

## ☰ દેરાસરના સોમપુરા વગેરે 'ધર્મમિત્ર' છે. ☰

<u>વિશેષાર્થ</u> - અહીં એક બાબત નોંધવા યોગ્ય છે કે જેમ કલ્પસૂત્રમાં રાજસેવકોને માટે 'નોકર' શબ્દનો પ્રયોગ કરવાના બદલે 'કૌટુંબિક પુરુષ' શબ્દનો પ્રયોગ કરવામાં આવેલ છે તેમ અહીં દેરાસરના સોમપુરા, કારીગર વગેરેનું 'ધર્મમિત્ર' એવા વિશેષણથી સન્માન કરવામાં આવેલ છે. તેઓ ધર્મમિત્ર-ધર્મસહાયક છે તેવો ખ્યાલ આવી જાય તો તેઓ સાથે કેવો વ્યવહાર કરવો ? તે બહુ સમજાવવું ન પડે. આ જ રીતે દેરાસર-ઉપાશ્રય-આયંબિલશાળામાં સેવા આપતા ભાઈઓ તથા બહેનો સાથે કે સાધુ-સાધ્વીજીની ઝોળી ઉંચકનાર ભાઈઓ-બહેનો સાથે શ્રાવક-શ્રાવિકાઓ કેવો વ્યવહાર રાખે ? તે પણ સમજી શકાય તેમ છે. [૬/૧૧]

૩જી ગાથામાં 'શુભપરિણામવૃદ્ધિ' નામના ચોથા દ્વારનો નિર્દેશ કરેલ. તેના નિરૂપણનો હવે અવસર આવ્યો છે. 'શુભાશયવૃદ્ધિના ઘટક શુભ આશયનું સ્વરૂપ શું છે ?' તે કહેવાય છે —

<u>ગાથાર્થ</u> - ભગવાનની ભક્તિના ઉદ્દેશથી જ દેરાસર [બનાવવું તે] ગૃહસ્થોનું કર્તવ્ય છે - આ પ્રકારે અત્યંત શુદ્ધ અને નિયાણા વગરનો ભાવ શુભ આશય છે- એમ તેના જાણકાર પુરુષો વડે કહેવાય છે. [૬/૧૨]

### ❊ શુભ આશય નિરૂપણ ❊

<u>ટીકાર્થ</u> - ભગવાન અને દેરાસરની કેવળ ભક્તિના ભાવથી જ દેરાસર બનાવવું તે ગૃહસ્થોનું કર્તવ્ય છે, નહિ કે ઐહિક = આ લોક વગેરેના ફળની ઈચ્છાથી. આ અત્યંત નિર્દોષ અને નિયાણા વગરનો જ ભાવ તેના સ્વરૂપના જાણકાર પુરુષો વડે શુભ આશય કહેવાય છે. [૬/૧૨]

<u>વિશેષાર્થ</u> - 'દેરાસર બંધાવવાના મુખ્ય ફલરૂપે મારી અહીં વાહ-વાહ થાય, મારો યશ વધે, લોકો મારી પ્રશંસા કરે, જિનાલય બનાવવાના લીધે હું પરલોકમાં ઈન્દ્ર-સામાનિકદેવ-મહર્દ્ધિકદેવ બનું' આવી આ લોકની આશંસા અને પરલોકની આશંસારૂપી નિયાણાથી દૂર રહીને ભગવાન અને દેરાસરની ભક્તિના જ આશયથી જિનાલય બનાવવું આ શુભ આશય કહેવાય. [૬/૧૨]

શુભાશયની વૃદ્ધિને મૂલકારશ્રી બતાવે છે કે —

<u>ગાથાર્થ</u> - કરેલ અને નહીં કરેલ કાર્યનું અવલોકન કરવાથી રોજ આ શુભાશયની વૃદ્ધિ કરવી. આ રીતે કરાતું દેરાસર સુંદર

**प्रतिदिवस अस्य** = कुशलाशयस्य **वृद्धि** कार्या, कृताऽकृतयो = एतत्प्रतिबन्धेन निष्पन्न-निष्पाद्ययो कार्ययो प्रत्युपेक्षणस्य = अवलोकनस्य विधानात् । तथाहि —> एतद् दृष्ट्वाऽऽर्हत चैत्यमनेके सुगति गता । यास्यन्ति बहवश्चान्ये ध्याननिर्धूतकल्मषा ॥१॥ यात्रा-स्नात्रादि कर्मेह भूतमन्यच्च भावि यत् । तत्सर्वं श्रेयसा बीज ममाऽर्हच्चैत्यनिर्मितौ ॥२॥ साधु जातो विधिरय कार्योऽत परमेष मे । अर्हच्चैत्येष्विति ध्यान श्राद्धस्य शुभवृद्धये ॥३॥ अहपूर्विकया भक्ति ये च कुर्वन्ति यात्रिका । तेऽपि प्रवर्धयन्त्येव भाव श्रद्धानशालिनाम् ॥४॥ **एव** उक्तद्वारशुद्ध्या **क्रियमाण (इद=)** जिनभवन **(शस्त** =) प्रशस्त **इह समये** = जैनसिद्धान्ते **(निदर्शित=)** प्रदर्शितम् ॥६/१३॥

'किमिति शस्त निदर्शित ?' इत्याह —> **'एतदि'**त्यादि ।

**एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिद परमम् । अभ्युदयाऽव्युच्छित्त्या नियमादपवर्गबीजमिति ॥६/१४॥**

**एतत्** = जिनभवनविधान **इह** = लोके **भावयज्ञ** = यजेर्देवपूजार्थत्वात् भावपूजा, द्रव्यस्तवस्याप्यस्योक्त-

कल्याणकन्दली

**एतदि**त्यादि कारिकाचतुष्टय सुगममिति न तन्यते । एतद्भावार्जितकर्मण सकाशात् स्वस्य भावचारित्रप्रतिपत्तिर्जायते, यथोक्त **स्तवपरिज्ञाया** —> पडिबुज्झिस्सतऽण्णे भावज्जियकम्मओ उ पडिवत्ती । भावचरणस्स जायइ एव चिय सजमो सुद्धो ॥५०॥ <— इति । तदुक्त **पञ्चाशकेऽ**पि —> तत्थवि य साहुदसणभावज्जियकम्मतो उ गुणरागो । काले य साहुदसणम-हक्कमेण गुणकर तु ॥ पडिबुज्झिस्सतन्ने भावज्जियकम्मओ य पडिवत्ती । भावचरणस्स जायति एगतसुहावहा णियमा ॥ अपरिवडियसुहचिताभावज्जियकम्मपरिणतीए उ । गच्छति इमीइ अत ततो य आराहण लहइ ॥ <— [७/४६-४७-४८] इति । प्रकारान्तरेण स्वाशयशुद्धिस्तु पूर्व [४/११-पृष्ठ-१०१] दर्शितैव । श्रीजिनभवनप्रायोग्यभूमिखनन-कूर्मनिवेश-शिलान्यास-तन्मानादिकञ्च **वास्तुसारगतप्रासादप्रकरणादि**तोऽवसेयम् ॥६/१३॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> एतत् इह भावयज्ञ इद सद्गृहिण. परम जन्मफल अभ्युदयाव्युच्छित्त्या नियमात् अपवर्ग-बीजमिति ॥६/१४॥ इयञ्च कारिका **अधिकारविंशिकावृत्ति-विचाररत्नाकर-भक्तिद्वात्रिंशिकावृत्ति-प्रतिमाशतकवृत्ति-स्थानाङ्गवृत्त्यादौ** [वि १२ वि र पृ २५ द्वा द्वा ५/९ प्र श गा ३४ पृ २१८ स्था सू १२५ पृ ७३] समुद्धृता ।

**भावयज्ञः** इति देवतोद्देश्यकत्यागे यज्ञशब्दस्य प्रयोगप्राचुर्यात् पूर्वोक्त[६/१२ पृ.१४७]भावशुद्धिगर्भतया प्रागुक्त[६/१३ पृ १४८]भाववृद्ध्या च देवोद्देशेन क्रियमाणत्वाच्च भावयज्ञत्वमनाविल, यथोक्त **भक्तित्रिंशिकायामपि** —> इत्थञ्चैषोऽधिक-त्यागात् सदारम्भ फलान्वित । प्रत्यह भाववृद्ध्याप्तैर्भावयज्ञ प्रकीर्तित ॥<— [५/९] तथापि प्रकारान्तरेण टीकाकृदाह-**यजेः देवपूजार्थत्वात्**, यथोक्त **श्रीकल्पसूत्रावचूर्या श्रीकल्पदीपिकाया श्रीकल्पप्रदीपिकाया सन्देहविषौषधिग्रन्थे** च —> यागान् = देवपूजा <— । तथा **श्रीकल्पद्रुमकलिकाया** 'याग = देवपूजन' इत्युक्तम् । यद्यपि **कल्पसूत्रसुबोधिकाया** —> यागशब्देन प्रतिमापूजा एव ग्राह्या <— [ ] इत्युक्तम् । तथापि प्रकृते भावपदोपसन्दानात् **भावयज्ञः** = **भावपूजा**

જાણવુ એમ શાસ્ત્રમા બતાવેલ છે [૬/૧૩]

__ટીકાર્થ__ - દેરાસર પ્રત્યેની આતરિક પ્રીતિથી [= एतत्प्रतिबन्धेन] 'આટલુ કામ થયુ આટલુ કામ બાકી છે' આમ દેરાસર સબધી તૈયાર થયેલ કાર્ય અને તૈયાર કરવાના કાર્યનુ નિરીક્ષણ કરવાથી કુશલ અધ્યવસાયની પ્રતિદિન વૃદ્ધિ કરવી જોઈએ જેમ કે - આ જૈન દેરાસરને જોઈને અનેક જીવો સદ્ગતિમા ગયેલા છે તથા ઘણા બધા જીવો (દેરાસરનિમિત્તે થનારા) ધ્યાનથી પાપોને ધોઈને સુગતિમા ભવિષ્યમા જશે [૧] જિનાલયનિર્માણ થયે છતે અહીં = દેરાસરમા જે કાઈ યાત્રા, સ્નાત્ર વગેરે થયા હોય તથા ભાવી કાલમા જે થશે તે બધુ મારા કલ્યાણનુ બીજ છે [૨] આ વિધાન = જિનગૃહનુ નિર્માણ થયુ તે ખૂબ સારુ થયુ હવેથી આ મારુ કર્તવ્ય છે - આ પ્રમાણે જિનાલયોનુ ધ્યાન શ્રાવકને ધર્મવૃદ્ધિ = પુણ્યવૃદ્ધિ માટે થાય છે [૩] 'હુ પહેલા પૂજા કરુ, હુ પહેલા અભિષેક કરુ, હુ પહેલા આગી કરુ' આ રીતે જે યાત્રિકો હોડપૂર્વક ભક્તિ કરે છે તેઓ પણ શ્રદ્ધાળુ જીવોના ભાવને પ્રકૃષ્ટ રીતે વધારે જ છે [૪] આ રીતે શુભાશયવૃદ્ધિ દ્વારની શુદ્ધિથી કરાતુ દેરાસર પ્રશસ્ત છે - એમ અહીં જૈનશાસ્ત્રમા બતાવેલ છે [૬/૧૩]

—> 'શા માટે શુભાશયવૃદ્ધિયુક્ત જિનાલયનિર્માણ પ્રશસ્ત = સુદર કહેવાયેલ છે ?' <— આ જિજ્ઞાસાનુ સમાધાન કરતા મૂલકારશ્રી ફરમાવે છે કે —

__ગાથાર્થ__ - દેરાસરનિર્માણ અહીં ભાવયજ્ઞ બને છે આ સદ્ગૃહસ્થના જન્મનુ પ્રકૃષ્ટ ફળ છે તે અભ્યુદયના સાતત્યપૂર્વક નિયમા મોક્ષનુ બીજ થાય છે [૬/૧૪]

## ❦ દેરાસરનિર્માણ ભાવયજ્ઞ બને ❦

__ટીકાર્થ__ - દેરાસરનુ નિર્માણ આ લોકમા ભાવયજ્ઞ = ભાવપૂજા બને છે યજ્ઞપદ યજ્ધાતુથી બનેલ છે યજ્ધાતુનો અર્થ દેવપૂજા થાય છે તેથી મૂલ ગ્રથમા રહેલ 'ભાવયજ્ઞ' પદનો ટીકાકારશ્રીએ 'ભાવપૂજા' એવો અર્થ કરેલ છે જો કે દેરાસરનિર્માણ દ્રવ્યસ્તવ = દ્રવ્યપૂજા

१ ह प्रतो 'ण्पा' इत्यशुद्ध पाठ ।

विधिशुद्धिद्वाराऽऽज्ञाराधनलक्षणभावपूजागर्भितत्वात् सद्गृहिण = सद्गृहस्थस्य जन्मन फलं इदं परमं = प्रधानं, आजन्मार्जितधनस्यैतावन्मात्रसारत्वात् । अभ्युदयस्य = स्वर्गादेः अव्यवच्छेदेन सततया नियमात् = निश्चयेन अपवर्गतरो = मोक्षवृक्षस्य बीजं एतत् ॥६/१४॥

कल्याणकन्दली

इति युक्तमेव, द्रव्यस्तवस्यापि उक्तविधिशुद्धिद्वारा = जिनोक्त-प्राग्व्यावर्णितविधि-यतना-बहुमानादिविशुद्धिद्वारा आज्ञाऽऽराधनलक्षणभावपूजागर्भितत्वात् ।

यत्तु वीतरागस्तोत्रे —> वीतराग ! सपर्यातस्तवाऽऽज्ञापालनं परं <— [१९/४] इति श्रीहेमचन्द्रसूरिभिरुक्तं तत्तु केवलद्रव्यस्तवाशमुद्दिश्योक्तमित्यवगन्तव्यम् । एतेन —> दुविहा जिणिंदपूआ दव्वे भावे अ इत्थ बोधव्वा । दव्वेहिं जिणपूआ, जिणआणापालणं भावे ॥<— [१९१] इति सम्बोधप्रकरणे मूलकृदुक्तमपि व्याख्यातम् । वस्तुतस्तु प्रकृते द्रव्यस्तव-भावस्तवयोर्मिथोऽनुविद्धत्वमवगन्तव्यम् । यथोक्तं स्तवपरिज्ञाया —> दव्वत्थय-भावत्थयरूवं एवमिय होति दट्ठव्वं । अण्णोण्णसमणुविद्धं णिच्छयतो भणियविसयं तु ॥१००॥ <— [पचा ६/२७] इति । न चैवं द्रव्यस्तवव्यपदेशानुपपत्तिरिति वाच्यम्, द्रव्यप्राधान्येन तदुपपादनादिति व्यक्तं भक्तिद्वात्रिंशिकावृत्तौ [५/०] ।

जन्मनः फलं इदं = जिनभवनं प्रधानमिति । तदुक्तं श्रीरत्नमन्दिरगणिभिः उपदेशतरङ्गिण्या —> रम्यं येन जिनालयं निजभुजोपात्तेन कारापितं, मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा । वेद्यं तेन नरामरेन्द्रमहितं तीर्थेश्वराणां पदं, प्राप्तं जन्मफलं कृतं जिनमतं गोत्रं समुद्योतितम् ॥ [२/३] यावत्तिष्ठति जैनेन्द्रं मन्दिरं धरणीतले । धर्मस्थितिः कृता तावज्जैनसौधविधायिना ॥ <— [२/पृ ११०] इति । जिनालयगतवित्तस्याऽक्षयताऽपि ज्ञेया, यथोक्तं पञ्चाशके —> एक्कपि उदगबिंदू जह पक्खित्तं महासमुद्दम्मि । जायइ अक्खयमेव पूया जिणगुणसमुद्देसु ॥ <— [४/४७] इति । सम्बोधप्रकरणेऽपि —> एगमवि उदगबिंदू जह पक्खित्तं महासमुद्दम्मी । जायइ अक्खयमेवं पूया वि हु वीयरागेसु ॥१९७॥ <— इत्युक्तम् । तदुक्तं पूजाविंशिकायामपि —> इक्कपि उदगबिंदू जह पक्खित्तं महासमुद्दम्मि । जायइ अक्खयमेय, पूया वि जिणेसु विन्नेया ॥१७॥ इति । आजन्मार्जितधनस्यैतावन्मात्रसारत्वादिति । तदुक्तं चारित्रसुन्दरगणिनाऽपि आचारोपदेशे —> क्षेत्रेषु सप्तसु वपन् न्यायोपात्तं निजं धनम् । साफल्यं कुरुते श्राद्धो निजयोर्धन-जन्मनो ॥ <— [६/२४] इति । अत एव श्रावकः सप्तक्षेत्र्यां स्वधनं वितरति वपति अक्षयं च करोति । तदुक्तं भक्तपरिज्ञाप्रकीर्णके —> निअदव्वमपुव्वजिणिंदभवणजिणबिंब-वरपइट्ठासु । विअरइ पसत्थपुत्थय-सुतित्थ-तित्थयरपूआसु ॥३१॥ <— इति । तदुक्तं दानकुलकेऽपि —> जिणभवण-बिंब-पुत्थय-संघसरूवेसु सत्तखित्तेसु । ववियं धणं पि जायइ सिवफलयमहो अणंतगुणं ॥२०॥ इति । अनर्थकारिणोऽर्थस्य सार्थकत्वाक्षयत्वकरणादेव श्रावकस्य धन्यत्वमभिमतमाचार्याणाम् । इदमेवाभिप्रेत्य उपदेशतरङ्गिण्यां रत्नमन्दिरगणिभिः —> श्रीमज्जैनगृहे जिनप्रतिकृतौ जैनप्रतिष्ठाविधौ श्रीसार्वस्नपने जिनार्च्चनविधौ श्रीसङ्घपूजादिके । श्रीमच्छासनलेखने च सततं श्रीतीर्थयात्रामुखे येषां स्वं विनियोगमेति धनिनां धन्यास्त एव क्षितौ ॥ [२/५] जिनभवनं निर्माप्य सफलीकर्तुं निजोल्लसल्लक्ष्मीम् । धन्यैः स्वपरश्रेयःपुण्योदयद्बोधिलाभाय ॥ <— [तरङ्ग-२/१/२] इत्युक्तम् । अन्यत्राऽपि —> दव्वं तमेव मन्ने जिणबिंबपइट्ठणाइकज्जेसु । जं लग्गइ तं सहलं दुग्गइजणणं हवइ सेसं <— [ ] इत्युक्तम् । —> कर्तव्या जिनपूजा, न खलु वित्तस्याऽन्यच्छुभतरं स्थानम् <— [७९] इति ललितविस्तरावचनमपि भावनीयम् । उपदेशतरङ्गिण्यां रत्नमन्दिरगणिभिः अपि —> सारं तदेव सारं, नियुज्यते यज्जिनेन्द्रभवनादौ । अपरं पुनरपरं धनं, पृथ्वीमलखण्डपिण्डं वा ॥ <— [२/पृ ११०] इत्युक्तम् । प्रकृते जिनभवनञ्चोपलक्षणं जिनबिम्बप्रतिष्ठा-पूजादेः, यदुक्तं प्रशमरतौ उमास्वातिवाचकवरैः —> चैत्यायतनप्रस्थापनानि कृत्वा च शक्तितः प्रयतः । पूजाश्च गन्ध-माल्याधिवासधूपप्रदीपाद्याः ॥३०५॥ <— इति । प्रकृते —> चैत्यानि = जिनबिम्बानि, आयतनानि = तेषामेवागाराणि, प्रस्थापना = तेषामेव प्रकृष्टमहाविभूत्या वादित्रगीतनृत्यतालानुचर-स्वजनपरिवारादिकया प्रतिष्ठा <— इत्यवचूरिलेशः । अन्यत्रापि —> जिणबिंबपइट्ठासु सुहकज्जेसु लग्गइ जं च । तं चिय दव्वं सहलं, दुग्गइजणणं हवइ सेसं ॥ एवं नाऊण सया जिणवरबिंबस्स कुणह सुपइट्ठं । पावेह जेण जर-मरणवज्जियं सासयं ठाणं ॥ <— [ ] इत्युक्तम् । षष्टिशतकप्रकरणेऽपि —> जिणपूयणपत्थावे जइ को वि सद्धाण देइ धणकोडिं । मुत्तूण तं असारं, सारं वियरंति जिणपूयं ॥८०॥ <— इत्येवं जिनार्चाया प्राधान्यमुक्तम् । धम्मपदाभिधे बौद्धग्रन्थेऽपि —> वीतरागेसु दिन्नं होति महप्फलं <— [२४/२३] इत्युक्तम् ।

કે ઉક્ત પણ ઉપર્યુક્ત વિધિશુદ્ધિ દ્વારા તીર્થંકરની આજ્ઞાની આરાધના થાય છે. જિનાજ્ઞાની આરાધના એ ભાવપૂજાસ્વરૂપ છે. તેનાથી ગર્ભિત = વ્યાપ્ત હોવાથી ચૈત્યનિર્માણ પણ ભાવપૂજા બને છે. સદ્ગૃહસ્થના જન્મનું આ પ્રધાન ફળ છે, કારણ કે જન્મથી માંડીને કમાયેલી

एव जिनभवनकारणमभिधाय तद्गतविशेषमाह –> **देय त्वि'त्यादि** ।

**देय तु न साधुभ्यस्तिष्ठन्ति यथा च ते तथा कार्यं । अक्षयनीव्या ह्येवं ज्ञेयमिद वशतरकाण्डम् ॥६/१५॥**

तज्जिनभवन कृत्वा **साधुभ्य तु न देय** यथा –> युष्मदीयमेतत्, तदत्र जीर्णोद्धारादि भवद्भिर्विधेय <– इति । किन्तु स्वयमेव तत् प्रतिजागरणीय, व्युत्पन्नश्रद्धानामात्यन्तिककारण विना साधूना द्रव्यस्तवनियोजनाऽयोगात् । **यथा च ते** = साधव सबालवृद्धास्तत्राऽऽयतने **तिष्ठन्ति तथा कार्यं अक्षयनीव्या हि** = निश्चितमहीयमान-चैत्यायतनसम्बन्धिमूलधनेन हेतुना कृत्वा । तद्धि मूलधन श्राद्धै सर्वप्रयत्नेन परिपालयद्भि सवर्धयद्भिश्च तथाऽक्षय

**कल्याणकन्दली**

मोक्षवृक्षस्य अवन्ध्य बीज एतत् = जिनभवन, यदुक्त विम्बाष्टके [७] तथा उपदेशसारे श्रीकुलसारगणिना उपदेशतरङ्गिण्याञ्च रत्नमन्दिरगणिना –> जिनभवन जिनविम्ब जिनपूजा जिनमत च य· कुर्यात् । तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥२७॥ <– इति । यदुक्त जिनभवनविधिपञ्चाशकेऽपि –> एयस्स फल भणिय इय आणाकारिणो उ सड्ढस्स । चित्त निव्वाणत जिणिदेहिं ॥ <– [७/४४] ॥६/१४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> साधुभ्य तु न देयम् । यथा च ते तिष्ठन्ति तथा अक्षयनीव्या हि कार्यम् । एव इद वशतरकाण्ड ज्ञेयम् ॥६/१५॥ अस्या कारिकाया उत्तरार्द्ध **प्रतिमाशतकवृत्त्यादौ** [गा.३१] समुद्धृत ।

**साधुभ्यः तु न देयमिति** । **केचित्तु** –> एतद्ग्रन्थप्रणेतृसमये चैत्यवासिना साधूना ईदृगुपदेशप्रवाह प्रचलित आसीत् यत् –> श्रावकेण जिनभवन कारापयित्वा तद्व्यवस्थाकृते तत् साधुभ्य समर्पणीयम् । गृहस्था हिसारम्भविवर्त्तिन. । हिंसाप्राय आरम्भ कृष्यादि तत्र विवर्तन्ते विविध परिणमन्तेऽभीक्ष्णमिति । अत तैर्न तस्य समुचिता व्यवस्था भवितुमर्हा । तैस्तत्राऽनेकविधा दोषा समुद्भवन्तो दृष्टिपथमवतरति । इमे दोषा एव चाशातनाख्या लभन्ते । अतो गृहिणा श्रद्धाशक्त्यनुरूप जिनसदन निर्मापणीयम् । तच्च महते धर्मानुबन्धाय, धर्मस्यानुबन्धोऽलब्धलाभो लब्धपरिरक्षण रक्षितवर्धनमित्येवमात्मक , तस्मै भवति । तत्र साधवो यथेच्छसमयमुषित्वा तत्र भगवद्दर्शनार्थमागतान् जनान् धर्ममुपदिशन्त रक्षाकृते सोद्यमा भविष्यन्ति <– इत्येव तेषामुपदेश श्रुत्वा धार्मिका जना पूर्व जिनभवन कारापयित्वा तद्रक्षाभिप्रायवशगता सन्त तत् साधुभ्य समर्पयन्ति स्म । तेऽपि च तत्रैवानन्दमग्नमनसो यदृच्छया निवास विधाय यथाकथञ्चिदुपदिशन्त स्व तस्य स्वामिन मन्वाना देवद्रव्यस्य रक्षास्थाने भक्षणमेव कुर्वन्ति स्म । तदा 'यथा गुरव तथा शिष्या ' इयमुक्तिश्चरितार्थाऽभूत् । यद्यप्यय काल. तस्मिन् समये तदुपदेशस्य वालकाल एवाऽऽसीत्, न तु तरुणकाल तथापीदृशी दुर्व्यवस्था तदा प्रादुरासीत् । तावन्मात्रामपि ता निरीक्ष्य 'भविष्यत्काले कि भविष्यति' इति चिन्तया नितरा दूयमानान्त करणेन सूरिणाऽत एवोक्त 'देय तु न साधुभ्य ' इति वदन्ति ।

**व्युत्पन्नश्रद्धाना** = परिणतश्रावकाणा आत्यन्तिककारण विना साधूना द्रव्यस्तवनियोजनायोगात्, षट्कायविराधनात् । तदुक्त **पुप्फमालाया** –> छज्जीवकायसजमो दव्वत्थए सो विरुज्झए कसिणो । तो कसिणसजमविऊ पुप्फाइय न इच्छति ॥२३४॥<– इति । **निश्चितमहीयमानचैत्यायतनसम्बन्धिमूलधनेन हेतुनेति**, निश्चित = नियमेन महीयमान = पूज्यमान व्यवस्थाप्यमान सरक्ष्यमाण यत् चैत्यायतन तथा तत्सलग्न साध्वादिप्रायोग्य सामायिक-प्रतिक्रमण-पौषध-प्रवचनागमव्याख्याना-

લક્ષ્મીનો આ જ માત્ર સાર છે તે સ્વર્ગ વગેરેના સાતત્યપૂર્વક નિશ્ચયથી મોક્ષરૂપી વૃક્ષનુ બીજ બને છે [૬/૧૪]

આ રીતે જિનાલય બનાવવાની વિધિ કહીને દેરાસરસબધી વિશેષ વક્તવ્યને મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** - (દેરાસરને સભાળવા રૂપે) સાધુઓને તો તે ન સોપવુ સાધુઓ જે રીતે ત્યા રહે તેવુ અક્ષયનીવિ = મૂલધન વડે કરવુ આ રીતે ખરેખર આ પોતાના વશને તરવાનુ સાધન બને છે તેમ જાણવુ [૬/૧૫]

## ❖ દેરાસરસંબંધી વિશેષ વક્તવ્ય ❖

**ટીકાર્થ** - તે દેરાસર તૈયાર કરીને સાધુઓને ન સોપવુ કે –> 'આ દેરાસર તમારુ છે તેથી અહીં જીર્ણોદ્ધાર વગેરે તમારે કરવુ ' <– પરતુ શ્રાવકે પોતે જ દેરાસરની સાર-સભાળ કરવી, કેમ કે જેઓની શ્રદ્ધા શાસ્ત્રવચન દ્વારા પરિકર્મિત થયેલ છે તેવા શ્રાવકોએ આત્યતિક = આગાઢ = કટોકટીના કારણ વિના સાધુઓને દ્રવ્યસ્તવમા જોડવા નહિ (દેરાસરની સારસભાળ એ દ્રવ્યસ્તવ છે અને સાધુઓ ઉત્સર્ગમાર્ગે દ્રવ્યસ્તવના = દ્રવ્યપૂજાના અધિકારી નથી ) બાલ, વૃદ્ધ વગેરે સાધુઓ જે રીતે તે દેરાસરમા અર્થાત્ દેરાસરસલગ્ન સાધુપ્રાયોગ્ય વસતિ ઉપાશ્રય વગેરેમા રહે = ઉતરે = નિવાસ કરે તેવુ અક્ષયનીવિ દ્વારા કરવુ નિયમા પૂજાઈ રહેલ દેરાસર સબધી જે મૂલધન હોય તે શાસ્ત્રીયપરિભાષામા અક્ષયનીવિ કહેવાય છે (દેરાસર તથા તેને સલગ્ન સાધુપ્રાયોગ્ય વસતિ વગેરે સબધી જે દ્રવ્ય હોય તેને અહીં 'ચૈત્યાયતન સબધી મૂલધન' શબ્દથી જણાવેલ છે વર્તમાનકાળમા તે દ્રવ્ય દેરાસર-ઉપાશ્રય નિભાવ ભડોળ વગેરે નામથી પ્રચલિત લાગે છે 'પૂજાઈ રહેલ' નો મતલબ છે સારસભાળ કરાઈ રહેલ, સ્નાત્રિમાન કરાઈ રહેલ, સુરક્ષિત કરાઈ રહેલ, વ્યવસ્થિત-સ્વચ્છ-સુઘડ કરાઈ રહેલ, સુવિધાયુક્ત કરાઈ રહેલ ) તે મૂલધનને = નિભાવફડને સર્વ પ્રયત્નથી સભાળતા અને વધારતા શ્રાવકોએ તેવી રીતે અક્ષય = સ્થાયી બનાવવુ જોઈએ કે જેથી અભિપ્રાયવિશેષથી શુદ્ધ થયેલ તે ધનથી બાલ, વૃદ્ધ, ગ્લાન વગેરે સાધુ તથા સાધર્મિક વગેરેને ટેકો-સહાય-રાહત મળી શકે (દેરાસર અને

कर्तव्य यथाऽभिसन्धिविशेषशुद्धेन तेन 'वाल-वृद्ध-ग्लानसाधु-साधर्मिकप्रभृतीनाम् पष्टम्भादाधाकर्मिकादिदोषरहित-तत्प्रतिवद्धवहिर्मण्डपादौ साधूनामवस्थान धर्मोपदेशाय कल्पते, क्षेत्रेऽपि च तादृशचैत्यस्फातिगुणयुक्त एव तेषाम-वस्थान कल्पते ।

कल्याणकन्दली

द्युपयोगि श्रमणवसत्यादिक तयो. सम्वन्धि यत् मूलधन अक्षयनीव्यभिधान, तेनेत्यर्थ. । "अभिसन्धिविशेषशुद्धेन = 'इद चैत्यायतनसम्वन्धिमूलधनमाजन्यकतानुसारेण साधु-श्रावकाद्युपष्टम्भेन चैत्य-तत्सम्वद्धमा पुवगतिमहिमादिलक्षणचैत्यस्फात्यर्थं जिनगृहे तत्सलग्नसाधुप्रायोग्यवसत्यादौ वा योज्य' इत्याशयविशेषपरिशुद्धेन" इति अधुनातना श्रीगुणरत्नसूरि-राजशेखरसूरिप्रभृतयः प्राहु । भक्तिद्वात्रिंशिकावृत्तौ च –> अव्ययनीवि = परिपालन-सवर्धनद्वाराऽहीयमानमूलधनम् <– [५/१०] इत्युक्तम् । यद्यपि सम्बोधसप्ततिवृत्तौ –> सति हि देवद्रव्ये प्रत्यह जिनायतने पूजा-सत्कारसम्भव । तत्र च प्रायो यतिजनसम्पात-स्तद्व्याख्यानश्रवणादेश्च जिनप्रवचनवृद्धि <– [गा ६६ वृ पृ ५१] इत्युक्त तथाप्यत्र चैत्यायतनसम्वन्धिमूलधन वर्तमानकालप्रसिद्ध-देवद्रव्यश्च मिथो भिन्नमेवेति अभिसन्धिविशेषशुद्धेन इति पदेनावगम्यते । यद्यपि देवद्रव्याद् भिन्नत्वेऽपि 'मूलधनस्य भाण्डागारो जिनालयस्यान्तर्वहिर्वाऽवस्थाप्यते ? जिनायतनसलग्नश्रमणायतने वा यदुताऽन्यत्र कुत्रचित् ?' इति तु स्पष्टोल्लेखाभावाद् दुर्ज्ञेयम् । तथापि 'चैत्यायतनसम्वन्धिमूलधन' पदेन पूर्वकाले जिनालयस्यान्तर्वहिर्वा साधु-साध्वी-साधर्मिकोद्धारादिकार्योपष्टम्भार्थ श्रावकादिभिर्वृद्धिमानीयमानो भाण्डागारोऽवस्थाप्यते स्मेति ज्ञायत इति अस्मद्विद्यागुरुचरणा श्रीजयसुन्दरविजयगणिवरा व्याचक्षते ।

एतच्च समीपवर्तिपूर्वकालापेक्षयाऽवगन्तव्यम् । अतिप्राचीनकाले तु जिनालये भाण्डागारस्थापनादिक नैवाऽऽसीत्, अन्यथा पूजाविधिप्रदर्शने श्राद्धदिनकृत्यादौ धूप-दीपाक्षतफलढौकनादिवत् 'भाण्डागारे नाणकढौकनादिक कार्य, जिनालयव्यवस्थापक-महाजनादिसान्निध्ये भाण्डागार उद्घाटनीयो नियतसमये' इत्यादि विधि प्रदर्शित स्यात् । न चैवमुपदर्शितम् । अतो ज्ञायते परिणतश्रावक स्वसन्निधौ समुद्गकविशेषे देवादिसत्कनाणकादिक रक्षयति, व्यवस्थापयति, वर्धयति च । श्राद्धदिनकृत्यवृत्तौ –> रत्नसमुद्गक = देवगृहभाण्डागार <– [गा १११] इति श्रीदेवेन्द्रसूरिवचनमप्यत्रानुसन्धेयमिति श्रुतवृद्धाः प्राहु ।

अन्ये तु –> पुण्यप्रवाहस्येद जिनभवन अक्षयनीवीव भूत्वा ससारसमुद्रात्तेषा [स्ववशजाना] उत्तारयितु प्रवहणमिव सपत्स्यते' <– इति वदन्ति । "जिनभवनमक्षयनीविवत् कर्तव्यम् । यथा रक्षण-व्याजवृद्ध्यादिना मूलधन न क्षीयते तथा ज्ञानादिगुणयोगक्षेमवृद्धिकारक जिनभवनमुचितव्यवस्था-रक्षणादिना न क्षीयते = सानुवन्धगुणलाभाय सम्पद्यते । एवमक्षयनीव्या उदाहरणेन इद जिनभवन वशतरकाण्ड = निखिलनिजवशजतरण्ड ज्ञेयमि"ति तेषामाशय । अत्रत्य तत्त्व बहुश्रुतेभ्योऽवसेयम् ।

धर्मोपदेशाय कल्पते इति । अत एवोक्त मुनिचन्द्रसूरिभिः उपदेशपदवृत्तौ –> चैत्याश्रयेण सविग्नगीतार्थसाधुभिरनवरत सिद्धान्तव्याख्यानादिभि तथा तथा प्रपञ्च्यमानै सम्यग्ज्ञानगुणवृद्धि सम्यग्दर्शनगुणवृद्धिश्च सम्पद्यते <– [गा ४१७ वृ पृ २३१/२३०] । पञ्चाशकवृत्तौ श्रीमदभयदेवसूरिभिरपि –> चैत्यगृहे हि प्राय आगमव्याख्यान भवतीति <– [पृ ४४/ वृ पृ ८५] प्रोक्तम् । तदुक्त प्रतिमाशतकवृत्तौ टीकाकृता अपि –> चैत्याऽऽनत्यर्थ उपनम्रा = उपनमनशीला ये साधवस्ते-षामेकदेशे देशनोद्यताना यानि वचासि तेषामाकर्णनात् कर्णयोरमृतमज्जनम् <– [गा ३१] इति । एतेन साधूना जिनालये गन्तुमेव न कल्पत इति प्रत्युक्तम्, प्रत्युत प्रतिदिन तदगमने प्रायश्चित्तस्योपदेशात्, यथोक्त महानिशीथे –> से भयव ! तहारूव समण वा माहण वा चेइयघरे गच्छेज्जा ? हता गोयमा ! दिणे दिणे गच्छेज्जा । से भयव ! दिणे न गच्छेज्जा तओ कि पायच्छित्त हवेज्जा ? गोयमा ! पमाय पडुच्च तहारूव समण वा माहण वा जो जिणघरे न गच्छेज्जा तओ छट्ठ अहवा दुवालसग पायच्छित्त हवेज्जा <– [ ] ।

न चैव सति चैत्ये एव साधव सदा तिष्ठेयु, आधाकर्मिकादिदोषवैकल्यादिति शङ्कनीयम्, तथाप्याशातनादिदोषभयेन तदननुज्ञातत्वात्, यथोक्त व्यवहारभाष्ये –> जइवि न आहाकम्म भत्तिकय तहवि वज्जयतेहि । भत्ती खलु होइ कया जिणाण लोए वि दिट्ठतो ॥ वधित्ता कासवओ वयण अट्ठपुडसुद्धपोत्तीए । पत्थिवमुवासए खलु वित्तिनिमित्त भया चेव ॥ दुब्भिगधपरिस्सावी तणुरप्पेसऽण्हाणिया । दुहा वाउपहो चेव तेण ठति न चेइए ॥ तिन्नि वा कड्ढई जाव थुईओ तिसिलोइया ।

તેને નલગ્ન ઉપાશ્રય વગેરેનુ નિર્માણ સાધુને ઉતરવા માટે થતુ નથી પરતુ શ્રાવકોની જિનભક્તિના તથા પૌષધ આદિ આરાધનાના ઉદ્દેશથી થાય છે માટે સાધુ માટે તે મકાન) આધાકર્મિક દોષથી રહિત હોવાથી દેરાસરની બહારના મડપ વગેરેમા ધર્મ ઉપદેશ માટે સાધુઓને રહેવુ કલ્પી શકે સામાયિક, પ્રતિક્રમણ, પૌષધ, પ્રવચનશ્રવણ વગેરે આરાધનામા સહાયક બનવાથી તે સ્થાન શ્રાવક, શ્રાવિકાઓને ટેકો આપે અને પ્રવચનકરણ, આગમવાચના આદિમા નિમિત્ત બનવાથી તે સ્થાન સયમીઓને પણ ટેકો આપનાર બને છે ક્ષેત્ર જો તથાવિધ

१ मुद्रितप्रतौ 'वाल्क' इति पाठ ।

एतद्गुणमन्तरेण तु क्षेत्रान्तरमाश्रयणीय स्यात् तेनासौ लोकोत्तरतत्त्वसम्प्राप्तिव्यवस्थितो गृही देश-कालाद्यपेक्षया साध्ववस्थानायैव सर्वमेव विधत्ते ।

**कल्याणकन्दली**

ताव तत्थ अणुन्नाय कारणेण परेण वि ॥ <— [व्य.भा.उद्दे.९ गा ७०/७१/७२/७३] इति ।

नन्वेव सति व्याख्यानार्थमपि तत्राऽवस्थान कथ युज्यते ? तद्दोषानतिक्रमादिति चेत् ? मैवम्, निश्राकृतचैत्ये कतिपयपरिणतसाधुयुक्तस्य गुरो अनिश्राकृतचैत्ये च सपरिवारस्य गुरो· व्याख्यानार्थ यतनया तिष्ठत. निर्दोषत्वात्, तदुक्त **श्राद्धदिनकृत्ये श्रीदेवेन्द्रसूरिभिः** —> निस्सकडे ठाइ गुरु कइवयसहिओ इयरा वए वसहि । अह तत्थ अनिस्सकड पूरिति तहि समोसरण ॥१५१॥ ओसन्नावि य तत्थेव इति चेइयवदया । तेसि निस्साइ त भवण सङ्ढाईहि कय पर ॥१५२॥ सेहाण मदसड्ढाण दट्ठु ताण तु चिट्ठय । मदा सद्धा जओ होइ, अणुट्ठाणे जिणाहिए ॥१५३॥ एएवि साहुणो लोए, अम्हेऽवि मलकिण्णया। एएण कारणेण तु वसहि पेसति साहुणो ॥१५४॥ <— इति । एतद्व्याख्या —> चैत्यानि तावच्छाश्वतादीनि चतुर्धा । तत्र शाश्वतचैत्य नन्दीश्वरादिषु १, भक्तिचैत्यमनिश्राकृत-निश्राकृतभेदात् द्विधा, तत्राऽनिश्राकृत यत् साधुसत्तारहित यथाऽष्टापदादिषु, निश्राकृत यत् साधुनिश्रया क्रियते २, मङ्गलचैत्यमुत्तरङ्गादिषु यथा मथुराया ३, साधर्मिकचैत्य वारत्तिकप्रतिमादि ४ । तत्र निश्राकृतचैत्ये गुरुर्व्याख्यानार्थं कतिपयपरिणतसाधुसहित तिष्ठति, इतरे शिक्षकादयो व्रजन्ति वसतिम् । अथ च तत्राऽनिश्राकृत चैत्यमस्ति 'पूरिति तहि समोसरण'ति तत्र चैत्ये सपरिवारा आसते ॥१५१॥ किमेव न निश्राकृतेऽपीष्यते ? इत्याह अवमग्ना [=अवसन्ना शिथिलसाधव ] अपि चैत्यवन्दकास्तत्राऽऽयान्त्येव, यत तद् जिनभवन श्राद्धादिभि पर तेषा निश्रया कृतमिति ॥१५२॥ तत· किम् ? इत्याह - तत्र तेषा अवमग्नाना चेष्टित 'दगपाण पुप्फफल अणेसणिज्जमि'त्यादिक दृष्ट्वा शैक्षाणा = अभिनवदीक्षिताना मन्दश्रद्धाना चातिपरिणामिकादीना मन्दा श्रद्धा यतो भवति अनुष्ठाने जिनाख्याते व्रतसमित्यादिके क्रियाकलापे ॥१५३॥ मन्दश्रद्धत्वाच्च तत्र ते यदभिधारयति तदाह - 'एवविधा अपि एते साधवो लोके तावद्वन्दनादिभि सत्क्रियन्ते, वय पुनरेवमेव मलाऽऽविलगात्रोपधय ' । एवञ्च तेषा भगवदाज्ञार्थमपह्नुवाना भावचारित्रमप्यपैति । तेनैव कारणेन तान् साधून् शैक्षकादीन् वसति सूरय प्रेषयन्ति ॥१५४॥ <— इति । तदुक्त **बृहत्कल्पभाष्येऽपि** —> जत्थ पुण अनिस्सकड पुरिति तहि समोसरण ॥ <— [१८०५] अवमग्नादिविरहे निश्राकृतचैत्येऽव्याख्याने लोकापवादादिदोष , यथोक्त **बृहत्कल्पभाष्ये** —> पूरिति समोसरण, अन्नाऽसइ णिस्सचेइएसु पि । इहरा लोगविरुद्ध सद्धाभगो य सड्ढाण ॥१८०७॥ <— इति । पूर्वकाले आचार्यादि जिनायतने व्याख्यानार्थमागच्छन्ति स्म, तदनागमने च तद्वसतौ श्रावका आगच्छन्ति स्म । तदुक्त **श्राद्धदिनकृत्ये** —> अह धम्मदेसणत्थ च तत्थ सूरी न आगओ । पुव्वुत्तेण विहाणेण वसहीए गच्छए तओ ॥१४६॥ <— इति । तत्थ = जिनायतने । —> आणदपुरे मूले चेइयघरे सव्वजणसमक्ख कड्ढिज्जति <— [नि भा ३२२० भाग-३-पृ १५८] इति **निशीथचूर्णि**विलोकनेनाऽपि प्राचीनकाले चैत्ये जिनागम व्याख्यायते स्मेति निर्विवाद निश्चीयते । **श्राद्धदिनकृत्ये श्रीदेवेन्द्रसूरिभिरपि** —> सप्तदश चैत्यगृहाऽऽगमश्रवणद्वार <— [गा २२४-भाग-२] इत्येवमुक्तम् । **गुरुतत्वप्रदीपेऽपि** —> पौषधशालायामवस्थितेषु श्रीअरिष्टनेमिदेवगृहे व्याख्यान विदधानेषु प्रभुश्रीदेवसूरिषु <— [गा.३७] इत्येव दर्शित सन्दर्भोऽप्येतदनुपात्येव ।

**केचित्तु** —> आधाकर्मदोषविवर्जिता जिनायतनस्य बहिर्भागेऽनतिदूरे श्रावकेणोपदेशशाला निर्माप्या । तत्रैव मुनीना स्थिति समुचिता, न जिनभवनाभ्यन्तरे आशातनादिदोषसमुद्भवात् । उपाध्यायोऽपि 'बहिर्मण्डपादौ' अनेन वाक्येनेदमेव तावत्समर्थयति । जिनायतनस्य बहिर्भागे उपदेशशालानिर्मापणविधाने तावदिद प्रथम कारण प्रतीयते-यज्जिनायतने पूजावन्दनार्थमागता· श्रावका जिन समभ्यर्च्य नमस्कृत्य च व्याख्यानशाला समागत्य तत्रोपदिशद्भ्यो मुनिभ्यो वन्दित्वा तेषा मुखारविन्दाद् धार्मिकमुपदेश श्रुत्वा धर्म लभताम् । एतादृशानि स्थानानि मेदपाटक[मेवाड]-मालवा-मरुधरदेशस्थेषु प्राचीनजिनायतनेषु विद्यमानानि साम्प्रतमप्युपलभ्यन्ते । द्वितीय कारण यत्तस्मिन् समये यवनाधिपतयो मूर्त्तिविध्वसनैकबद्धकक्षा परस्त्रीलम्पटाश्चासन् तदा धार्मिका जना स्वीया धर्म्या क्रिया न प्रकाशवृत्त्या कर्त्तुमुत्सहन्ते स्म किन्तु तास्तैर्गुप्तवृत्त्या एवाराध्यन्ते स्म । कुलीना नार्योऽप्यनार्येभ्यस्तेभ्यो भयत स्वशीलादिसरक्षणाभिप्रायतो धर्मायतन विमुच्य प्रायो न गच्छन्ति स्मेतस्ततस्तदा । अतस्तासामपि धार्मिकोपदेशलाभो भवेदिति भावनया प्रेरिता श्रावका जिनायतनसमीप एव तदा व्याख्यानशाला निर्मापयन्ति स्म । परन्तु इय व्यवस्था जिनायतने आशातनादिदोषोत्पादकत्वात्साम्प्रत नाद्रियते । इदानीन्तनकाले तु जिनायतनाद्भिन्नस्थले एवोपाश्रयो

જિનાલય વગેરે ગુણથી સપન્ન ન હોય તો સાધુઓએ બીજે ઠેકાણે સ્થળાતર કરવુ પડે માટે લોકોત્તર તત્ત્વને પામેલો કુશળ શ્રાવક દેશ-કાળ વગેરેની અપેક્ષાએ સાધુઓ દેરાસરસલગ્ન મકાનમા ઉતરે તે માટે જ આવુ બધુ કરે આમ ઉપરોક્ત પ્રકારે આ જિનભવન જીર્ણોદ્ધાર દ્વારા પોતાના સપૂર્ણ વશને તરવા માટે કાષ્ઠ સમાન છે, કારણ કે પોતાના વશમા થનારા અનેક પુરુષોના સમૂહને આશ્રયીને થનાર ઉપકારનુ

एव = उक्तन्यायेन **ज्ञेय इद** = जिनभवन शीर्णोद्धारद्वारेण अनेकपुरुषसन्तानाश्रितोपकारफलस्याऽवन्ध्यत्वात् वशस्य सकलस्यैव तरकाण्ड = तरणकाष्ठ, एव हि कुर्वता सकलोऽपि भाविपुरुषप्रवाह ससारान्निस्तारितो भवति ।

**कल्याणकन्दली**

निर्माप्यते । श्रीहरिभद्राचार्याभिप्रायेणापि नात्र कश्चिद्विरोधोऽवतरति । आर्यायामस्या ''तिष्ठन्ति ते यथा च तथा कार्यम्'' इत्यस्यैव तावत्तै प्रतिपादितत्वात् । निर्मापयिता गृहस्थ एव स्वीया सुविधामवलोक्य तदनुसारेण वसतिका व्याख्यानशाला च जिनायतनसमीपस्था तद्दूरस्था वा निर्मापयेदित्यत्र तस्य स्वेच्छैव बलीयसी । शास्त्रे तु एतावन्मात्रमेवोक्त यत् तेन सद्गृहस्थेनावश्य मुनिवसतिका व्याख्यानशाला च निर्मापणीयेति । अन्यथा मुनीनामनागमत सद्धर्मोपदेशालाभेन धर्माधर्मापरिज्ञानत स्वय लब्धमपि मानुष्य जन्म निष्फल भवेत् । धर्मविमर्शशून्या स्वजाति धर्मज्ञानविवर्जितश्च स्ववशोऽपि जायेत। अतो यत्र जिनालयसद्भावस्तत्र मुनीनामागमनमपि भवत्येव । अतस्तान् वस्तु वसतिका तन्मुखारविन्दाच्च व्याख्यानश्रवणार्थ व्याख्यानशालाऽवश्यमेव निर्मापणीया । <— इति **वदन्ति** ।

अधुनातना **श्रीराजशेखरसूरयस्तु** —> पूर्वकाले चैत्यनिर्माणावसरे श्रावका साध्ववस्थानाय स्वपौषधाद्यनुष्ठानार्थश्च जिनालयसलग्न तत्प्रतिबद्ध तत्समीपतरवर्ति वा श्रमणालय निर्मापयन्ति स्म यदत्र आयतनपदात् चैत्यायतनपदाच्च व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायेन प्रतिपाद्यते । **एतेन** जिनगृहे कथ साधूनामवस्थान कल्पते ? इति शङ्का **परिहता**, 'गङ्गाया घोष' इतिवत् आयतनपदस्य चैत्यसम्बन्धिनि श्रमणायतने लक्षणामङ्गीकृत्य 'साधव सबालवृद्धा तत्राऽऽयतने = चैत्यायतनसम्बन्धिनि श्रमणायतने तिष्ठन्ति' इत्यस्याऽप्यर्थस्य सम्भवाचेति **प्राहु**: । एतेन —> साधू चेइए वा पोसह उवासेतो उवासगो भवइ <—[उद्दे १४-भाग ३-पृ ४७३] इति **निशीथचूर्णिवचनमपि** व्याख्यातम्, चैत्यसलग्न-पौषधायतनोपभोगेन साधर्मिकोपष्टम्भसम्भवात् । —> चउसु ठाणेसु निअमा कायव्व त जहा [१] चेइयघरे [२] साहुमूले [३] घरे वा [४] पोसहसालाए वा आवस्सग करितो त्ति <— [ ] इति **आवश्यकचूर्णिवचनमप्यत्रानुसन्धेयम्** । चैत्यविरहे साध्वागमाभावात् तादृशक्षेत्रे श्रावकाणामपि स्थातु न कल्पते, तदुक्त **श्रावकप्रज्ञप्तौ** श्वेताम्बरशिरोमणिभि **उमास्वातिवाचकै** —> निवसिज्ज तत्थ सड्ढो साहूण जत्थ होइ सपाओ । चेइयघराइ जत्थ य तयन्नसाहम्मिया चेव ॥३३९॥<— इति । **श्रावकधर्मविधौ मूलकारैरपि** —> निवसिज्ज तत्थ सड्ढो साहूण जत्थ होइ सपाओ । चेइयहराइँ य जम्मि तयन्नसाहम्मिया चेव ॥१११॥ <— इत्युक्तम् । **श्रावकाष्टकेऽपि** —> तत्र धाम्नि निवसेद् गृहमेधी सश्रयन्ति खलु यत्र मुनीन्द्रा' । यत्र चैत्यगृहमस्ति जिनाना श्रावका परिवसन्ति च यत्र ॥ <— [४] इत्युक्तम् । **आत्मप्रबोधेऽपि** —> न चैत्यसाधर्मिकसाधुयोगो यत्रास्ति तद्ग्रामपुरादिकेषु । युतेष्वपि प्राज्यगुणै. परैश्च कदापि न श्राद्धजना वसन्ति ॥ <— [७५/२०] इत्युक्तम् ।

**शीर्णोद्धारद्वारेण** इति । जीर्ण-शीर्णजिनभवनोद्धारेण स्वात्मोद्धार कृतो भवति । तदुक्त **श्राद्धदिनकृत्ये** —> जिणभवणाइ जे उद्धरति भत्तीइ सडियपडियाइ । ते उद्धरति अप्पाण भीमाओ भवसमुद्दाओ ॥ <— [१००] इति । —> जिन्न विहडियसधि निन्नट्ठधय च चेइय दट्ठु । तमुवेक्खिऊण अन्न कुसलेण न जुज्जए काउ ॥ इहरा मग्गुच्छेओ न माणविजओ जिणे य न य भत्ती । तम्हा सय सामत्थे तमुद्धरतो वर कुज्जा ॥ <—[पृ ६७/गा १२/१३] इति **कथारत्नकोशगाथे** प्रकृते दृढमवधेये । **उपदेशतरङ्गिण्या श्रीरत्नमन्दिरगणिभिरपि** —> जीर्णोद्धार कृतो येन विभवेन सुचारुणा । जिनाज्ञा पालिता तेन क्लेशकूपारपारदा ॥ <—[तरङ्ग २/पृ १०८] इत्युक्तम् । नवीनजिनालयनिर्मापणादप्यष्टगुण फल जीर्णोद्धारे स्यात्, यदुक्त **धनेश्वरसूरिभिः शत्रुञ्जयमाहात्म्ये** —> नूतनार्हद्वरावासविधाने यत्फल भवेत् । तस्मादष्टगुण पुण्य जीर्णोद्धारे विवेकिनाम् ॥[श मा ५/४९२-उपदेशतरङ्गिण्या-तरङ्ग-२ पृ १०६] इति । **तरणकाष्ठमिति** । जिनभवनवत् जिनपूजाया अपि तरणकाष्ठत्वमवसेयम् । यथोक्त **पूजाविंशिकाया** —> तम्हा जिणाण पूया वुहेण सव्वायरेण कायव्वा । परम तरडमेसा जम्हा ससारजलहिम्मि ॥१९॥

**निस्तारितो भवति**, —> 'मलिनारम्भानुवन्धस्य छिदा जिनप्रासादात्' इति कर्तव्यताऽनुसन्धाने सदारम्भाध्यवसायस्यैव प्राधान्यादितरस्याऽऽनुषङ्गिकत्वात्, तत्प्रवाहप्रवृत्त्यैव वशतरणोपपत्ते <—[प्र श गा ३१ पृ २१३] इति व्यक्त **प्रतिमाशतकवृत्तौ** । अनुमोदनात् निजवशस्येवान्येषामप्युद्धारस्स्याद्, यथोक्त **श्राद्धदिनकृत्ये** —> अप्पा उद्धरिओ चिअ उद्धरिओ तह य तेहि निअवसो । अन्ने अ भव्वसत्ता, अणुमोअता उ जिणभवण ॥१०१॥ खविअ नीआगोअ उच्चागोअ च बधिअ तेहि । कुगइपहो निट्ठविओ सुगइपहो अज्जिओ तेण ॥१०२॥ <— इति । **एतेन** —> धर्म श्रुतोऽपि दृष्टोऽपि कृतो वा कारितोऽपि वा । अनुमोदितोऽपि नियत पुनात्यासप्तम कुल ॥ <— [८] इति आचारोपदेशकृत **चारित्रसुन्दरगणिनो** वचनमपि व्याख्यातम्,

ंग अवध्य = अमोघ छे आ रीते देरासर बनावता गृहस्थे पोताना बधाय वशजेना प्रवाहने ससारथी तारी दीधेल थाय छे पोताना

पूर्वपुरुषपक्षपाताऽऽहिततच्चैत्यभक्तिविशेषेण स्ववशेन [1]सद्धर्मप्रवृत्त्युपलम्भात्, इतरचैत्येष्वपि यथाशक्ति भक्त्यत्यागेन [2]मिथ्यात्वाद्यसिद्धेरिति द्रष्टव्यम् ॥६/१५॥

**कल्याणकन्दली**

**पूर्वपुरुषपक्षपाताऽऽहिततच्चैत्यभक्तिविशेषेण** = स्वकुलोत्पन्नमहनीयपितामहादिगोचरो यो गौरव-प्रीत्यादिरूपः पक्षपातः तेन उपस्थापितो यः स्वपूर्वपुरुषनिर्मापिताऽर्हत्प्रासादसम्बन्धी भक्तिविशेषः तेन **स्ववशेन** = स्ववंशोत्पन्नभाविपुरुषप्रवाहेण **सद्धर्मप्रवृत्त्युपलम्भात्** = स्वपूर्वजकारापितजिनालयनिर्वाह-तन्निभालन-सरक्षण-सस्करण-सवर्धन-समुद्धरणादिलक्षणायाः सद्धर्मप्रवृत्तेः साम्प्रतमपि दर्शनात् । न चेत्थं स्वपूर्वजसम्बन्धी पक्षपात एव परिपुष्टः स्यात्र तु जिनगृहविषयो भक्तिविशेष इति **शङ्कनीयम्**, सदारम्भेनाऽसदारम्भनिरासात्, चैत्यलक्षणविषयशुद्धचा कर्मक्षयादिस्वरूपस्वप्रयोजनशुद्धचा उत्तरकालभाविन्या विधि-यतनादिपरिणत्या च स्वपूर्वजपक्षपातनिष्ठत्वेन सम्भवतः सूक्ष्मस्याऽप्राशस्त्यादिलक्षणस्य दोषस्य प्रतिबन्धात्, यतनादिगर्भप्रवृत्तिसातत्येन चित्ते धर्मपरिणामस्यैव स्फुरणाच्च । न हि निरनुबन्धस्य प्राथमिकप्रवृत्तिकालीनस्य दोषस्य सद्धर्मप्रवृत्त्यादिना उपक्षीणता सर्वज्ञाऽनभिमता । इत्थमेव –> लज्जातो भयतो वितर्कवशतो मात्सर्यतः स्नेहतः, लोभादेव हठाभिमानविनयशृङ्गारकीर्त्यादितः । दुःखात् कौतुक-विस्मय-व्यवहृतेर्भावात् कुलाचारतो वैराग्याच्च भजन्ति धर्ममसमं तेषाममेयं फलम् ॥ <– [पृ २६४] इति उपदेशतरङ्गिणीप्रभृतिसंवादवचनमप्युपपद्यते । न चैवं स्वपूर्वपुरुषकारितचैत्ये भक्तिविशेषेऽपि तदन्येषु जिनालयेषु भक्तिपरित्यागेन मिथ्यात्वोदयापत्तिरिति **शङ्कनीयम्**, **इतरचैत्येष्वपि** = स्वपूर्व-पुरुषनिर्मापितभिन्नेष्वपि जिनगृहेषु द्वेषादिविरहेण **यथाशक्ति** अवसराऽऽनुगुण्येन **भक्त्यत्यागेन मिथ्यात्वाद्यसिद्धेः** । सापेक्षतयाऽन्यनयाभिमतांशमनपलपतः प्राधान्येन स्वविषयं व्यवस्थापयतः सुनयस्य मिथ्यात्वाद्यसिद्धिवदिदं विभावनीयम् ॥६/१५॥

પૂર્વજો પ્રત્યેના પક્ષપાતથી/આદરથી તેમણે બનાવેલ દેરાસર પ્રત્યે વિશેષ પ્રકારની ભક્તિ રાખતા દેરાસરકારકના વંશ-વારસાગત પુરુષસમુદાય દ્વારા સદ્ધર્મની પ્રવૃત્તિ (= સ્વપૂર્વજોએ બનાવેલ દેરાસરના સમારકામ, સારસભાળ, દેખભાળ વગેરે સ્વરૂપ ધર્મપ્રવૃત્તિ) થતી જોવામા આવે છે બીજા જિનાલયોને વિશે પણ યથાશક્તિ ભક્તિ રાખવાથી મિથ્યાત્વ વગેરેનો ઉદય નહિ થાય આમ જાણવુ [૬/૧૫]

<u>**વિશેષાર્થ**</u> - આ ગાથામા મુખ્ય પાચ બાબત નોધપાત્ર છે [૧] શ્રાવક કારીગરો દ્વારા દેરાસર બનાવી - તૈયાર કરી તેનો વહિવટ, સારસભાળ, દેખભાળ, જીર્ણોદ્ધાર વગેરે પોતે જ કરે તેનો વહિવટ, જીર્ણોદ્ધાર વગેરે સાધુને ન સોપે, કારણ કે ગીતાર્થ સાધુ ભગવતોને આત્યતિક કટોકટીની સ્થિતિ વિના દેરાસરની સારસભાળ વગેરેમા શ્રાવક ન જોડે આ રીતે જ સાધુ ભગવતો નિર્મળ સયમજીવનની સાધના કરી શકે ચૈત્યવાસના કાળમા સાધુઓ ચૈત્યના માલિક થઈ જીર્ણોદ્ધાર કરાવતા તેનો અહીં નિષેધ કર્યો છે પૈસા સાધુને સોપી 'તમે જીર્ણોદ્ધાર કરાવી લો' એમ શ્રાવકે ન કહેવુ [૨] 'આયતન' શબ્દથી કેવળ જિનમદિર જ વિવક્ષિત નથી પરતુ જિનમદિર + જિનમદિરને અડીને રહેલુ અથવા જિનમદિરની તદ્દન નજીકમા રહેલુ સાધુઓ ઉતરી શકે તેવુ સ્થાન પણ વિવક્ષિત છે સાધુને રહેવાનુ સ્થાન જિનમદિરને સલગ્ન હોવાથી આયતન કે ચૈત્યાયતન શબ્દથી તેનો ઉલ્લેખ કરી શકાય છે પૂર્વકાલીન અને વર્તમાનકાલીન અનેક જિનમદિરના એક જ કપાઉંડમા-પરિસરમા જિનમદિરને અડીને કે જિનમદિરની નીચે કે જિનમદિરની તદ્દન નજીક કે પાછળ સાધુ ભગવતો ઉતરી શકે તેવુ સ્થાન વર્તમાનકાળે પણ ઉપલબ્ધ થાય છે દેરાસરસબધી ઉપાશ્રયો લગભગ દેરાસરના નામે પ્રસિદ્ધ થતા હોવાનો સહુને અનુભવ છે જ મુબઈ-ભાયખલામા ચૈત્યસબદ્ધ વ્યાખ્યાનમડપ પ્રસિદ્ધ જ છે માટે 'साधवः सबालवृद्धाः तत्र आयतने तिष्ठन्ति' આ સ્થળે व्याख्यानतो विशेषप्रतिपत्तिः આ ન્યાયથી કે गङ्गायां घोषः આ ન્યાયથી શ્રાવકોને સામાયિક-પ્રતિક્રમણ-વ્યાખ્યાનશ્રવણ આદિ આરાધના માટે દેરાસરની નજીકમા-નીચે-પાછળ-બાજુમા બાધેલુ સ્થાન સમજવુ એવા સ્થાનમા સાધુપ્રાયોગ્ય વસતિ-જગ્યા હોવાથી ત્યા સાધુ ભગવતો ઉતરી શકતા હતા માટે 'સાધુઓ દેરાસરમા કેવી રીતે ઉતરે ?' આ પ્રશ્નને અવકાશ નથી રહેતો મોક્ષમાર્ગ સમજવા વ્યાખ્યાનશ્રવણ એ શ્રાવકના જીવનમા મહત્ત્વની આરાધના છે જો સાધુ ભગવતો દેરાસરની નજીકમા રહે તો જ જિનદર્શન-પૂજા-ભક્તિના ઉદ્દેશથી દેરાસર આવેલ શ્રાવક-શ્રાવિકાને જિનપ્રવચન-શ્રવણનો લાભ મેળવવામા અનુકૂળતા રહે માટે સાધુ માટે તે સ્થાન આધાકર્મદોષવાળુ નથી બનતુ

અતિપ્રાચીનકાળના સાધુ ભગવતો જૈનેતર ભદ્રક લોકોના ઘરમા કે ઉદ્યાનગૃહ વગેરેમા રહેતા હતા ત્યારે પણ વ્યાખ્યાન તો દેરાસરના બહારના ભાગમા-બાહ્ય મોટા રગમડપમા જ આપતા, નહિ કે પોતે જ્યા રહેતા તે ઈતરલોકોના ઘરમા આનુ કારણ એ હતુ કે ત્યા વ્યાખ્યાન માટે પૂરતી જગ્યા હોય કે નહિ ? તે પણ નિશ્ચિત નહોતુ તેવા ઉતરવાના સ્થાનો પણ અલગ-અલગ હોવાથી શ્રાવકવર્ગને તેનો નિર્ણય થવામા મુશ્કેલી રહે વળી, ત્યાના શય્યાતરને પોતાના ઘરમા વ્યાખ્યાન માટે શ્રાવકવર્ગ આવે-તે પસદ પડે કે અરુચિનુ નિમિત્ત બને ? તે પણ એક સમસ્યા હતી વળી, તે સ્થાન જો દેરાસરથી ઘણુ દૂર હોય તો શ્રાવક વગેરે વ્યાખ્યાનશ્રવણના લાભથી વચિત રહી જાય- એવી શક્યતા પણ વધુ રહેતી પરતુ સઘયણ નબળા પડવાથી તેમ જ બાલ-વૃદ્ધ-ગ્લાન વગેરે કારણે સાધુ ભગવતોને દૂર રહેલ વસતિથી દેરાસર દર્શન-ચૈત્યવદન કરવા માટે આવવામા તકલીફ પડે સવારે દર્શન કર્યા બાદ વ્યાખ્યાન માટે ફરીથી દૂરથી દેરાસર આવવામા વ્યાખ્યાન કરનાર તેમ જ બીજા પણ સાધુ ભગવતોને તકલીફ પડે વરસાદ વગેરે તકલીફના કારણે કદાચ વ્યાખ્યાન માટે સાધુ ભગવત દૂરની વસતિથી દેરાસર ન આવી શકે તેવુ પણ બને આમ દૈનિક વ્યાખ્યાનશ્રવણમા શ્રાવકને વારવાર વ્યાઘાત થાય દેરાસર અને વસતિ ખૂબ દૂર હોય તો સાધુ ભગવતો તે ગામમા ન રહે તેવુ પણ બને આવુ ન થાય તે માટે દેશ-કાલ-પરિસ્થિતિને ઓળખી પરિણત શ્રાવક દેરાસરસલગ્ન સ્થાનમા સાધુ ભગવત ઉતરી શકે તે બાબતનો દેરાસર બધાવતી વખતે ખ્યાલ રાખે તો જ શ્રાવકવર્ગમા ધર્મ-આરાધનામા જાગૃતિ આવી શકે

१ मुद्रितप्रतौ ह प्रतौ च 'सद्धर्मप्रत्युपालम्भात्' इत्यशुद्ध पाठ । २ ह प्रतौ - 'मिथ्यात्वोसिद्धे' इति पाठ ।

ननु पृथिव्याद्युपमर्दमन्तरेण जिनभवनकारणं न सम्भवति । तत्र च नियमेन हिंसेति कथमतो धर्मवृद्धिरित्याशङ्कयाह --> 'यतनात' इत्यादि ।

यतनातो न च हिंसा यस्मादेषैव तन्निवृत्तिफला । तदधिकनिवृत्तिभावाद्विहितमतोऽदुष्टमेतदिति ॥६/१६॥

कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> यतनातश्च न हिंसा, यस्मात् एषा एव तन्निवृत्तिफला, तदधिकनिवृत्तिभावात् । एतद् विहितम् । अतोऽदुष्टमिति ॥६/१६॥ इयञ्च कारिका अधिकारविंशिकावृत्ति-प्रतिमाशतकवृत्ति-कूपदृष्टान्तविशदीकरण-षष्ठिशतकवृत्त्यादौ [अ वि गा १२ प्र श गा ३० तथा गा ६० पृ ३१७ कू ८] अतिदिष्टा ।

[३] આમ ગૃહસ્થ દેરાસર બનાવે ત્યારે દેશ-કાળને ઓળખી તેની સાથે સાથે સાધુઓ ઉતરી શકે તેવુ દેરાસરસલગ્ન સ્થાન [આરાધનાભવન-પૌષધશાળા-ઉપાશ્રય જેવુ] પણ બનાવે તથા બન્નેના નિભાવ માટે પહેલેથી અમુક રકમ કે આવક શ્રાવકો રાખતા રકમ મૂકતી વખતે શ્રાવકો એવો આશય રાખે કે "આ મૂળધનનો સદુપયોગ દેરાસરની સુરક્ષા, દેખરેખ, વ્યવસ્થા વગેરે ઉપરાત અહીં દેરાસરસલગ્ન સાધુવસતિ આદિમા પધારનારા બાલ, વૃદ્ધ વગેરે તમામ સાધુભગવતો અને સાધર્મિકોના અવસ્થાન માટે થાય, જેના લીધે ચૈત્યસ્ફાતિ વધે" અહીં એક વાત ધ્યાનમા રાખવી કે દેરાસર, દેરાસરસલગ્ન આરાધનાભવન આદિ સ્થાન સાધુ, શ્રાવક આદિની આરાધનામા ઉપયોગી થવાના લીધે તેનાથી સાધુ, શ્રાવક આદિનો ઉપષ્ટભ = ટેકો-સહાય થાય તો જ ચૈત્ય અને તેને સલગ્ન સાધુપ્રયોગ્ય વસતિ આદિનો મહિમા વધે આ ચૈત્યસ્ફાતિ કહેવાય જેમ વર્તમાનકાળમા યાત્રાળુ વગેરેની વ્યવસ્થા આદિ બરાબર સચવાય તો તીર્થ વગેરેનો મહિમા વધે, અધિક યાત્રાળુ આવે ઉપરોક્ત ચૈત્યસ્ફાતિ-ચૈત્યમહિમા વધારવાના શુભ આશયથી મૂલધન એકત્રિત થયેલ છે

દેરાસર બનાવનાર કે ચૈત્યસબધી મૂલધનને સ્થાપિત કરનાર-એકત્રિત કરનાર-વધારનાર શ્રાવકો કે વ્યવસ્થાપકોના ઉપરોક્ત અભિસધિવિશેષથી = વિશિષ્ટ અભિપ્રાયથી ચૈત્યાયતન તથા તત્સલગ્ન વસતિ સબધી મૂલધન શુદ્ધ થયેલ છે આથી તે દ્રવ્ય ઉપરોક્ત રીતે સાધુ-શ્રાવક માટે ઉપષ્ટભક બની શકે છે તેનાથી સાધુ ભગવતો કે શ્રાવકોને કોઈ દોષ લાગતો નથી પ્રસ્તુતમા અક્ષયનીવિ = મૂલધન અને વર્તમાન કાલમા પ્રસિદ્ધ દેવદ્રવ્ય આ બે એક જ વસ્તુ નથી- એટલુ ધ્યાનમા રાખવુ અક્ષયનીવિ પદથી જિનાલય + જિનાલયસબદ્ધ ઉપાશ્રય-આ બન્ને સબધી સાધારણ મૂલધન-મૂડી એમ સમજવુ તેની માવજત-વૃદ્ધિ ગૃહસ્થે કરવાની છે નજીકના પૂર્વ કાળમા દેરાસરમા કે દેરાસરની બહાર આવો ભડાર દેરાસર-સાધુ-સાધ્વી-સાધર્મિકોદ્ધાર આદિ કાર્યના ઉપષ્ટભ-ટેકા માટે રાખવામા આવતો હશે તેની વૃદ્ધિ શ્રાવકો કરતા હશે-એમ લાગે છે આથી સાધુ ભગવતોને તે મકાનના વપરાશમા દેવદ્રવ્યભક્ષણનો દોષ લાગતો નથી

અમુક આગમમર્મજ્ઞ વિદ્વાનોનુ એવુ મન્તવ્ય છે કે અતિપ્રાચીનકાળમા દેવદ્રવ્ય વગેરે માટે ભડાર મૂકવાની પ્રથા હતી નહિ કારણ કે શ્રાદ્ધવિધિ આદિ ગ્રથોમા જ્યા દેવદ્રવ્ય, દેરાસર વગેરેની વ્યવસ્થા આદિ સબધી જે વાતો આવે છે ત્યા દેરાસરની અદર મૂકેલ ફળ, નૈવેદ્ય વગેરેની જ વાત આવે છે કોઈ ઠેકાણે રોકડ રકમની વાત આવતી નથી આ જ સૂચવે છે કે દેવદ્રવ્ય આદિની વ્યવસ્થા-વહીવટ શ્રાવક પોતે જ પોતાના ઘરે કરતા તે માટે અલગ નાણાની કોથળી, ડાબડો વગેરે રાખતા અને તેમા જ રોકડ દેવદ્રવ્ય શ્રદ્ધાસપન્ન શ્રાવકને ત્યા રહેતુ આ બાબતમા શ્રાદ્ધદિનકૃત્યમા ગાથા ૧૧૧ ની ટીકામા 'रत्नसमुद्गक = देवगृहभाण्डागार' આવો ઉલ્લેખ મળે છે જે ખૂબ જ માર્મિક છે જો અતિપ્રાચીન કાળમા દેરાસરમા દેવદ્રવ્ય, ચૈત્યસબધી મૂલધન વગેરેનો ભડાર રાખવાનો પ્રસિદ્ધ રીવાજ હોત તો જે રીતે શ્રાદ્ધવિધિ, શ્રાદ્ધદિનકૃત્ય વગેરેમા પૂજાવિધિ વખતે ધૂપ, દીપ, અક્ષતાદિની વાત આવે છે તેમ જ દેરાસરમા મૂકેલ ફળ, નૈવેદ્ય વગેરે સ્વરૂપ દેવદ્રવ્યની વ્યવસ્થાની વાત આવે છે તે જ રીતે દેરાસરમા રાખેલ ભડારમા શ્રાવકોએ પૈસા નાખવા તથા પચસમક્ષ તેને ખોલવો ઈત્યાદિ વિધિ વગેરે જરૂર બતાવત પરતુ તે પ્રકારનુ કોઈ વિધાન દેખાતુ નથી આથી ભડારાદિની પ્રથા નજીકના ભૂતકાળની છે, અતિપ્રાચીન કાળની નહિ - આ વાત ખ્યાલમા રાખવી 'રત્નસમુદ્ગક'ની જેમ 'નાનારત્ન સમુદ્ગક' આવો શબ્દ આ સબધમા મળે છે, જે ખૂબ માર્મિક છે આથી તે ધન ઉપરોક્ત રીતે સાધુ-સાધ્વી-શ્રાવકાદિને ઉપષ્ટભક બને તો તે અશક્ય નથી

અમુક ઐતિહાસવિદ્ વિદ્વાનોનુ એવુ કથન છે કે પૂર્વે દેરાસરના ગર્ભગૃહમા પ્રભુજી રહેતા, બાહ્ય રગમડપમા વ્યાખ્યાનાદિ તથા ધાર્મિક નાટકો ભજવવાનુ કામ થતુ બારમા સૈકામા ઘણા નાટકો બન્યા છે કે જે દેરાસરના રગમડપમા ભજવાયા છે આના સ્પષ્ટ ઉલ્લેખો મળે જ છે પ્રેક્ષા [ખેડા] મડપમા પ્રેક્ષકવર્ગ બેસી શકતો વસતિ તરીકે ઓળખાતા ચૈત્યવિભાગમા સાધુઓ મુકામ કરતા

[૪] પૂર્વ કાળમા શ્રાવકો પોતે જ દેરાસર બધાવતા હતા આજની જેમ દેવદ્રવ્યમાથી દેરાસર બાધવાની પ્રવૃત્તિ પૂર્વ કાળમા ન હતી પાલીતાણા, ગિરનારજી, આબુ, રાણકપુર, કાવી વગેરે સ્થાનોમા રહેલા જિનાલયો આની સાક્ષી પૂરે છે (દેવદ્રવ્યનો ઉપયોગ દેરાસરના જીર્ણોદ્ધાર અને દેરાસરના નિર્વાહના કાર્યોમા થાય, પણ નવા દેરાસરો બધાવવામા એનો ઉપયોગ થઈ શકે એવા સ્પષ્ટ અક્ષરો મળતા નથી તેમ છતા વર્તમાનમા આ પરપરા સર્વત્ર સ્વીકૃત થયેલી જણાય છે પરતુ આ વાત પ્રસ્તુતમા ઉપયોગી ન હોવાથી તેની અહીં વિશદ છણાવટ અમે કરતા નથી ) શ્રાવકે બનાવેલ દેરાસર જીર્ણ-શીર્ણ થાય ત્યારે તેના વશજો પોતાના પૂર્વજો પ્રત્યેના આદરના કારણે તે દેરાસર અને દેરાસરસલગ્ન ઉપાશ્રયના જીર્ણોદ્ધાર-નિર્વાહ વગેરે કાર્યો ભક્તિથી વિશેષ પ્રકારે કરે આમ દેરાસરસબધી શુભ કાર્યોમા તેના વશ-વારસાગત પુરુષો પ્રવૃત્ત થવાથી સમ્યગ્દર્શન નિર્મળ કરી મોક્ષમાર્ગે આગળ વધી સસાર તરે તેમા મુખ્ય નિમિત્ત બને છે દેરાસરને બનાવનારા પૂર્વજો

[૫] દેરાસર બનાવનાર શ્રાવકના વશજો માત્ર પોતાના પૂર્વજોએ બનાવેલ દેરાસરની ભક્તિ કરે અને બીજા દેરાસરમા ન જાય, બીજા જિનાલયો પ્રત્યે ભક્તિભાવ રાખવાના બદલે તેના પ્રત્યે અવજ્ઞા-આશાતના-ઉપેક્ષાનો ભાવ રાખે તો મિથ્યાત્વનો ઉદય થાય પરતુ વિવેકી વશજો પોતાના પૂર્વજોએ બનાવેલ દેરાસરની વિશેષ ભક્તિ કરવા છતા અન્ય જિનાલયો તરફ ભક્તિભાવ છોડે નહિ માટે મિથ્યાત્વનો ઉદય થવાની કોઈ શક્યતા નથી રહેતી, પરતુ ધર્મવૃદ્ધિ થાય છે [૬/૧૫]

१ ह प्रतौ 'त' इति त्रुटित पाठ ।

यतना = रागद्वेषरहित शास्त्राऽऽज्ञाशुद्ध प्रयत्न, रागद्दोसविउत्तो जोगो असढस्स होइ जयणाओ (नि भा ६६९६) इत्यागमात् । ततो **न च** = नैव **हिसा**, जिनभवनविधाने यतनाया सत्या भावहिसाऽनुपपत्ते । तस्या एव शास्त्रे परिहर्तव्यत्वेन प्रतिपादनात्, द्रव्यहिसायास्तु सर्वथा साधुविहारादावपि दु परिहरत्वात् । द्रव्यहिसामप्याश्रित्याह -

**कल्याणकन्दली**

**'यतना'** इति विधेयनिर्देश., उद्देश्यमाह - **रागद्वेषरहितः** = राग-द्वेषाऽप्रयुक्त. **शास्त्राज्ञाशुद्धः** = समुचितोत्सर्गापवाद-स्थानीयविधिनिषेधानुसारिपरिणामप्रयुक्तशुद्धिपरिपुष्ट. **प्रयत्नः** । ततश्च न रागादियुक्ते छद्मस्थमात्रवृत्तिप्रयत्नविशेषे यतनात्वेनाऽभिमतेऽव्याप्ति. रागाद्यप्रयुक्तत्वात्, न वा परस्थानीयोत्सर्गादिप्रवृत्तिजनके प्रयत्नेऽतिव्याप्ति· शास्त्राज्ञाशुद्धत्वाभावात् । स्वामिकृतया स्वरूपप्रयुक्तया च शुद्धया युक्ता इय हि बहुतरासत्प्रवृत्तिविनिवृत्तिसाधन्येव, अन्यथा तत्त्वहानेः । साम्प्रत **निशीथभाष्ये** --> रागद्दोसविउत्तो जोगो असढस्स होति जयणा उ । रागद्दोसाणुगतो जो जोगो सा अजयणा उ ॥६६९६॥ <-- इत्येव गाथोपलभ्यते ।

**ततो जिनभवनविधाने नैव हिसा** = भावहिसा सम्भवति, **यतनाया सत्या भावहिसाऽनुपपत्तेः** 'प्रमत्तयोगात् प्राणव्यपरोपण हिसा' [तत्त्वा सू ७/८] इति निश्चयनयानुगृहीतव्यवहारनयसम्मतस्य भावहिसालक्षणस्य विरहात्, परिशुद्धाज्ञायोगेन प्रमादप्रच्यवात् विशेषणाभावप्रयुक्तविशिष्टाभावसाम्राज्यात् । 'सविशेषणौ हि विधि-निषेधौ विशेषणमुपसङ्क्रामत' इत्यादिन्यायेन शुद्धनिश्चयनयसम्मतायाः प्रमादस्वरूपहिंसाया विरहस्तु स्पष्ट एव । अत्र व्यवहारत· परिणतोदकग्रहणादिरूपाया [प्र श वृ पृ ३८२] **यतनाया सत्या भावहिंसानुपपत्तेः** = परिभाषान्तरेण हेत्वनुबन्धहिसाऽसम्भवात्, यतनया तत्स्वरूपप्रच्यवात् । **एतेन** जिनभवनकारणे हिंसाशेन दूषणमित्यपि **प्रत्याख्यातम्**, --> भावपाणातिवाण्ण य जहा घण कम्म चिज्जति, ण तहा दव्वपाणातिवाण्ण <--[उद्दे.१५-भा ३-पृ.५००] इति **निशीथचूर्णि**वचनेन स्वरूपहिसाया दोषस्याऽबलवत्त्वात् उद्देश्यफलसाधनतयाऽनुबन्धतोऽदोपत्वाद्वा । यथोक्त **प्रतिमाशतके** --> गर्तादङ्गविघर्षणैरपि सुत मातुर्यथाऽहेर्मुखात्, कर्षन्त्या न हि दूषण ननु तथा दुःखानलार्चिर्भृतात् । ससारादपि कर्षतो बहुजनान् द्रव्यस्तवोद्योगिनस्तीर्थस्फातिकृतो न किञ्चन मत हिंसाशतो दूषणम् ॥३८॥<-- इति । **एतेन** --> प्रथमजिनेन्द्रस्य विवाह-शिल्पादिनिरूपणस्य सदोषताऽपि **प्रत्यस्ता**, अधिकदोषेभ्य. सत्त्वाना रक्षणात्, यथोक्त **स्तवपरिज्ञाया** --> एत्तो चिय णिद्दोस सिप्पाइविहाणमो जिणिदस्स । लेसेण सदोसपि हु बहुदोसनिवारणत्तेणत्ति ॥<-- [१५७]इति ।

इत्थञ्च प्रकृते द्रव्यस्तवेऽपि वस्तुतोऽनुकम्पैव बोद्धव्या, तदुक्त **पञ्चलिङ्गिकारेणापि** --> अल्पबाधया बहूनामुपकारादनुकम्पोपपत्ति.' <-- [ ] इति । यथोक्त **स्तवपरिज्ञाया** --> अप्पा य होइ एसा एत्थ जयणाइ वट्टमाणस्स । जयणाउ धम्मसारो विन्नेया सव्वकज्जेसु ॥१५२॥ जयणेह धम्मजणणी जयणा धम्मस्स पालणी चेव । तव्वुड्ढिकरी जयणा एगतसुहावहा जयणा ॥१५३॥ [सम्बोधसप्तति-६७] जयणाए वट्टमाणो जीवो सम्मत्तणाणचरणाण । सद्धा-बोहाऽऽसेवणभावेणाराहगो भणिओ ॥१५४॥ <-- [उपदेशपदगाथा ७६९-७७०] इति । **निशीथभाष्येऽपि** --> अप्पो बधो जयाण बहुणिज्जर तेण मोक्खो तु <--[३३३५] इति प्रोक्तत्वात् विधि-यतनादिपरतायामात्मन. शुद्धिरनाविलेति हार्दम् । इदमेवाभिप्रेत्य **पञ्चकल्पभाष्ये** --> विसुद्धभावो सुज्झति णियमा जिणमयमि <-- [१७२२] इत्युक्तम् । **निशीथचूर्णौ** अपि --> जयणाए धरेतस्स जदि दोसा भवति तहावि सुज्झति, आगमप्रामाण्यात् <-- [नि चू ४१४८] इत्युक्तम् । **ओघनिर्युक्तिप्रमुखेऽपि** --> जा जयमाणस्स भवे विराहणा, सुत्तविहिसमग्गस्स । सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥ <-- [ओ नि ७६० पि नि ६७१] इत्युक्तम् । एव यतनाविरहे सदोषताऽपि दृष्टव्या --> जो पुण जतणारहिओ गुणोऽवि दोसायते तस्स <-- [३१८१] इति **बृहत्कल्पभाष्य**वचनात् ।

અહીં એવી શકા થઈ શકે છે કે --> 'પૃથ્વી વગેરે જીવોને પીડા પહોચાડ્યા વિના તો દેરાસર બનાવવાનુ શક્ય જ નથી અને પૃથ્વી વગેરે જીવોને પીડા પહોચાડવામા તો નિયમા હિસા છે તેથી જિનાલય નિર્માણ કરાવવાથી ધર્મવૃદ્ધિ કેવી રીતે થાય ?' <-- પરતુ આ શકાના નિવારણ માટે મૂલકારશ્રી જણાવે છે કે —

**ગાથાર્થ** - યતનાથી હિસા લાગતી નથી આનુ કારણ એ છે કે યતના જ હિસાનિવૃત્તિસ્વરૂપ ફળને આપે છે, કારણ કે યતનાકાલીન હિસામા વધુ પડતી હિસાની નિવૃત્તિ રહેલી છે જિનભવન શાસ્ત્રવિહિત છે માટે સદોષ નથી [૬/૧૬]

## ❀ દેરાસર બનાવવામાં થતી હિંસા નિર્દોષ કઈ રીતે ? ❀

**ટીકાર્થ** - રાગ-દ્વેષ વિનાનો શાસ્ત્રાજ્ઞાથી શુદ્ધ એવો પ્રયત્ન = યતના છે, કારણ કે આગમમા જણાવેલ છે કે 'માયારહિત વ્યક્તિનો રાગ-દ્વેષરહિત યોગ એ જયણા છે' માટે દેરાસર બનાવવામા હિસા છે જ નહિ, કારણ કે યતના હોય ત્યારે ભાવહિસા ઘટી ન શકે શાસ્ત્રમા તો ભાવહિસાને જ છોડવા યોગ્ય જણાવેલ છે બાકી દ્રવ્યહિસા તો સાધુને વિહાર વગેરેમા પણ સર્વથા છોડવી મુશ્કેલ છે દ્રવ્યહિસાને આશ્રયીને મૂલકાર શ્રીમદ્જી જણાવે છે કે - યતના જ હિસાની = દ્રવ્યહિસાની નિવૃત્તિને આપનાર છે, કારણ કે યતનાકાલીન હિસામા

यस्माद् एषैव = यतनैव तन्निवृत्तिफला = हिंसानिवृत्तिफला । कथं ? इति चेत् तस्या = हिंसाया अधिकनिवृत्ते = अधिकारम्भत्यागस्य भावात् । तत्र हि जिनभवनादिविधाने सर्वादरेण प्रवर्तमानस्य निष्फलपरिहारेण सफलमेव कुर्वतोऽवश्यमेवारत्यारम्भान्तरनिवृत्तिविशेष । विहित शास्त्रे जिनभवन अतो हेतो अदुष्ट = अदोषवत् एतत् = जिनभवनविधानमिति । विहितत्वादेव न निरारम्भसामायिकादिना एतदन्यथासिद्धि. एकानुष्ठानस्य विहिता-

कल्याणकन्दली

यतनाया सत्या भावहिसा न भवति, यस्मात् कारणात् यतनैव नियमात् हिंसानिवृत्तिफला, यत हिंसाया अधिकारम्भत्यागस्य भावात् । अत एवानुबन्धतो निवृत्तिप्रधानेषा, तदुक्त मूलकारैरेव उपदेशपदे —> जीए बहुयतरारम्भविनिवित्ति-लक्खण वत्थु सिज्झति <— [७७१]। यथोक्त स्तवपरिज्ञाया —> एसा य होइ णियमा तयहिगदोसणिवारिणी जेण । तेण णिवित्तिपहाणा विन्नेया बुद्धिमंतेण ॥१८५॥ सा इह परिणयजल-दलविसुद्धरूवा उ होइ विण्णेया । अत्थव्वओ महतो सव्वो सो धम्महेउत्ति ॥१८६॥ निवित्तिपहाणा, विण्णेया भावओ अहिंसेयं । जयणावओ उ विहिया पूजादिगयावि एमेव ॥१६१॥ [पञ्चा ७/४२] अहिगणिवित्ति त्ति इह भवेणाहिगरणा णिवित्तीओ । तद्दसणसुहजोगा गुणतर तीइ परिसुद्ध ॥१६६॥ ता एयगया चेव हिंसा गुणकारिणित्ति विन्नेया । तह भणियणायओ च्चिय एसा अणेह जयणा ॥१६७॥ <— इति । यथोक्त पञ्चाशकेऽपि —> एव च होइ एसा पवित्तिरूवावि भावतो णवर । अकुसलणिवित्तिरूवा, अप्पबहुविसेसभावेण ॥[७/३४] <— इति । शास्त्रे जिनभवन श्राद्धाना विहितम् । अतो हेतो अदोषवत् जिनभवनविधानम्, सर्वज्ञवचनत प्रवृत्ते । यथोक्त स्तवपरिज्ञाया —> तह सभत्तरूव सव्व सव्वण्णुवयणओ एय । त णिच्छिय हि आगमपउत्तगुरुसपदाएहि ॥१६८॥ <— इति । तत्त्वार्थकारिकायामपि —> अभ्यर्चनादर्हता मन प्रसादस्तत समाधिश्च । तस्मादपि नि श्रेयसमतो हि तत्पूजन न्याय्यम् ॥८॥ <— इत्युक्तम् । विहितत्वादेव न निरारम्भसामायिकादिना एतदन्यथासिद्धिः = जिनभवनविधानादे चरितार्थता, विहितत्वप्रका-रकज्ञानसाध्यस्य तस्यैव भावस्तवहेतुत्वात्। यथोक्त स्तवपरिज्ञाया —> विहियाणुट्ठाणमिणति एवमेय सया करेताण । होइ चरणस्स हेऊ, णो इहलोगादवेक्खा ॥३५॥ <— [पञ्चा ६/५] इति । न च विहितत्वेऽपि न तस्येष्टत्वमिति वाच्यम्, वदतो व्याघातात्, प्रत्युत तस्याऽनिष्टत्वे निषिद्धत्वमेव स्यात् । न चैतदेवम्, यथोक्त स्तवपरिज्ञाया —> जिणभवणकारणाडवि भरहादीण ण वारित तेण । जह तेसि च्चिय कामा सल्लविसादीहि णाएहिं ॥ ता तपि अणुमय चिय अप्पडिसेहाउ ततजुत्तीए <— [पञ्चा ६/३०-३६ स्त परि १०८/१०९] इति । एकानुष्ठानस्य = विहितैकानुष्ठानस्य विहिता-न्यानपवादकत्वात् = विधिबोधितकर्तव्यताक-सदनुष्ठानान्तराऽबाधकत्वात् । एतेन —> एकादरेण तदितरानादरोऽपि <— प्रत्याख्यात । न हि शास्त्रोक्तयोरनुष्ठानयोरेव विशेषोऽस्ति, यदेकमादरणीयम्, अन्यत्तु नेति [१४/९-पृ ३२६] इति वक्ष्यत्यग्रे योगदीपिकाकार । अत एव —> जोगो जोगो जिणसासणमि दुक्खक्खया पउजतो । अन्नुन्नमबाहा, असवत्तो होइ कायव्वो ॥१७८॥ <— इत्युक्त ओघनिर्युक्तो ।

एतेन जिनपूजाया सामायिकादिनाऽन्यथासिद्धिरपि प्रत्युक्ता, यतिधर्मप्रतिपत्त्यसहिष्णो कर्तव्यतयाऽर्हत्पूजनोपदेशात् । तदुक्त पुष्पमालाया —> पुव्वुत्तगुणसमग्ग धरिउ जइ तरसि नेय चारित्त । सावयधम्ममि दढो हविज्ज जिणपूयणुज्जुत्तो ॥४६६॥ <— इति । पञ्चाशके —> ता णियविहवणुरूव विसिट्ठपुप्फाइएहि जिणपूआ । कायव्वा बुद्धिमया तम्मी बहुमाणसारा य ॥ <— [४/२८] एव प्रोक्तम् । मूलकारैरेव सम्बोधप्रकरणे —> आरभपसत्ताण गिहीण छज्जीववहाऽविरयाण । भवअडवीनिवडियाण दव्वत्थओ चेव आलवो ॥ <— [२१३] इत्युक्तम् । कथारत्नकोशेऽपि —> पुप्फाई दव्वत्थयमकुणतो कह गिही हवइ जोगो । भावत्थयस्स ? ता पढमभूमिगाए जइज्ज इह ॥ <— [पृ ९८/गा ११] इत्युक्तम् । ललितविस्तरायामपि —> कर्तव्योदारपूजा भगवता <— [पृ ११७] इत्युक्तम् । तदुक्त उमास्वातिवाचकैरपि श्रावकप्रज्ञप्तो —> तीत्थकरभत्तीए सुसाहु-जणपज्जुवासणाए य । उत्तरगुणसद्धाए अपमाओ होइ कायव्वो ॥१०५॥ <— इति । किञ्च सामायिकादिना जिनपूजाया इव तया तस्याऽप्यन्यथा-

મોટા આરંભનો ત્યાગ રહેલો છે દેરાસર વગેરે બનાવવામાં નપૂર્ણ આદરથી પ્રવર્તમાન શ્રાવક નિષ્ફળ-નિષ્પ્રયોજન આરંભને છોડીને સફળ-સપ્રયોજન = દેરાસર વગેરે બનાવવામાં જરૂરી દ્રવ્યહિંસાને જ કરે છે માટે અન્ય આરંભની-હિંસાની વિશેષ પ્રકારે નિવૃત્તિ શ્રાવકને ચોક્કસ રહેલી જ છે શાસ્ત્રમાં દેરાસર બનાવવાનું શ્રાવકને ઉદ્દેશીને વિધાન છે આ હેતુથી જ દેરાસર બનાવવું એ શ્રાવકને માટે નિર્દોષ જ છે અહીં એવી શંકા થાય કે —> દ્રવ્યહિંસાગર્ભિત જિનાલયની આરંભરહિત સામાયિક વગેરે દ્વારા અન્યથાસિદ્ધિ થઈ જશે અર્થાત્ આરંભશૂન્ય સામાયિક વગેરેથી હિંસાગર્ભિત દેરાસર ઉપક્ષીણ = ચરિતાર્થ = અન્યથાસિદ્ધ = નિષ્પ્રયોજન = અનાવશ્યક = નિરુપયોગી બની જશે <— તો તે અનુચિત હોવાનું કારણ એ છે કે સામાયિક વગેરેની જેમ જિનાલય પણ શ્રાવકને માટે શાસ્ત્રવિહિત છે શાસ્ત્રવિહિત એક અનુષ્ઠાન એ શાસ્ત્રવિહિત અન્ય અનુષ્ઠાનનો નિષેધ નથી કરી શકતું [શાસ્ત્રવિહિત સર્વ અનુષ્ઠાનો પોતપોતાની મર્યાદામાં બળવાન જ છે તેઓ એક-

न्यायापवादकत्वात्, अन्यथा दानादीनामपि तेन अन्यथासिद्ध्यापत्तेरिति दिक् ॥६/१६॥ इति षष्ठं षोडशकम् ।

**कल्याणकन्दली**

सिद्धिर्विनिगमनाविरहग्रस्ता, उभयत्र प्रतिदिनं कर्तव्यत्वेनोपदेशात्, यदुक्तं **श्रीदेवेन्द्रसूरिभिः श्राद्धदिनकृत्ये** --> जिणाण पूअ-जत्ताए, साहूणं पज्जुवासणे । आवस्सम्मि सज्झाए, उज्जमेह दिणे दिणे ॥ <-- [२९२] इति । **श्रावकप्रज्ञप्तौ** अपि --> सुत्तभणिएण विहिणा गिहिणा निव्वाणमिच्छमाणेण । लोगुत्तमाण पूया णिच्चं होइ कायव्वा ॥३५०॥ <-- इत्युक्तम् --> लोकोत्तमानां = अर्हदादीनां <-- इति **श्रीहरिभद्रसूरिभिः** तत्र व्याख्यातम् । ततश्च तत्र निषेधः गृहस्थानां महामोह एव । तदुक्तं **श्रावकप्रज्ञप्तौ** एव --> देहाइणिमित्तं पि हु जे कायवहम्मि तह पयट्टंति । जिणपूयाकायवहम्मि तेसि पडिसेहणं मोहो ॥३४९॥ <-- इति । तदुक्तं साक्षेपपरिहारं **व्याख्याप्रज्ञप्तिवृत्तौ श्रीअभयदेवसूरिभिरपि** --> नन्वेवं धर्मार्थं प्राणातिपातमृषा-वादाऽप्रासुकदानं च कर्तव्यमापन्नमिति । अत्रोच्यते, आपद्यतां नाम भूमिकापेक्षया, को दोषः ? यतो यतिधर्माऽशक्तस्य गृहस्थस्य द्रव्यस्तवद्वारेण प्राणातिपातादिकमुक्तमेव प्रवचने <-- [५/६/२०४-पृ २२६] इति । यथा चैतत्तत्त्वं तथा व्यक्तीभविष्यति अग्रे [षो ९/१४-१५-पृ २२७] । ततश्च निर्जराद्यर्थिभिः सामायिकादिवत् जिनपूजाऽप्यवश्यमेव कर्तव्या, कार्यार्थिनः कारणप्रवृत्तेर्न्याय्यत्वात्, यथोक्तं **पञ्चाशके** --> कज्जं इच्छंतेणं अणंतरं कारणंपि इट्ठं तु । जह आहारजतित्तिं इच्छंतेणेह आहारो ॥ <-- [६/३४] --> जिनपूजा-सत्कारयोः करणलालसः खल्वाद्यो देशविरतिपरिणामः । औचित्यप्रवृत्तिसारत्वेन उचितौ चारम्भिण एतौ, सदारम्भरूपत्वात्, औचित्याज्ञामृतयोगात्, असदारम्भनिवृत्तेः, अन्यथा तदयोगात्, अतिप्रसङ्गादिति <--[पृ.८०] **ललितविस्तरासन्दर्भो**ऽपि ध्यातव्यः । **कथारत्नकोशे** --> कामियसिद्धीणमिमं दारं सारं गिहत्थधम्मस्स । जिणपूयणं जणाणं निप्पुन्नाणं न संभवइ ॥ सोक्खं सव्वो वंछइ तं मोक्खे सो य होइ धम्माओ । सो पुण सम्मत्ताओ तं पुण जिणपायपूयणओ ॥ <--[पृ ९१/११-१२] इत्येवं **देवभद्रसूर्युक्ति**रप्यत्रानुसन्धेया । सामायिकादिना जिनपूजाया अन्यथासिद्धत्वा-पादनेन जिनपूजान्तरायकरणादन्तरायकर्मबन्धोऽपि प्रसज्येत । तदुक्तं **निशीथचूर्णौ** --> जिणपूयाए विग्घकरो, मोक्खमग्ग पवज्जतस्स जो विग्घं करेति, एतेसु अंतराइयं बंधति <-- [उद्दे ११-भाग-३ पृ १८८] । **कर्मविपाकाभिधाने** कर्मग्रन्थे **श्रीदेवेन्द्र-सूरिभिरपि** --> जिणपूआविग्घकरो हिंसाइपरायणो जयइ विग्घं <-- [६१] इत्युक्तम् । **समयसारे श्रीदेवानन्दसूरिभिरपि** --> जिणपूआविग्घकरणहिंसाईआ विग्घस्स <--[अ.३] इत्युक्तम् । **जीवानुशासने देवसूरिभिरपि** --> जिणपूया-मोक्खमग्गविग्घकरो अज्जेइ अंतरायं <-- [३८] इत्युक्तम् । लुम्पकमतकृतं जिनपूजानिषेधादिकं तु कुदेवताविजृम्भितम् । तदुक्तं --> विक्कमकालाओ पन्नरसयपण्णहत्तरीवासेसु गएसु कोहडीअपरिग्गहीयवतरीपहावाओ भारहे वासे सुयहीलणा, जिणपडिमाभत्तिनिसेहकारया, सच्छंदाचारा, दुम्मेहा, मलिणा, दुग्गइगामिणो बहवे भिक्खायरा समुप्पज्जिहितित्ति <-- [ ] । मलिनबुद्ध्या तु तां कुर्वतोऽशुभफलैव सा तदुक्तं **चैत्यवन्दनमहाभाष्ये** --> अवसउणकप्पणा सुंदरसउणो असुंदरं फलइ । इय सुंदरा वि किरिया असुहफला मलिणहिययस्स ॥१०५॥ <-- इति । ततश्च मलिनभाव एव तत्र त्याज्यो न तु जिनपूजा । न हि गलगण्डवेदनायां सत्यां गलोच्छेदयत्नः श्रेयान् परन्तु गण्डचिकित्सैवेति भावनीयम् ॥६/१६॥

इति मुनियशोविजयविरचितायां कल्याणकन्दल्यां षष्ठषोडशक-योगदीपिकाविवरणम् ।

બીજાને અનુપયોગી સિદ્ધ કરી શકતા નથી ] અન્યથા = શાસ્ત્રવિહિત એક અનુષ્ઠાન જો શાસ્ત્રવિહિત અન્ય અનુષ્ઠાનનો અપલાપ કરી શકતા હોય તો તો સામાયિક દ્વારા દાન, સાધર્મિકભક્તિ વગેરેનો પણ અપલાપ થવાની આપત્તિ આવશે આ તો એક દિગ્દર્શન છે હજુ આ સંબંધમાં ઘણું વિચારી શકાય છે આ વાતની સૂચના આપવા ટીકાકાર શ્રીમદ્જીએ 'दिक्' શબ્દનો પ્રયોગ કરેલ છે [૬/૧૬]

## ❀ યતનાને ઓળખીએ ❀

__વિશેષાર્થ__ - યતનાનું સ્વરૂપ શ્રીમદ્જીએ બહુ જ સુંદર બતાવેલ છે રાગ-દ્વેષથી શૂન્ય એવો શાસ્ત્રાજ્ઞાશુદ્ધ પ્રયત્ન = યતના જે પ્રયત્ન રાગ-દ્વેષથી પ્રયુક્ત હોય તેની યતનામાંથી બાદબાકી થઈ જાય રાગ-દ્વેષ વિના પણ પોતાની શાસ્ત્રનિરપેક્ષ બુદ્ધિથી જે પ્રયત્ન થાય તેનો પણ યતનામાં સમાવેશ થઈ શકતો નથી માટે યતનાના અધિકારી શાસ્ત્રના જાણકાર વ્યક્તિ છે તે તે વિષયમાં તત્સંબંધી શાસ્ત્રનું જ્ઞાન હોય તો જ તે સંબંધી યતના પાળી શકાય તથા શાસ્ત્રઆજ્ઞા અનુસારે પ્રયત્ન કરવામાં પણ વ્યક્તિગત અપ્રશસ્ત રાગ-દ્વેષને ભેળવી ન દેવાય- આ પણ જરૂરી છે આમ સ્વામીકૃત અને સ્વરૂપકૃત બન્ને શુદ્ધિ જે પ્રયત્નમાં ભળે તે પ્રયત્ન યતનાસ્વરૂપ બને આ યતના હાજર હોવાથી જિનભવન બનાવવામાં ભાવહિંસા ન સંભવે તથા તેમાં જે દ્રવ્યહિંસા થાય છે તે પણ મોટા આરંભથી છૂટકારો લાવે છે દેરાસરનિર્માણ વગેરે કાર્યમાં તન-મન-ધન રોકાયેલા હોવાથી તેટલો સમય મહારંભ-મહાપરિગ્રહથી મુક્તિ મળે છે એક બાજુ અલ્પ સ્વરૂપહિંસા અને બીજી બાજુ મોટી હેતુહિંસાથી અને અનુબંધહિંસાથી છૂટકારો આમ વસ્તુતઃ દેરાસર બનાવવામાં જે યતનાકાલીન હિંસા છે તે હિંસાનિવૃત્તિને જ આપનાર બને છે બાકીનો અર્થ ટીકાર્થમાં સ્પષ્ટ કરેલ જ છે [૬/૧૬]

## છઠા ષોડશકનો સ્વાધ્યાય

**(અ) ચારથી પાંચ મુદ્દામાં નીચેની સમસ્યાનું સમાધાન આપો**

૧ દેરાસર બનાવવાનો અધિકારી કોણ બને ?
૨ દેરાગર કેવી જમીન ઉપર બનાવાય ?
૩ દેરાસર બનાવનારે કારીગરો સાથે કેવો વ્યવહાર રાખવો ?
૪ તાત્ત્વિક ધર્મની ત્રણ શરતો વ્યાપક રીતે ઓળખાવો
૫ દેરાસર માટે કેવા લાકડા કલ્પે ? તથા તેને લાવવાની વિધિ શુ છે ?
૬ શુભાશયવૃદ્ધિનુ નિરૂપણ કરો
૭ દેરાસરનિર્માણ ભાવયજ્ઞ કઈ રીતે બને ?
૮ અક્ષયનીવિદ્રવ્યનુ સ્વરૂપ અને તેનો ઉપયોગ શુ ?
૯ હિસા કઈ રીતે અહિંસાનુ કારણ બની શકે ?
૧૦ પ્રાચીનકાળની વ્યાખ્યાનસ્થળવ્યવસ્થા કારણ સહિત સમજાવો

**(બ) યોગ્ય જોડાણ કરો**

| | |
|---|---|
| (૧) દલ | (A) સુદર પરિણામ |
| (૨) સ્વાશય | (B) પરપીડાપરિહાર |
| (૩) ગ્રથિરહિત | (C) ધર્મમિત્ર |
| (૪) સ્વકુલતારણ | (D) દુર્વા નામનુ ઘાસ |
| (૫) શકુન | (E) દેરાસર |
| (૬) ધર્મકારણ | (F) ઉપાદાન કારણ |
| (૭) દેરાસરના કારીગરો | (G) જિનભવનના લાકડા |
| (૮) ગુરુ | (H) મજૂરત્રાસ |
| (૯) ભારવહનમા અવિધિ | (I) જિનાલયકાર્ય દેખરેખ |
| (૧૦) કુશલાશયવૃદ્ધિ | (J) દાદા |

**(ક) ખાલી જગ્યા યોગ્ય રીતે પૂરો**

૧ દાન, સન્માનથી દેરાસરના ને ખુશ રાખવા (પૂજારી, સમીપવર્તી લોકો, માલિક)
૨ પૂજાના બદલે શ્રાવક સામાયિક કરે તો તે કહેવાય (યોગ્ય, અયોગ્ય, વધુ સારુ)
૩ ઉત્સર્ગથી સાધુઓ દેરાસરની દેખભાળ કરવાના હોય (અધિકારી, અનધિકારી)
૪ દેરાસરનો બહારનો મડપ સાધુઓને માટે કલ્પી શકે (વ્યાખ્યાન, સ્થિરવાસ)
૫ સ્વાશય = (પોતાનો પરિણામ, શુભ અધ્યવસાય, પોતાનુ મન)
૬ કાર્યસિદ્ધિના લિગ છે (૨, ૩, ૪, ૫)
૭ 'दैवतादुपवनादे.' મા પ્રથમ આદિ શબ્દથી નુ ગ્રહણ કરવુ (માણસ, દેવ, પશુ, પક્ષી)
૮ એક જ સ્થાનેથી દેરાસર માટે ઈટ વગેરે ખરીદવા તે ઉચિત (છે, નથી, કહી શકાય)
૯ સામાયિક દ્વારા પૂજા ન બને (અન્યથાસિદ્ધ, સફળ, અચરિતાર્થ)
૧૦ સરળ માણસનો રાગાદિશૂન્ય પ્રયત્ન = કહેવાય (વિધિ, જયણા, ચારિત્ર)

નોંધ આ પ્રશ્નપત્રમા કોઈએ પેન-પેન્સીલ વગેરેથી કોઈ પણ નિશાની વગેરે ન કરવા ખ્યાલ રાખવો

## કલ્યાણકંદલીની અનુપ્રેક્ષા

**(અ) નીચેના પ્રશ્નોના વિસ્તારથી જવાબ આપો**

૧ કલ્યાણકલિકા, વાસ્તુસાર, બૃહત્સહિતા મુજબ દેરાસરની ભૂમિ કેવી જોઈએ ?
૨ અનુચિત સ્થાને જિનાલય બનાવવામા શુ દોષ છે ?
૩ દેરાસરની આસપાસના લોકોને ખુશ રાખવાનો ફાયદો શુ ?
૪ દેરાસરમા કેવા પ્રકારના લાકડા ન વાપરવા ? તે જણાવો
૫ સપૂર્ણ કાર્યસિદ્ધિના ૩ ચિહ્ન ઓળખાવો
૬ નિશ્રાકૃત અને અનિશ્રાકૃત ચૈત્યમા વ્યાખ્યાનવિધિમા શુ તફાવત છે ? શા માટે ?
૭ દેરાસર બનાવવામા એકેન્દ્રિયાદિ જીવો ઉપર અનુકપા કઈ રીતે સભવે ?
૮ શુ સામાયિક દ્વારા પૂજા અન્યથાસિદ્ધ બને ? શા માટે ?
૯ વિરાધના થવા છતા નિર્જરા કયારે થાય ? શા માટે ?
૧૦ રાજા ઋષભે બતાવેલ શીલ્પાદિ શા માટે નિર્દોષ હતા ?

**(બ) નીચેના પ્રશ્નોના સક્ષેપમા જવાબ આપો**

૧ શુ કરીને દેરાસર બનાવવાની શરૂઆત કરવી ?
૨ દેરાસર બનાવનાર સૂત્રધાર કેવો હોય ?
૩ વિવેકવિલાસ ગ્રથ મુજબ અન્યાયોપાર્જિત ધનથી બનેલ પ્રતિમા કેવી બને ?
૪ બે પ્રકારની ભૂમિશુદ્ધિ જાણાવો
૫ દેરાસરના કાર્ય માટે બહાર જતા કેવા પ્રકારના શકુન સારા કહેવાય ?
૬ શિલ્પરત્નાકર અને વેધવાસ્તુપ્રભાકર ગ્રથ મુજબ દેરાસરના કારીગરો સાથે કેવો વ્યવહાર રાખવો ?
૭ યજ્ઞ એટલે શુ ?
૮ કયુ ધન સફળ થયુ ગણાય ?
૯ સાધુ-સાધ્વી રોજ દેરાસર ન જાય તો ?
૧૦ 'દેરાસરમા સાધુઓ રહે' તેનો મતલબ શુ ?
૧૧ જિનાલયનિર્માણ પોતાના વશને કઈ રીતે તારે ?
૧૨ જયણાનુ સ્વરૂપ જણાવો
૧૩ દેશવિરતિનો સૌપ્રથમ પરિણામ કયો છે ?
૧૪ જિનપૂજામા થતી વિરાધના નિર્દોષ કઈ રીતે ?
૧૫ જયણાનુ ફળ જણાવો
૧૬ નિશ્ચય-વ્યવહારથી હિસાનુ સ્વરૂપ જણાવો
૧૭ ઘરદેરાસરમા વિશેષ ભક્તિ કરનારને મિથ્યાત્વ કેવી રીતે ન લાગે ?
૧૮ લજ્જા વગેરેથી ધર્મ થાય તે હિતકારી કેવી રીતે બને ?
૧૯ સાધુઓ દેરાસરમા કેમ ન રહે ?
૨૦ દેવદ્રવ્યથી જિનશાસનપ્રભાવના કઈ રીતે થાય ?

**(ક) ખાલી જગ્યા પૂરો**

૧ પરપીડાપરિહાર એ ______ છે (શાસ્ત્રાર્થ, કર્તવ્ય, ચરમાવર્તીલક્ષણ)
૨ સસાર અને મોક્ષના ઉપાયોની સખ્યા ______ છે (તુલ્ય, ન્યૂનાધિક, અનત)
૩ સર્વ માયા ______ છે (કપાય, મૃત્યુદાયી, ભયકર)
૪ પૂર્વ કાળમા આગમવાચના ______ મા થતી હતી (દેરાસર, ઉપાશ્રય, ઉદ્યાન)
૫ મલિનહૃદયવાળાને શુભ ક્રિયા ______ ફળને આપનારી બને (સારા, ખરાબ, મધ્યમ)
૬ જિનાલયનિર્માણમા ______ હિસા નથી (દ્રવ્ય, ભાવ, સ્વરૂપ)

## મુનિ યશોવિજય કૃત સંસ્કૃત-હિન્દી-ગુજરાતી વ્યાખ્યાયુક્ત ગ્રંથની સૂચિ

| નામ | મૂલ્ય રૂા |
| --- | --- |
| ૧ **દ્વિવર્ણરત્નમાલિકા** - મૂલકાર :- શ્રીપુણ્યરત્નસૂરિજી મ<br>મૂલ + સંસ્કૃત ટીકા + ગુજરાતી ભાવાનુવાદ | ૦૦-૦૦ |
| ૨ **ન્યાયાલોક** - કર્તા :- મહોપાધ્યાય યશોવિજયજી ગણિવર<br>મૂલ + ભાનુમતી (નવ્ય સંસ્કૃત ટીકા) + પ્રતિદાયિની (ગુજરાતી વ્યાખ્યા) | ૧૭૦-૦૦ |
| ૩ **ભાષારહસ્ય** - કર્તા .- મહોપાધ્યાય યશોવિજયજી ગણિવર<br>મૂલ + સ્વોપજ્ઞવિવરણ + મોક્ષરત્ના (અભિનવ સંસ્કૃત ટીકા) + કુસુમામોદા (હિન્દી વિવેચના) | ૧૬૦-૦૦ |
| ૪ **સ્યાદ્વાદરહસ્ય** (મધ્યમ) (પ્રથમ ખંડ)<br>મૂલકાર - કલિકાલસર્વજ્ઞ શ્રી હેમચન્દ્રસૂરિશ્વરજી મહારાજ<br>મધ્યમ-સ્યાદ્વાદરહસ્યકર્તા :- મહોપાધ્યાય યશોવિજયજી ગણી<br>મૂલ + સંસ્કૃત વિવરણ + જયલતા (નૂતન સંસ્કૃત ટીકા) + રમણીયા (હિન્દી વ્યાખ્યા) | ૧૫૦-૦૦ |
| ૫ **સ્યાદ્વાદરહસ્ય** (મધ્યમ) (દ્વિતીય ખંડ) | ૧૪૫-૦૦ |
| ૬ **સ્યાદ્વાદરહસ્ય** (મધ્યમ) (તૃતીય ખંડ) | ૧૪૦-૦૦ |
| ૭ **વાદમાલા** - કર્તા :- મહોપાધ્યાય યશોવિજયજીગણી<br>મૂલ + હેમલતા (નૂતન સંસ્કૃત ટીકા) + વલ્લભા (હિન્દી વ્યાખ્યા) | ૧૨૦-૦૦ |
| ૮ **ષોડશક** (ભાગ-૧) - મૂલકાર :- શ્રી હરિભદ્રસૂરિશ્વરજી મહારાજ<br>યોગદીપિકાકાર - મહોપાધ્યાય શ્રી યશોવિજયજી ગણિવર્ય<br>મૂલ + યોગદીપિકા + કલ્યાણકંદલી (અર્વાચીન સંસ્કૃત ટીકા) + રતિદાયિની (ગુજરાતી વ્યાખ્યા) | ૧૦૦-૦૦ |
| ૯ **ષોડશક** (ભાગ-૨) | મુદ્રણાલયસ્થ |
| ૧૦ **અધ્યાત્મોપનિષત્** <br>મૂલ + અધ્યાત્મવૈશારદી (અદ્યતન સંસ્કૃત ટીકા) + અધ્યાત્મપ્રકાશ (ગુજરાતી વિવેચન) | મુદ્રણાલયસ્થ |

### -: પ્રાપ્તિ સ્થાન :-

દિવ્ય દર્શન ટ્રસ્ટ, ૩૬, કલિકુંડ સોસાયટી, ધોળકા, PIN - 387810.

સૂચના :- જ્ઞાનનિધિ દ્વારા પ્રકાશિત થયેલ ઉપરોક્ત ગ્રંથ અધ્યયનશીલ સાધુ-સાધ્વીજી ભગવંતોને ભેટ રૂપે મળી શકશે

## सप्तम जिनबिम्बषोडशकम्

एव जिनभवनकारणविधानमभिधाय तद्बिम्बस्य कारयितव्यता सङ्गमयति --> **'जिने'**त्यादि ।

**जिनभवने तद्बिम्ब कारयितव्यं द्रुत तु बुद्धिमता । साधिष्ठानं ह्येव तद्भवन वृद्धिमद्भवति ॥७/१॥**

**जिनभवने** तस्य = जिनस्य बिम्ब **कारयितव्य द्रुत तु** = शीघ्रमेव **बुद्धिमता** = कार्यक्रमधीशालिना **हि** = यत **एव** = जिनबिम्बकारणे **तत्** = प्रस्तुत **भवन साधिष्ठान** = अधिष्ठातृसहित **वृद्धिमत् भवति**, तज्जनितपुण्यस्य तत्प्रवर्धकत्वात् ॥७/१॥ बिम्बकारणविधिमाह --> **'जिने'**त्यादि ।

### कल्याणकन्दली

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> बुद्धिमता जिनभवने तद्बिम्ब द्रुत तु कारयितव्यम् । एव हि तत् भवन साधिष्ठान [सत्] वृद्धिमद् भवति ॥७/१॥ इय कारिका **धर्मसङ्ग्रहवृत्ति-श्राद्धविधिवृत्त्यादौ** [ध.स.गा.६८ श्रा.वि.प्र.६ पृ.३६] समुद्धृता । मूलकारिकानुसारेण **भक्तिद्वात्रिंशिकाया** --> जिनगेह विधायैव शुद्धमव्ययनीवि च । द्राक् तत्र कारयेद् बिम्ब साधिष्ठान हि वृद्धिमत् ॥ <-- [५/१०] इत्युक्तम् । **जिनस्य विम्व कारयितव्यमिति** । तस्य गुरुधर्मत्वात्, यथोक्त **श्रीधनेश्वरसूरिभिः शत्रुञ्जयमाहात्म्ये** --> मेरोर्गुरुर्गिरिर्नान्य· कल्पद्रोर्नापरो द्रुमः । न धर्मो जिनबिम्बाना निर्मापणादपरो गुरु. ॥ <-- [५/४९७] इति । एव तस्य शक्रत्व-राज्य-स्वर्गापवर्गसाधकत्वमपि, यथोक्त **आचारोपदेशे चारित्रसुन्दरगणिना** --> अङ्गुष्ठमात्रामपि य. प्रतिमा परमेष्ठिनः । कारयेदाप्य शक्रत्व स लभेत्परम पदम् ॥ <-- [६/१३] । तदुक्त **शत्रुञ्जयमाहात्म्ये** --> एकाङ्गुलमिद विम्ब निर्मापयति योऽर्हता । एकातपत्रसाम्राज्य लभेत स भवान्तरे ॥ [५/४९६] त्रैलोक्यसम्पदस्तेषा किङ्कर्यस्स्युर्गृहाङ्गणे । निर्मापितानि बिम्बानि यैर्जिनाना गुरूक्तिभिः ॥[५/४९९] <-- इति । तदुक्त **उपदेशसारे उपदेशतरङ्गिण्या** [२/५/पृ १३१] च --> अङ्गुष्ठमानमपि यः प्रकरोति बिम्ब वीरावसानवृषभादिजिनेश्वराणाम् । स्वर्गे प्रधानविपुलर्द्धिसुखानि भुक्त्वा पश्चादनुत्तरगति समुपैति धीरः ॥३५॥ <-- इति । यथोक्तमन्यत्रापि --> राग-द्वेष-मोहजिता प्रतिमा श्रीमदर्हताम् । यः कारयेत्तस्य हि स्यात् धर्मः स्वर्गापवर्गद· ॥ <-- [ ] इति । अन्यत्रापि --> अङ्गुष्ठमात्रापि जिनेन्द्रमूर्त्ति· कारापिताऽनन्तशुभावहा हि । चिन्तामणिः कि न किलाल्पकोऽपि, सञ्चिन्तित यच्छति वस्तुजातम् ॥ <-- [ ] इत्युक्तम् । जिनप्रतिमातो बोधिलाभोऽपि सञ्जायते । तदुक्त **कुमारनन्दिदेव प्रति नागिलश्रावकदेवेन** --> बोहिणिमित्त जिणपडिमाअवतारण करेहि <-- [नि.भा ३१८३ भाग.३ पृ.१४१] इति व्यक्त **निशीथचूर्णौ** । अत एव **ललितविस्तरायामपि** --> कारयितव्या भगवत्प्रतिमाः <-- [पृ ११७] इत्युक्तम् । नित्य पूज्यमानजिनबिम्बात् तन्निर्मापकस्य पुण्यसिद्धेः, यदुक्त --> पूइज्जइ जिणपडिमा निच्च भावेहि जेहि कारविया । वड्ढेइ तेसि पुन्न कलतरेणेव धननिवहो ॥ <-- [ ] इति । जिनबिम्बविधापनात् परत्राऽपि सुलभबोधित्वादिसिद्धे., तदुक्त - -> 'जो कारवेइ पडिम जिणाण, जिअरागदोसमोहाण । सो पावइ अन्नभवे, सुहजम्म [भवमहण] धम्मवररयण ॥ दारिद्द दोहग्ग कुजाति-कुसरीर-कुमइ-कुगईओ । अवमाण-रोग-सोगा न हुति जिणबिबकारीण ॥ <-- [ ] इत्यादि । अन्यत्रापि --> न यान्ति दास्य न दरिद्रभाव न प्रेष्यता नैव च हीनभावम् । न चापि वैकल्यमिहेन्द्रियाणा ये कारयन्तीह जिनस्य बिम्बम् ॥ <-- [ ] इत्युक्तम् ।

प्रकृतोपयोगिमुख्यहेतुमाह --> **भवन अधिष्ठातृसहित** स्वनायकाधिष्ठितत्वेनैव सप्रभाव सत् तत् **वृद्धिमत् भवतीति** । **तज्जनितपुण्यस्य** = विहितजिनबिम्बाधिष्ठानोत्पन्नस्य शुभकर्मण **तत्प्रवर्धकत्वात्** = जिनभवने प्रवृद्धिकारकत्वात् । जिनबिम्बाऽकारणे तु जिनगृह व्यन्तरादिभिरधिष्ठीयेत यथोक्त --> राज्य भोज्य च शय्या च **वरवेश्म** वराङ्गना । धन चैतानि शून्यत्वेऽधिष्ठीयन्ते ध्रुव परै. ॥ <-- [ ] इति । व्यवहारभाष्येऽपि --> सव्व च लक्खणोवेय समहिठति देवया <-- [७/१८६]

### ❀ રતિદાયિની ❀

આ રીતે છઠ્ઠા ષોડશકમા જિનાલય બનાવવાનુ વિધાન કરીને 'જિનબિબ કરાવવા યોગ્ય છે' આ વાતને મૂલકારશ્રી જોડે છે

<u>ગાથાર્થ</u> - બુદ્ધિમાને જિનમદિરમા જિનબિબ ઝડપથી કરાવવુ જોઈએ કારણ કે આ રીતે જિનમદિર અધિષ્ઠિત થઈને વૃદ્ધિવાળુ બને છે [૭/૧]

### ⋇ દેરાસરમાં જિનપ્રતિમા તરત પધરાવવી ⋇

<u>**ટીકાર્થ**</u> - દેરાસરસલગ્ન કાર્યના ક્રમ સબધી બુદ્ધિ ધરાવનાર શ્રાવકે દેરાસરમા જિનબિબ તુરત જ બનાવવુ જોઈએ કારણ કે આ રીતે જિનબિબ કરાવવામા આવે તો પ્રસ્તુત દેરાસર અધિષ્ઠિત = માલિકયુક્ત બનીને વૃદ્ધિ પામે છે, કારણ કે જિનમદિરને

फलप्रयोजकत्वात्, अस्पृश्यस्पर्शादिप्रतिसन्धानस्य च भक्तिविशेषव्याघातकत्वेनाऽनुपपत्त्यभावात् । शक्तिपक्षे चाप्रतिष्ठितत्वभ्रमेऽपि विशिष्टपूजाफलापत्ते ।

कल्याणकन्दली

विशिष्टफलापत्तिरिति वक्तव्यम्, **अस्पृश्यस्पर्शादिप्रतिसन्धानस्य च** = 'इद बिम्ब चाण्डालादिना स्पृष्ट' इत्यादिज्ञानस्य हि **भक्तिविशेषव्याघातकत्वेन अनुपपत्त्यभावात्** = विशिष्टफलानुत्पत्तिसङ्गते । न हि व्यापारविशेषविरहे व्यापारिणा फलविशेषाऽऽधान सम्भवति ।

केचित्तु अस्पृश्यस्पर्शादिस्थले बिम्बस्य पुन॰ प्रतिष्ठा कर्तव्या, –> 'सस्कृते तुलिते चैव दुष्टस्पृष्टे परीक्षिते । हृते बिम्बे च लिङ्गे च प्रतिष्ठा पुनरेव हि ॥ <– [१२/२०७] इति **शिल्परत्नाकर**वचनादिति **वदन्ति** ।

**शक्तिपक्षे च** = पूजाफलप्रयोजक-प्रतिमागत-प्रतिष्ठाजन्यशक्तिस्वीकारे हि **अप्रतिष्ठितत्वभ्रमेऽपि** = 'नेद प्रतिष्ठितमि'ति भ्रान्तावपि पूजाकरणे **विशिष्टपूजाफलापत्तेः** = पूजाजन्यताक्रान्तविशिष्टफलोत्पादापातात्, प्रतिमाया वस्तुगत्या प्रतिष्ठितत्वेन पूजाफलप्रयोजकशक्तिमत्त्वात् । अनादिमत्या हि प्रतिमाया सर्वस्यामेव भगवदभेदाध्यारोप इष्टसाधनम्, आदिमत्या तु प्रतिष्ठितायामेवेति । तत प्रतिष्ठाऽऽहितशक्तिकल्पनमनतिप्रयोजनमित्यापातदर्शिन॰ ।

अत्रेदमवधेय यद्यपि प्रतिमाया प्रतिष्ठितत्वज्ञान प्रतिष्ठाविधिप्रतिसन्धानोत्थापितवचनादर-भगवद्बहुमानाऽऽहितसमापत्तिद्वारा विशिष्टफलप्रयोजकम् । अत एव मूलोत्तरगुणसहस्रसमेतसूरिकृतप्रतिष्ठैवोत्सर्गत प्रमाण प्रतिष्ठोत्कर्षस्य समापत्त्युत्कर्षकत्वात् तथापि वस्तुत॰ प्रतिष्ठिताया प्रतिमाया भगवदारोपस्तत्पूजन वा सामान्यफल नातिक्रमतीति तन्नियामकशक्तिसिद्धि , 'विषयभेदात् फलभेद ' इति व्यवहारनयसाम्राज्यात् । अत एव साधुत्वासाधुत्वविवेचनाऽभावेऽपि पात्रभेदाद्दानफलभेदस्तत्र तत्र व्यवतिष्ठते । आलम्बनमतन्त्र भावभेद एव फलभेदहेतुरिति नयान्तरमतमिति व्यक्त **गुरुतत्त्वविनिश्चये** ।

यत्तु प्रतिष्ठाविधिना प्रतिमादौ देवतासन्निधिरहङ्कारममकाररूप क्रियते, स्वसादृश्यदर्शिन विशेषदर्शनेऽपि चित्रादौ इव आहार्यारोपसम्भवात्, ज्ञानस्य नाशेऽपि सस्कारसत्त्वाच्च न पूजाफलानुपपत्ति , अस्पृश्यस्पर्शादिना च तन्नाश॰ [तत्त्वचितामणि ईश्वरानुमान पृष्ठ १४४] इति **जरन्नैयायिका** वदन्ति, तदत्यन्तमसम्बद्धम् । वीतरागस्थले इत्थ वक्तुमशक्यत्वात् सरागे देवत्वबुद्धेरेव मिथ्यात्वादिति [८/६ पृष्ठ-१९४] वक्ष्यते । असर्वज्ञसरागदेवाना व्यासङ्गदशाया व्यवहितनानादेशेषु प्रतिष्ठाकर्मबाहुल्ये चाहङ्कार-ममकारानुपपत्तेरुक्तत्वात् । सस्कारनाशेऽपूज्यत्वापत्ते तज्ज्ञानसस्कारयो अननुगतयो पूजाफलप्रयोजकत्वे गौरवाच्चेति । **न च** भवतामपि व्यासङ्गवशात् प्रतिष्ठितत्वज्ञानाभावे पूजाफलानुपपत्तिरिति **वाच्यम्**, फलविशेषाभावेऽपि प्रीत्यादिना तदा सामान्यफलानपायात् । यैस्तु यथार्थप्रतिष्ठितत्वप्रत्यभिज्ञान पूजाफलसामान्ये एव प्रयोजकमिष्यते तेषामयमपि दोष एवेति व्यक्त **अतिरिक्तशक्तिवादे** [पृ १३१ वादमाला] ।

**यत्तु प्रतिमाशतकवृत्तौ** टीकाकृतैव –> प्रतिष्ठिविधिना जनितस्याऽऽत्मगतस्याऽतिशयस्याऽदृष्टाख्यस्य पूजाफलप्रयोजकत्वात् <– [गा ७५ वृ पृ. ४४९] इत्युक्त **तत्तु** प्रतिष्ठाकारयितृकर्तृकपूजाजन्यविशिष्टफलापेक्षया बोध्यम् । इत्थमेव –> भावरसेन्द्रात्तु . <– [८/८] इत्यादिवक्ष्यमाणग्रन्थोऽप्युपपद्यते । प्रकृते तु कर्तृसामान्यापेक्षया पूजाफलव्यवस्थोपदर्शितेति न विरोधगन्धोऽपीति भावनीयम् ।

ये तु नव्यनैयायिका प्रतिष्ठाविधिना जनित विचित्रमदृष्ट स्वाश्रयात्मसयोगाश्रयस्य पूज्यताप्रयोजकमभ्युपगच्छन्ति तेषा

પણ જરૂર નથી છતા પણ અહીં એવી શકા થાય કે –> આપણી દેખતા કોઈ ચાડાલ વગેરે અસ્પૃશ્ય લોકો પ્રતિમાને સ્પર્શ કરે તો તે પ્રતિમા અપૂજ્ય કેમ બની જાય છે ? તેવી પ્રતિમાની પૂજા કેમ થતી નથી ? <– તો તેના સમાધાનમા એમ કહી શકાય છે કે ચાડાલ, કસાઈ વગેરે) અસ્પૃશ્ય લોકોના સ્પર્શ વગેરેનુ પ્રતિમામા ભાન થાય છે તે પ્રતિમાવિષયક વિશિષ્ટ ભક્તિનો વ્યાઘાત કરે છે તેથી કોઈ અનુપપત્તિ = અસગતિ નથી (અર્થાત્ 'આ પ્રતિમાને ચાડાલ વગેરે અડી ગયેલ છે' એવુ જ્ઞાન થવાથી પ્રતિમાને વિશે ભક્તિવિશેષ પ્રગટતી નથી અને તેથી તેવી પ્રતિમા તેવી વ્યક્તિ દ્વારા પૂજાતી નથી આથી તેવી પ્રતિમાને અપૂજ્ય કહેવાના પ્રવાદની સગતિ થઈ શકે છે હવે શ્રીમદ્જી મીમાસકમતના નિરાકરણ માટે કહે છે કે –>) પ્રતિષ્ઠા દ્વારા પ્રતિમામા ઉત્પન્ન થયેલ તથા ચાડાલાદિસ્પર્શથી નાશ્ય એવી શક્તિ એ જ પૂજાના ફળની પ્રયોજક છે- આવા મીમાસકમાન્ય શક્તિપક્ષનો સ્વીકાર કરવામા આવે તો અપ્રતિષ્ઠિતત્વનો ભ્રમ હોવા છતા પણ પૂજાજન્ય વિશિષ્ટ ફલની આપત્તિ આવશે (અર્થાત્ જે પ્રતિમા વાસ્તવમા પ્રતિષ્ઠિત છે અને તેમા કોઈને ભ્રમ થાય કે 'આ પ્રતિમા અપ્રતિષ્ઠિત છે ' છતા પણ તે વ્યક્તિ તે પ્રતિમાની પૂજા કરે તો તેને પૂજાજન્ય વિશિષ્ટ ફળ મળવાની આપત્તિ આવશે, કારણ કે પૂજાફલપ્રયોજક શક્તિ તો પ્રતિમામા રહેલી જ છે પરતુ તેવા સ્થળે વાસ્તવમા પૂજાનુ સામાન્ય ફળ જ મળે છે, નહિ કે વિશિષ્ટ ફળ માટે શક્તિપક્ષને પ્રામાણિક માની ન શકાય, સ્વીકારી ન શકાય )

एतेन —> प्रतिष्ठाध्वंस एवाऽस्पृश्यस्पर्शाऽभावविशिष्ट' पूजाफलप्रयोजक इति <— मणिकृन्मतमपि अपास्तमिति दिग् ।

भक्तिविशेषाऽऽधायकतयेव यत प्रतिष्ठा फलवती तत एव स्वप्रतिष्ठापितत्वादिविशेषा अपि पुरुषविशेषे

कल्याणकन्दली

तद्व्यक्तिविशिष्टसम्बन्धाऽग्रहेऽतिप्रसङ्ग तद्ग्रहे चाननुगम इति व्यक्त भक्तिद्वात्रिंशिकायाम् [५/१९] ।

एतेन = प्रतिष्ठाया प्रतिष्ठितत्वज्ञानाऽऽहितभक्तिविशेषद्वारा पूजाफलप्रयोजकत्वेन । अस्याग्रे 'अपास्तमि'त्यनेनान्वय । प्रतिष्ठाध्वंस एवेति । एवकारेण प्रतिष्ठादे व्यवच्छेद कृत । अस्पृश्यस्पर्शाभावविशिष्टः पूजाफलप्रयोजकः । ततश्च नाऽस्पृश्य-स्पृष्टप्रतिमापूजनात् फलापत्तिरिति मणिकृन्मतम्, तदुक्त तत्त्वचिन्तामणौ —> 'प्रतिष्ठित पूजयेदि'ति विधिवाक्येन प्रतिष्ठिताया कारणत्व न बोध्यते किन्तु भूतार्थक्तानुशासनादतीतप्रतिष्ठे पूज्यत्व बोध्यते । तथा च प्रतिष्ठाध्वंस प्रतिष्ठाकालीनयावदस्पृश्य-स्पर्शादिप्रतियोगिकानादिकालसंसर्गाभावसहित पूज्यत्वप्रयोजक <— [अनुमानखण्ड २/२ ईश्वरानुमाने पृ ४४४] । प्रतिष्ठाकालीनेति । न चाऽस्पृश्यस्पर्शकालीनप्रतिष्ठयाऽपि पूज्यत्वापत्ति , तत्र कर्मवैगुण्येन प्रतिष्ठाया एवाऽसत्त्वात् । न चानाद्यनन्ताभावे गौरव, यावन्तोऽस्पृश्यस्पर्शाभावास्तावदभावसहितस्यैव पूज्यताप्रयोजकत्वसम्भवादिति वाच्यम्, तावदभावसहितप्रतिष्ठाध्वंसस्य हेतुत्वे तावन्तोऽभावा अपि हेतव इति ध्रुव, तथा चानाद्यनन्तभावे साद्यभावानामपि जनकत्वमिति बहूना जनकत्वे गौरवमिति अल्प-जनकत्वलाघवेन साद्यव्यावर्तनार्थमनादिपदोपादानादिति आलोककृत् जयदेवमिश्रः ।

तन्न, प्रतिष्ठाया क्रियेच्छारूपत्वेन तद्ध्वंसस्य प्रतिमानिष्ठत्वाभावात्, संयोगरूपत्वेऽपि द्विष्ठत्वात्, कारणीभूताभावप्रति-योगित्वेन पूजाफले प्रतिष्ठाया प्रतिबन्धकत्वव्यवहारापत्ते । क्तप्रत्ययस्थलेऽपि 'प्रोक्षिता व्रीहय' इत्यादौ ध्वंसव्यापारकत्वाऽ-कल्पनात्, कालान्तरभाविनि फले चिरनष्टस्य कारणस्य भावव्यापारकत्वनियमाच्च, अन्यथाऽपूर्वोच्छेदापत्ते । न च प्रतिष्ठाध्वंसस्य क्लृप्तत्वेन लाघवमिति प्रतिष्ठाया अन्यथासिद्धत्वमिति वाच्यम्, तथापि तस्य ध्वंसाऽप्रतियोगित्वेन सकृत् फलोत्पत्त्यनन्तर घटीयन्त्रवदनवरत फलोदयाऽविगमात् । किञ्च प्रतियोगि-ध्वंसयोरेककार्यकारित्व कुत्रापि न क्लृप्तम्, फलतो विरुद्धकार्यारम्भ एव दृश्यते । नैयायिकमते तु किञ्चिदवयवनाशेन प्रतिमान्तरोत्पत्तौ तत्र प्रतिष्ठाध्वंसानभ्युपगमात् पूज्यताऽनापत्ति , उक्तसंसर्गा-भावाना बहूनामवच्छेदकत्वनिवेशे गौरवात्, प्रतिष्ठाया शक्तिविशेषे तन्नाशेऽस्पृश्यस्पर्शादीना चैकशक्तिमत्त्वेन हेतुत्वे लाघवादि-त्यादिसूचनार्थ दिगिति प्रोक्तम् ।

भक्तिविशेषाधायकतयेव यतः प्रतिष्ठा = अञ्जनशलाकादिविधिकृतप्राणप्रतिष्ठा फलवती = फलजनने उपयुज्यते ।

## ॐ ચિંતામણિકારમત નિરાકરણ ॐ

एतेन० । પ્રસ્તુતમા તત્ત્વચિન્તામણિ ગ્રથના રચયિતા ગગેશ ઉપાધ્યાય એમ કહે છે કે —> પૂજાજન્ય ફળની પ્રયોજક પ્રતિષ્ઠા નથી પણ પ્રતિષ્ઠાનો ધ્વસ છે પરતુ પ્રતિષ્ઠાધ્વસ સામાન્ય નહિ પણ અસ્પૃશ્યસ્પર્શાભાવવિશિષ્ટ (ગગેશજીનો કહેવાનો આશય એ છે કે ક્રિયાસ્વરૂપ પ્રતિષ્ઠા ક્ષણિક હોવાથી પૂજાફળ પ્રત્યે પ્રતિષ્ઠાને પ્રયોજક માની ન શકાય પરતુ પ્રતિષ્ઠાનો ધ્વસ અવિનાશી હોવાથી તેને પૂજાફળનો પ્રયોજક માની શકાય પરતુ આવુ માનવામા આપત્તિ એ આવશે કે - ચાડાલ વગેરે અસ્પૃશ્ય લોકો પ્રતિમાને અડશે ત્યાર પછી પણ પ્રતિમા પૂજનારને પૂજાજન્ય ફળ મળશે, કારણ કે પ્રતિષ્ઠાધ્વસ તો સાદિ-અવિનાશી હોવાથી તે સમયે વિદ્યમાન જ છે તેથી આ આપત્તિના નિવારણ માટે અસ્પૃશ્યસ્પર્શાભાવથી વિશિષ્ટ પ્રતિષ્ઠાધ્વસને પૂજાફલપ્રયોજક માનવો જોઈએ તેથી કોઈ ચાડાલ વગેરે પ્રતિષ્ઠિત પ્રતિમાને અડશે ત્યાર પછી તે પ્રતિમામા રહેલ પ્રતિષ્ઠાધ્વસ અસ્પૃશ્યસ્પર્શથી વિશિષ્ટ બનશે, નહિ કે અસ્પૃશ્યસ્પર્શાભાવવિશિષ્ટ માટે ત્યાર બાદ તે પ્રતિમાને જે કોઈ પૂજશે તેને પૂજાજન્ય ફળ નહિ મળે, કારણ કે ત્યારે ત્યા અસ્પૃશ્યસ્પર્શાભાવવિશિષ્ટ પ્રતિષ્ઠાધ્વસ નથી રહેતો ) ટીકાકાર શ્રીમદ્જી એમ કહે છે કે ચિંતામણિકારના ઉપરોક્ત મતનુ નિરાકરણ પૂર્વોક્ત યુક્તિથી જ થઈ જાય છે અર્થાત્ જે પ્રતિમા પ્રતિષ્ઠિત થઈ હશે અને તેમા કોઈને અપ્રતિષ્ઠિતત્વનો ભ્રમ થાય તો તેવા ભ્રાત માણસને તે પ્રતિમાની પૂજાથી વિશિષ્ટ ફળ મળવાની આપત્તિ આવશે, કારણ કે તે પ્રતિમામા અસ્પૃશ્યસ્પર્શાભાવવિશિષ્ટ પ્રતિષ્ઠાધ્વસ વિદ્યમાન છે તેથી જ તેવા પ્રતિષ્ઠાધ્વસને પૂજાફલનુ પ્રયોજક માની ન શકાય અહીં જે કાઈ કહેવામા આવેલ છે તે માત્ર દિશાસૂચન છે તેને અનુસારે આગળ ઘણુ વિચારી શકાય તેમ છે - આ હકીકતને જણાવવા શ્રીમદ્જીએ 'दिग्' શબ્દનો પ્રયોગ કર્યો છે જિજ્ઞાસુ વ્યક્તિ અમે રચેલ કલ્યાણકદલી-સસ્કૃતટીકાનુ અવલોકન કરી શકે છે

## ॐ પ્રતિષ્ઠાના કર્તા વિશે મીમાંસા ॐ

भक्ति० । પ્રતિષ્ઠા એ વિશેષ પ્રકારની ભક્તિ લાવવાના કારણે જ સફળ થાય છે તેથી જ પોતાના દ્વારા પ્રતિમા પ્રતિષ્ઠિત

' मुद्रितप्रतौ ' स्पर्शाभावविशिष्ट' इत्यशुद्ध पाठ ।

भवितविशेषाऽऽधायकतयाऽऽद्रियन्ते । तथा चोक्त ग्रन्थकृतैव **पूजाविंशिकाया** —> सयकारियाइ एसा जायइ ठवणाइ बहुफला केई । गुरुकारियाइ अन्ने विसिट्ठविहिकारियाए अ ॥ थंडिल्ले वि य एसा मणठवणाए पसत्थिगा चेव । आगास-गोमयाइहि एत्थमुवलेवणाइ हिय ॥ उवयारगा इह सोवओगसाहारणाण इट्ठफला । किंचि विसेसेण तओ सव्वे ते विभइयव्वत्ति ॥ (वि वि ८/१३-१४-१५) आसामर्थलेशो यथा —> स्वयकारितया स्थापनयैषा पूजा बहुफला जायत इति **केचिन्मन्यन्ते** । गुरव = मातृ-पितृ-पितामहादय तै कारितयेत्यन्ये । विशिष्टविधिकारितयेति **अपरे** ।

## कल्याणकन्दली

**तत एव स्वप्रतिष्ठापितत्वादिविशेषाः** = स्वकारितत्व-गुरुकारितत्वादिविशेषा **अपि पुरुषविशेषे** = बाहुल्येन व्यवहारनयानुसृत-जीवविशेषे **भक्तिविशेषाधायकतया** = विशिष्टभक्तिबहुमानादिप्रयोजकतया **आद्रियन्ते** । तदुक्त **प्रतिमाशकवृत्तौ** —> प्रतिष्ठाजनिता आत्मगता समापत्तिरेव स्वनिरूपकस्याप्यालम्बनत्वसम्बन्धेन प्रतिष्ठितत्वव्यवहारजननीत्यर्थ , या द्राक् = शीघ्र प्रत्यभिज्ञाय पूजा कृता विशिष्टफलदा स्यात् । विशिष्ट फल = आकारमात्रालम्बनाध्यवसायफलातिशायि । तथा च प्रतिष्ठित-विषयक यथार्थ प्रत्यभिज्ञानमेव पूजाफलप्रयोजकमिति तेनाऽस्या प्रतिष्ठाया गुणवता = प्रशस्तगुणाना कर्तृणा अधिकारिता; शुद्धस्य विशिष्टस्याऽऽशयस्य स्फूर्त्तये 'विशिष्टगुणवत्प्रतिष्ठितेय' इति प्रत्यभिज्ञाने विशिष्टाध्यवसायस्य प्रत्यक्षसिद्धत्वात् । वैगुण्ये तु = प्रतिष्ठाविधिसामग्र्यसम्पत्तौ तु तत॰ = प्रत्यभिज्ञानात् स्वतोऽपि उपनतात् बाह्यसामग्री विना मनसोऽप्युपस्थितात् प्रतिष्ठाफलमिष्टम् <— [गा ९६] ।

**गुरवः = मातृ-पितृ-पितामहादय** इति । अत्र च मातृ-पितृ-पितामहादिषु बिम्बप्रतिष्ठाया. प्रयोजककर्तृत्वमेवाभि-मतम्, उत्सर्गत. सूरेरेव प्रतिष्ठाकर्तृत्वात् । एतत्तत्त्वमजानाना. **केचितु** —> श्रावकेणैवाऽर्हत्प्रतिमाप्रतिष्ठा कार्या, **दमयन्तीचरित्र-भुवनसुन्दरीचरित्र-बृहत्कल्पादिषु** श्रावकस्यैव जिनबिम्बप्रतिष्ठाकर्तृत्वेन श्रवणात् । तथाहि **दमयन्त्या** —> तत्थ बहुमज्झदेसे पवरायणण पराए भत्तीए । कारविय जिणभुवणे पइट्ठिय सतिजिणबिब ॥ [ ] इत्येवमुक्तत्वात् दमयन्त्यैव प्रतिष्ठा कृता, तत्र यतेरभावात् । **भुवनसुन्दर्या** च —> शक्रावतारे एक बिम्बमाश्रित्य शक्र-चक्रवर्ति-वासुदेवादयश्चक्रिरे प्रतिष्ठाम् <— इत्युक्तम् । **बृहत्कल्पभाष्यचूर्णौ** —> सावओ कोऽवि पढम जिणपडिमाए पतिट्ठवण करेति <— [१७९२] इत्युक्तम् । **श्रीप्रद्युम्नसूरिकृतस्य स्थानकापरनाम्नो मूलशुद्धिप्रकरणस्य** वृत्तौ **श्रीदेवचन्द्रसूरिणा** —> काऊण पाणवित्ति फलेहि तो गिरिगुहाए मज्झम्मि मट्टियमयजिणपडिम काउ वदेइ भत्तीए ॥१२६॥ <— इत्येव **नर्मदासुन्दरीकृतत्वेन** जिनप्रतिष्ठा दर्शिता । **कथाकोशस्वोपज्ञवृत्तौ** अपि —> अडवीपएसे वेयड्ढवासिविज्जाहरेहि भगवओ तिलोयनाहस्स जुगादिदेवस्स मुत्तासेलमई पडिमा पइट्ठिया अहेसि <— [गा २ पृ २-प ९] इत्युक्तमित्याहुः ।

**अत्र वदन्ति** —> दमयन्ती-भुवनसुन्दरी-नर्मदासुन्दरीभि. स्थापनामात्रमेव कृत, न तु सम्पूर्ण प्रतिष्ठाविधि. समनुष्ठित.; सद्बाह्वान-वेदि-वारक-जवारकाणा तत्काल-देशयोरसम्भवात् । **कथारत्नकोशे श्रीदेवभद्रसूरिदर्शित.** 'घोसावेज्ज अमारि, रन्ना सघस्स तह य वाहरण । विन्नाणियसम्माण, कुज्जा खेत्तस्स य विसुद्धि ॥ नवर सुमुहुत्तमि, पुव्वुत्तरदिसिमुह सउणपुव्व । वज्जतेसु चउव्विह-मगलतूरेसु पउरेसु ॥ तो सव्वसघसहिओ ठवणायरिय ठवित्तु पडिमपुरो । देवे वदइ सूरी परिहियनिरुवहयसुइ-वत्थो ।' [पृ ८६-गा १७-१९-२०] इत्यादि. प्रतिष्ठाविधिस्तत्र न प्रवृत्त इति सुप्रसिद्धमेव । अङ्गाऽसिद्धौ कथ प्रधानसिद्धि. । **बृहत्कल्पभाष्यचूर्ण्यादिषु** चेनर्थानुपपत्ते. श्रावकाणा तत्प्रयोजककर्तृत्वमेवावसेयम् । तदुक्त **बृहत्कल्पभाष्यवृत्तौ श्रीक्षेमकीर्तिसूरिभिः**

थवी वगेरे विशेष प्रकारो पण व्यक्तिविशेषमा विशेष प्रकारनी भक्ति लाववाना कारणे आदरणीय छे (अर्थात् 'आ प्रतिमानी प्रतिष्ठा मे करावेली छे' आवी बुद्धि थवाथी अमुक भाग्यशाळीओने विशेष प्रकारनी भक्ति उत्पन्न थती होय तो तेवी व्यक्तिए पोते ज प्रतिष्ठा = अजनशलाका करावीने प्रभुभक्ति करवी जोईए आ प्रमाणे अमुक जैनाचार्यो विधान करे छे ) मूळग्रथकार श्रीहरिभद्रसूरि महाराजे ज त्रण गाथा द्वारा पूजाविंशिकामा कह्यु छे —> पोते करावेल स्थापनाथी आ प्रतिष्ठा बहुफळवाळी थाय छे- एम केटलाक जैनाचार्यो कहे छे पोताना गुरुवर्गे करावेल प्रतिष्ठाथी बहु फळ मळे छे- एम अन्य जैन विद्वानो कहे छे अमुक जैन आचार्य 'विशिष्ट विधिथी करावेल स्थापनाथी प्रतिष्ठा बहुफळवाळी थाय छे' एम कहे छे [१] शुद्ध जमीनमा पण मनथी करेल स्थापनाथी आ प्रतिष्ठा प्रशस्त बने छे (प्रतिष्ठा बुद्धिथी) खुल्ली जग्यामा छाण वगेरेथी उपलेपन = लिंपण वगेरे पण हितकारी छे [२] 'पोताना उपयोगने समान एवा अनुष्ठानोना उपकारक अग होवाथी कईक विशेषताथी ईष्ट फळ आपनार ते बधा पक्षोनु विभजन करवु = योग्य विभाग करवो [३] आ त्रणेय गाथानो आशिक अर्थ टीकाकार श्रीमद्जी जणावे छे के 'पोते करावेल स्थापनाथी = प्रतिष्ठाथी पूजा बहुफळवाळी थाय छे' एम केटलाक जैनाचार्यो माने छे 'माता, पिता, दादा वगेरे गुरुजनोथी करावायेल प्रतिष्ठाथी पूजा बहुफळवाळी थाय छे' एम अन्य जैनाचार्यो कहे छे 'विशिष्ट विधिथी

स्थण्डिले = शुद्धस्थानमात्रे अपि एषा मनःस्थापनया विशिष्टविधिसामग्रीं विना पञ्चनमस्कारस्थापनामात्रेणापि प्रशस्ता = अभिमता, अत्राऽऽकाशगोमयादिभिः = पवित्रोर्ध्वस्थ(मय)गोमयादिभिः उपलेपनादि भूम्यादेर्हितं, तावन्मात्रविधेरपि फलदत्वात्। एते सर्वेऽपि पक्षाः स्वोपयोगसाधारणानामनुष्ठानानां 'उवयारगत्ति' उपकाराङ्गानीति किञ्चिद्-

## कल्याणकन्दली

—> श्रावकाः केचित् जिनानां प्रतिमासु प्रथमतः 'पट्ठवणे'त्ति प्रतिष्ठापनं कर्तृकामाः <— [गा १७९२-वृ ] इति । श्रावकस्य प्रतिष्ठाकर्तृत्वे तु 'प्रतिष्ठां कर्तृकामाः' इत्युक्तं स्यात् । ततश्चाचार्यः प्रतिष्ठां करोति, तं कुर्वन्तं श्रावकः प्रयुङ्क्ते इत्यर्थपरमेव तज्ज्ञातम् । कथाकोशवृत्तिवचनमपि विद्याधरकृतं प्रतिमान्यसनमेव बोधयति, न तु प्राणप्रतिष्ठाम्; 'महुरानगरी घरे कए पढमं अरिहंता पइट्ठविज्जंति, मंगलनिमित्तं । जह न करेंति घरं पडति <— [१७७६] इति बृहत्कल्पभाष्यविशेषचूर्णि-वचनवत् । तदुक्तं जीवानुशासने श्रीदेवसूरिभिः —> जइ पुण पइट्ठअत्थो हवेज्ज तो महुरणयरगेहेसु । मंगलपडिमाण पि हु तुम्ह मया पावइ पइट्ठा <— ॥१३॥ सूरेः प्रतिमाप्राणप्रतिष्ठाकर्तृत्वं तु —> रूप्यकचोलकस्थेन विधिना मधु-सर्पिषा । नेत्रोन्मीलनं कुर्यात्, सूरिः स्वर्णशलाकया ॥ <— [ ] इति वाचकोमास्वातिकृत-प्रतिष्ठाकल्पवचनात् प्रसिद्धमेव । समुद्राचार्येणापि —> सदसेण धवलवत्थेण वेढिय वास-धूव-पुप्फेहिं । अभिमंतिय तिवारा सूरिणा सूरिमंतेण ॥ <— [ ] इत्युक्तम् । —> थुइदाण-मंतनासो आहवणं तह जिणाण दिसिबंधो । नेत्तुम्मीलण-देसण गुरुअहिगारा इह कप्पे ॥ [ ] एतानि गुरुकृत्यानि, शेषाणि तु श्राद्धकृत्यानि इति तपागच्छसामाचारीवचनात् <— इति गुणरत्नसूरिणा प्रतिष्ठाकल्पे यदुक्तं ततोऽपि प्राणप्रतिष्ठायाः प्रधानकर्तृत्वं श्रावके न सिध्यति, नेत्रोन्मीलनस्यैव व्यवहारतः तात्त्विकप्रतिष्ठारूपत्वात् । प्राचीनसामाचारीप्रकरणेऽपि (पृ ३१) अयमेवार्थ उक्तः । सकलचन्द्रोपाध्यायेनाऽपि प्रतिष्ठाकल्पे दर्शनज्ञानचारित्रोपेतस्य निष्परिग्रहस्य महाप्रभावकस्याचार्यस्यैव प्रतिष्ठाधिकारित्वमावेदितम् [पृ ४] । कथारत्नकोशेऽपि श्रीदेवभद्रसूरिभिरेव —> सोवन्नवट्टियाए कुज्जा महुसक्कराहि भरियाए । कणगसलागाए बिंब-नयण-उम्मीलणं लग्गे । सम्मं पइट्ठमंतेण अगमंधीसु अक्खरन्नासं । कुणमाणो एगमणो सूरि वासे खिवेज्ज तहा ॥<— [पृ ८६ गा ४२/४३] इत्येवं सूरेरेव प्राणप्रतिष्ठायाः प्रधानकर्तृत्वमाविष्कृतम् । प्रतिष्ठाकल्पेऽपि —> तो इट्ठसे पत्ते हेमसलागाए मंतविहिपुव्वं जिणनेत्तुम्मीलणयं करेज्ज वन्ने नसं तत्थ ॥ अच्छी-निलाड-संधिसु हियए विय सिरिपयाइए वन्ने । रययस्स वट्टियाए गहियमहू थिरमणो सूरि ॥ <— [ ] इत्येवं सूरेः प्राणप्रतिष्ठाविधिनियोगः प्रोक्तः । यदपि शत्रुञ्जय-माहात्म्ये धनेश्वरसूरिभिः - प्रतिष्ठामर्हतां यो हि कारयेत्सूरिमन्त्रतः । सोऽर्हत्प्रतिष्ठां लभते यथा वापस्तथा फलम् ॥ <— [५/७००] इत्युक्तं ततोऽपि सूरेरेव प्राणप्रतिष्ठाकर्तृत्वं श्रावकादीनाञ्च तत्कारकत्वं सिध्यतः । अन्यत्रापि —> प्रतिष्ठाप्या जिनेन्द्राणां प्रतिमा निर्मिता नवा. । विधिना सूरिमन्त्रेण गुरुणा ब्रह्मचारिणा ॥ <— [ ] इत्युक्तम् । चैत्यवन्दनमहाभाष्येऽपि —> इय बहुविहविवाइ सूरिहिं पइट्ठाइ दीसंति । भवियाणदकराइं पभावगाइं पवयणस्स ॥३१॥ <— इत्युक्तम् । काशहृद-श्रीभिन्नमाल-सत्यपुरादिषु संवत्सरान्विताऽऽचार्यनामाक्षराणि जिनबिम्बेषु दृश्यन्त एव प्राणप्रतिष्ठाकर्तृतया । तदुक्तं जीवानुशासने देवसूरिभिः —> तह कासन्ह-सिरिभिल्लमाल-सच्चउरबिंबमाईण । अपमाणयं कुणतेहिं तेहिं अप्पा भवे खित्तो ॥ <— [१४] इति । काशहृदीयजिनस्तोत्रेऽपि —> नमि-विनमिकुलान्वयिभिर्विद्याधरनाथ-कालिकाचार्यैः । काशहृदशङ्खनगरे प्रतिष्ठितो जयति जिनवृषभः ॥ <— [ ] इत्युक्तम् । विध्यनभिज्ञतया प्राणप्रतिष्ठाकरणे महापाय एव । तदुक्तं पादलिप्तसूरिभिः —> अवियाणि-ऊण य विहिं जो ठवेति मूढमाणो । अहिमाण-लोहजुत्तो निवडइ संसारजलहिंमि ॥ <— इति । प्राणप्रतिष्ठाकरणे सूरेर्यथा न महाव्रतादिलोपः तथा विविदिषुभिः श्रीअजितदेवसूरिविरचितं मोहोन्मूलनवादस्थानकं विलोकनीयम् । आचारदिनकरे तु खरतरगच्छीयेन श्रीवर्धमानसूरिणा —> आचार्यैः पाठकैश्चैव साधुभिः ज्ञानमत्त्रिये । जैनविप्रैश्च क्षुल्लकैश्च प्रतिष्ठा क्रियतेऽर्हतः ॥ <— [प्रतिष्ठाविधि-पृ १४७-गा १४] इत्युक्तं तच्चिन्तनीयम् ।

शुद्धस्थानमात्रेऽपि मनःस्थापनया पञ्चनमस्कारमात्रेणाऽपि प्रशस्ता = फलावहा । न च बिम्बविरहे शुद्धस्थानमात्रे मनःस्थापनया नमस्कारकरणे को हि लाभ इति शङ्कनीयम्, तत्र मनोमयस्य बिम्बस्य सद्भावात्, बिम्बस्याऽष्टविधत्वेन परैरप्युक्तत्वात्, यथोक्तं —> शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥<— [ ]

કરાવેલ પ્રતિષ્ઠાથી પૂજા ફળવાળી થાય છે' એમ અપર જૈનાચાર્યો માને છે [૧] કેવળ શુદ્ધ જગ્યામાં પણ મનસ્થાપનાથી = વિશિષ્ટ વિધિ-સામગ્રી વિના નવકારની સ્થાપના કરવા માત્રથી પણ પૂજા પ્રશસ્ત છે, માન્ય છે. શુદ્ધ જમીનમાં પ્રભુપ્રતિમાની બુદ્ધિથી પવિત્ર ઘાસ = દર્ભ નામનું ઘાસ, છાણ વગેરેથી શુદ્ધ જમીન વગેરેનું ઉપલેપન = લિંપણ પણ હિતકારી છે અર્થાત્ ફક્ત આટલી વિધિ પણ ફળ આપે છે. [૨] આ બધા ૫ પક્ષો પોતાના ઉપયોગને સમાન = અનુરૂપ એવા અનુષ્ઠાનોના ઉપકારક અંગો છે. આથી કોઈક વિશેષતાથી વિશિષ્ટ ફળને આપે છે. કારણ કે દરેક ક્રિયા = અનુષ્ઠાન બધાને ઉપયોગસદૃશ = સ્વોપયોગસમાન = પોતાના ઉપયોગને અનુસાર સુંદર હોય છે. કોઈ પણ અનુષ્ઠાન કોઈને સ્વજાતિથી = પ્રકૃતિથી = સ્વભાવથી પ્રતિનિયત નથી.

विशेषेणेष्टफला । कर्म हि सर्वं सर्वस्योपयोगसदृशं प्रशस्तं, न तु कस्यचित् किञ्चित् जात्या प्रतिनियतम् । ततो यस्य यदुपकारकं तस्य तदिष्टमिति स्वकृतस्थापनादिपक्षाः सर्वेऽपि विभक्तव्याः । स्वकृतस्थापनादिबुद्ध्या भक्तिविशेषोत्पत्तौ समीचीना ममत्वकलहाद्युत्पत्तौ चाऽसमीचीना इति भावः ।

कल्याणकन्दली

**किञ्चिद्विशेषेण** भक्त्यादिविशेषेण **इष्टफलाः** । अतो न ते दूषयितव्याः, तदुक्तं **चैत्यवन्दनमहाभाष्येऽपि** –> तो सुत्ताऽपडिसिद्धा पवयणसोहावहा चिरपवत्ता । सच्चा न दूसियव्वा आयरणा मुत्तिकामेहिं ॥३३॥ <– इति ।

**सर्वेऽपि विभक्तव्या** इति । सत्येतरविभजनमेवाऽऽवेदयति - **स्वकृतस्थापनादिबुद्ध्या भक्तिविशेषोत्पत्तौ** जिनबिम्बादिगोचरभक्तिविशेषोत्पत्तौ **समीचीना** इति **ममत्व-कलहाद्युत्पत्तौ चासमीचीना** इति भावः ।

यथोक्तं **सम्यक्त्वप्रकरणे** –> गुरुकारियाइ केइ अन्ने सयकारियाइ तं बिंति । विहिकारियाइ अन्ने पडिमाए पूअणविहाणं <–॥२५॥ तद्व्याख्या चैवं –> गुरवो मातृ-पितृ-पितामहादयः तैः कारितायाः केचित्, अन्ये स्वयंकारितायाः , विधिकारितायास्त्वन्ये प्रतिमायास्तत्पूर्वाभिहितं पूजाविधानं ब्रुवन्ति, कर्तव्यमिति शेषः । अवस्थितपक्षस्तु गुर्वादिकृतत्वस्यानुपयोगित्वात् ममत्वाऽऽग्रहरहितेन सर्वप्रतिमा अविशेषेण पूजनीयाः , सर्वत्र तीर्थकृदाकारोपलम्भेन तद्बुद्धेरुपजायमानत्वात्, अन्यथा हि स्वाग्रहवशात् अर्हद्बिम्बेऽप्यवज्ञामाचरतो दुरन्तसंसारपरिभ्रमणलक्षणो बलवद्दण्डः समाढौकते । न चैवमविधिकृतामपि पूजयतः तदनुमतिद्वारेणाऽऽज्ञाभङ्गलक्षणदोषापत्तिः, आगमप्रामाण्यात् [श्राद्धविधिवृत्ति पृ.१३३] । तथाहि **श्रीबृहत्कल्पभाष्ये** –> निस्सकडमनिस्सकडे वा वि चेइए सव्वहिं थुई तिन्नि । वेलं व चेइआणि य णाउं इक्किक्कया वा वि ॥१८०४॥ <– इति । –> निश्राकृते = गच्छप्रतिबद्धे, अनिश्राकृते वा तद्विपरीते चैत्ये सर्वत्र तिस्रः स्तुतयो दीयन्ते । अथ प्रतिचैत्यं स्तुतित्रये दीयमाने वेलाया अतिक्रमो भवति, भूयांसि वा तत्र चैत्यानि ततो वेलां चैत्यानि वा ज्ञात्वा प्रतिचैत्यमेकैकाऽपि स्तुतिर्दातव्येति <– इति **बृहत्कल्पवृत्तिकृतः श्रीक्षेमकीर्त्त्याचार्याः** । गुरुकारितादिप्रतिमापूजनमतप्रतिपादनावसरे **श्रीतिलकाचार्येण** तु **दर्शनशुद्धिप्रकरणवृत्तौ** –> परं मतान्येवैतानि, कार्यपक्षस्त्वर्हत्प्रतिमां दृष्ट्वा पूजयेद्, अन्यथाऽवज्ञा स्यात् <– [गा २५ वृ पृ १७१] इत्युक्तम् । **एतेन** –> गच्छान्तरीयाः प्रतिमा न वन्दनीया गच्छान्तरपरिगृहीतत्वात् । यो यो गच्छान्तरपरिगृहीतः स सोऽवन्दनीयः यथाऽन्यगच्छसाधुः <– इति **धर्मसागरमतमपि प्रत्युक्तम्** । अत्रावस्थितपक्षो ह्येव जिनपूजानियामकं उत्सर्गतो विधिकारितत्वमेव, गुरुकारितत्वस्वयंकारितत्वयोरपि तद्विशेषरूपयोरेवात्रोपन्यासात् । अत एव विषयविशेषपक्षपातोल्लसद्वीर्यवृद्धिहेतुभूततया तदन्यथात्वे च त्रयाणामपि पक्षाणां भजनीयत्वोक्तिः । विधिकारिताऽसम्पत्तावपवादतस्त्वाकारसौष्ठवमवलम्ब्य मनःप्रसत्तिरापादनीया । न चैवमविध्यनुमतिः अपवादालम्बनेन तन्निरासात् क्रमदेशनाया स्थावरहिंसाऽनुमतिवद् भक्तिव्यापारप्रदर्शनेन दोषोपस्थितिप्रतिरोधाद्वा काव्य इव व्यक्तिप्रदर्शनेनेति शास्त्रस्थितिः **प्रतिमाशतकवृत्तौ** [गा ७१] व्यक्ता ।

उपलक्षणात् स्नात्र-पूजादौ सामाचारीविशेषेण विविधविधिदर्शनेऽपि न व्यामोहः कार्यः, अर्हद्भक्तिफलस्यैव सर्वेषां साध्यत्वात् । गणधरादिसामाचारीष्वपि भूयांसो भेदा भवन्ति । तेन यद्यद्धर्माद्यविरुद्धमर्हद्भक्तिपोषकं तत्तन्न केषामप्यसम्मतम् । एवं सर्वधर्मकृत्येष्वपि ज्ञेयमिति **श्राद्धविधिवृत्तौ** व्यक्तम् [पृ.१३२] । यद्यपि **सम्यक्त्वकुलके** –> अहिगारिणो अ सड्ढो वावणकुमग्ग-कुमइरहिउ अ । तेण कारइअव्वं जिणभुवणं वंदणिज्जमिणं ॥ निप्फाविऊण एवं जिणभवणं सुंदरं तहिं बिंबं । विहिकारिअं च विहिआ सुपइट्ठा साहुणो मण्णा ॥ <– [ ] इत्युक्तम् । **व्यवहारभाष्येऽपि** –> आगमविहिणा कारियं सुगुरूवएसे सुसावगेहिं च । नायज्जिअवित्तेण तं आययणं जिणा बिंति ॥ सन्नाण-चरण-दंसणपमुक्कसाहूहिं जा परिग्गहिआ । ताओ जिणपडिमाओ अणाययणं हुंति जुत्तिए ॥ जिणबिंबमणाययणं कुसाहुपरततया समुद्दिट्ठं । दिट्ठंतो जिणपडिमाबोडियलिंगाइयाणं इहं ॥ अणाययणं पुण णाण-दंसण-चरणघायणं ठाणं । मुक्खत्थिसुधम्मिजणवज्जणिज्जं विसुद्धभावेण ॥ <– [ ] इत्युक्तं तथापि पुष्टालम्बने तदपि वन्दनीयमेव । तदुक्तं **बृहद्भाष्ये** –> असइ विहिचेइअम्मि सद्धाभगाइ कारणं नाउं । वच्चंति तत्थ मुणिणो नो मुणिणो जे अगीयत्था ॥ <– [ ] इति । साम्प्रतं तु जीतेनाऽन्यतीर्थीयज्योतिष्काध्ययनवत्

(અર્થાત્ કોઈ ધર્મક્રિયા કોઈને વરેલી નથી કોઈ પણ ધર્મક્રિયાનો કોઈ ઠેકેદાર - ઈજારદાર નથી ) તેથી જેને જે પ્રકારનુ અનુષ્ઠાન ઉપકારક હોય તેને તે અનુષ્ઠાન આદરવુ સારુ છે માટે સ્વકૃતપ્રતિષ્ઠા વગેરે બધાય પક્ષોનુ યોગ્ય વિભજન કરવુ કહેવાનો ભાવ એ છે કે 'મે આ પ્રતિમાની અંજનશલાકા - પ્રતિષ્ઠા કરાવેલ છે' વગેરે બુદ્ધિથી વિશેષ પ્રકારે પ્રભુભક્તિ ઉત્પન્ન થાય તો તે બધાય પક્ષો સારા છે અને તેવા પ્રકારની બુદ્ધિથી-આગ્રહથી મમતા, ઝઘડા વગેરે ઉત્પન્ન થાય તો તે બધા પક્ષો ખરાબ છે

१ मुद्रितप्रतो 'तेषा' पद नास्ति ॥

इत्थञ्च ये गुर्वादिप्रतिष्ठापितत्व सर्वथाऽनुपयोगीति वदन्ति 'तेषा, ये च विधिप्रतिष्ठापितत्व एव निर्भर कुर्वन्ति तेषा अभिप्राय त एव विदन्ति इति' कृतमतिविस्तरेण ॥८/४॥

प्रकृतमुच्यते । ननु किमिति स्वात्मन्येव पर स्थापन उच्यते, नान्यत्र ? इत्याशङ्कयाह --> 'बीजमि'त्यादि।

बीजमिद परम यत्परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तेषैवेति विज्ञेया ॥८/५॥

**इद** = स्वात्मनि मुख्यदेवतास्वरूपगतवीतरागत्वादिगुणस्थापन **बीज** = कारण वर्तते **परम** = प्रकृष्ट **यत्** = यस्मात् **परमाया एव** = प्रकृष्टाया एव **समरसापत्ते** = मुख्यदेवतास्वरूपतुल्यतापत्ते, **स्थाप्येनापि** = बिम्बेनाऽपि

कल्याणकन्दली

दर्शनशुद्धिप्रकरणाद्यनुसारेण देशतोऽविधिचैत्यमपि उत्सर्गतो वन्दनीयादितयाऽशठगीतार्थै प्रतिपन्नमिति व्यक्त द्रव्यसप्ततिकावृत्तौ । प्रतिमाशतकवृत्तौ तु --> प्रतिष्ठाकारणाऽसम्पत्तौ प्रतिष्ठाकर्तृगुणाना प्रायो दुर्लभत्वे वा कटुक-दिगम्बर-प्रतिष्ठित-द्रव्यलिङ्गिद्रव्य-निष्पन्नव्यतिरिक्ता सर्वा अपि प्रतिमा वन्दनीया इति वचनप्रतिष्ठापि फलावहेत्याम्नायविद । नयानादरेऽपि कर्तृगतोत्कटदोष-ज्ञानाच्छुद्धाऽऽशयाऽपरिस्फूर्ते । अत एव साधुवासक्षेपादवन्दनीयास्तित्रोऽपि वन्दनीयता नातिक्रामन्तीति सूरिचक्रवर्त्तिना श्रीहीरनामधेयानामाज्ञा, तत शुद्धाशयस्फूर्तेरप्रतिहतत्वादिति <-- [गा ७६ पृ ४७३] प्रोक्तम् ।

वस्तुतस्तु सर्वत्र निर्मल मन एव तत्त्वमिति परमार्थ , --> नाञ्चलो मुखवस्त्र न, न राका न चतुर्दशी । न श्राद्धादिप्रतिष्ठा वा तत्त्व किन्त्वमल मन ॥ <-- [यो सा २/२४] इति योगसारवचनमवलम्ब्य मद्यभेद-गच्छकलह-ममत्वादिपरिहारपरतना माव्य भक्तिविशेषाधाने एव च यतितव्यमित्युपदेश । 'विदन्ति' इत्यनेन स्वाऽस्वरस. प्रदर्शित , प्रथमपक्षे भक्तिविशेषाऽऽनायक-तया गुर्वादिप्रतिष्ठापितत्वस्य जीवविशेषान् प्रत्युपयोगित्वात् द्वितीयपक्षे च विधिप्रतिष्ठापितत्वैकान्तपक्षेऽभिनिवेश-कलहाद्युत्पत्ते , साम्प्रतीनजीतव्यवहारविलोपाच्चेति दिक् ॥८/४॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> यत् परमाया एव समापत्ते इद परम बीज, स्थाप्येनाऽपि तत्, इति हन्त एषा एव मुख्या विज्ञेया ॥८/५॥ इय कारिका भक्तिद्वात्रिंशिकावृत्त्यादौ [५/१८] समुद्धृता । स्वात्मनि मुख्यदेवतास्वरूपगत-वीतरागत्वादिगुणस्थापन = वीतरागत्वादिभि सर्वैरेव गुणै 'स एवाह' इति तदारोपण यस्मात् कारणात् प्रकृष्टाया एव मुख्यदेवतास्वरूपतुल्यतापत्ते = स्वात्मनि मुख्यदेवतास्वरूपेण तुल्यत्वस्य लाभस्य प्रकृष्ट कारण तदभेदधीद्वारेति गम्यते, यथोक्त बृहन्नारदोपनिषदि --> यदा त्वभेदविज्ञान जीवात्म-परमात्मनो । भवेत्तदा मुनिश्रेष्ठा. ! पाशच्छेदो भविष्यति ॥

હકીકત આ રીતે હોવાથી જે લોકો એમ કહે છે કે --> 'મારા બા-બાપુજી વગેરેએ આ પ્રતિમાની પ્રતિષ્ઠા કરાવેલ છે' આ બુદ્ધિ સર્વથા = તદ્દન નિરુપયોગી છે <-- તેઓનો આશય તેઓ જ જાણે અને જે લોકો 'વિધિથી પ્રતિષ્ઠિત થયેલ હોય તેવી પ્રતિમાનુ પૂજન જ ફળદાયી બને' એવો આગ્રહ રાખે છે તેઓનો આશય પણ તેઓ જ જાણે અતિવિસ્તાર કરવાથી સર્યું (આવુ કહેવાની પાછળ શ્રીમદ્જીનો આશય એ છે કે 'મારા બા-બાપુજીએ આ પ્રતિમાની પ્રતિષ્ઠા કરાવેલ છે' આવી બુદ્ધિથી પૂજા કરવામા મમતા, ઝઘડા વગેરે ન થતા હોય અને વિશેષ પ્રકારે પ્રભુભક્તિ પ્રગટે તો 'ગુરુપ્રતિષ્ઠાપિતત્વપક્ષ તદ્દન અનુપયોગી છે' એવુ કહેવાનુ દુ સાહસ ન કરાય તેમ જ 'વિધિપ્રતિષ્ઠાપિત પ્રતિમાને પૂજવાથી જ ફળ મળે' એવો આગ્રહ સેવવો પણ વ્યાજબી ન કહેવાય કારણ કે પૂર્વકાળમા રાજા, પ્રધાન, મત્રી, સેનાપતિ, નગરશેઠ વગેરેએ જિનપૂજા કર્યા બાદ જ ભોજન-પાણી કરવાનો નિયમ કર્યો હોય અને જગલ વગેરેમા અનેક દિવસો સુધી રહેવુ પડે, પ્રવાસ કરવો પડે તો જગલ વગેરેમા માટી, રેતી વગેરેની જિનપ્રતિમા બનાવી તેની નવકારથી સ્થાપના કરીને તેઓ પૂજા કરતા હતા-તેવી વાતો પ્રાચીન ગ્રથોમા આવે જ છે નર્મદાસુદરી, ભુવનસુદરી, દમયતી વગેરેના પ્રસગોમા આ વાત પ્રસિદ્ધ જ છે ) [૮/૪]

હવે (મૂળ ગ્રથની સાથે) પ્રસ્તુત વિષય કહેવાય છે --> 'પોતાના આત્મામા જ પ્રતિષ્ઠા એ મુખ્ય પ્રતિષ્ઠા કેમ કહેવાય છે ? અન્યત્ર સ્થાપના કેમ મુખ્ય નથી કહેવાતી ?' <-- આ શકાના સમાધાનમા મૂલકારશ્રી કહે છે કે —

<u>ગાથાર્થ</u> .- જે કારણે પરમ સમરસપ્રાપ્તિનુ આ [= સ્વાત્મસ્થાપના] પરમ કારણ છે સ્થાપ્યની સાથે પણ તે સમાપત્તિ બીજ છે તે કારણે આ [સ્વાત્મપ્રતિષ્ઠા] જ મુખ્ય જાણવી [૮/૫]

<u>ટીકાર્થ</u> ·- પોતાના આત્મામા મુખ્ય દેવતાના સ્વરૂપમા રહેલા વીતરાગત્વાદિ ગુણોનુ સ્થાપન કરવુ તે પ્રકૃષ્ટ એવી જ મુખ્યદેવતા-સ્વરૂપની તુલ્યતાની પ્રાપ્તિનુ પ્રકૃષ્ટ કારણ છે અહીં સબધ એવો અભિમત છે કે ઉપચારથી બહાર પ્રતિમામા વીતરાગની સ્થાપનાની સાથે મુખ્ય (અભ્યતર) વીતરાગભાવનુ સ્થાપન = આરોપણ આત્મામા કરવાનુ છે અને તે જ ઉપરોક્ત સમરસાપત્તિનુ કારણ

१ 'इति' पद मुद्रितप्रतौ नास्ति ।

सह वहिः उपचारद्वारा तत् = भावस्थापन उक्तसमापत्तिवीजमिति योग । इति कृत्वा **मुख्या** = निरुपचरिता हन्त प्रत्यवधारणे **एषैव** = निजभावप्रतिष्ठैव **विज्ञेया,** नान्या ॥८/५॥

ननु मुक्त्यादिव्यवस्थितस्यैव प्रतिष्ठा किं नेष्यते ? इत्याशङ्कयाऽऽह –> 'मुक्त्यादावि'त्यादि ।

**मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न देवतायास्तु । स्थाप्ये न च मुख्येयं तदधिष्ठानाद्यभावेन ॥८/६॥**

**मुक्त्यादौ** स्थाने **तत्त्वेन** = परमार्थेन **प्रतिष्ठिताया देवतायास्तु न** = नैव स्वजीवे प्रतिष्ठा, विप्रकर्षात्, किन्तु तद्भावस्यैव **स्थाप्ये** बिम्बे । **न च** = नैव [1]**मुख्या** मुख्यदेवताविषया **इय** = प्रतिष्ठा, तया मुख्यदेवतया [2]अधिष्ठानादेरभावेन ।

**कल्याणकन्दली**

<– [बृह.नार.३१/६१] इति ।

**विम्बेनाऽपि सह वहिः उपचारद्वारा तत्** = एवविध **भावस्थापन उक्तसमापत्तिवीज** = वीतरागस्वरूपतुल्यताकारण सम्भवति इति **योगः** । तथाहि भगवद्बिम्बे हृदि धृते भगवद्रूपानुस्मरण तद्ध्याने च क्षीणकिल्बिपत्वात् नैश्चयिकद्रव्यगुण-पर्यायसाम्यपर्यालोचनाया 'त्वमह अह त्वमि'ति अभेदज्ञान समापत्तिरूप भवति । तत्र चान्तर्जल्पे युष्मदस्मत्पदे उल्लिख्येते । ततश्च भिन्नत्वेन ज्ञातयोरभेदस्याऽयोग्यत्वज्ञाने युष्मदस्मत्पदयोः वेदान्तिरीत्याऽखण्डब्रह्मणि जहदजहल्लक्षणायामन्तर्जल्पज निर्विकल्प-कसाक्षात्काररूप ज्ञानमाविर्भवति [गा.९९ पृ.५३९] इत्यधिक **प्रतिमाशतकवृत्तितो**ऽवसेयम् ।

इत्थञ्च विम्बद्वारा समापत्तावपि स्वात्मनि वीतरागत्वादिगुणस्थापनमावश्यकमिति कृत्वा **निरुपचरिता निजभावप्रतिष्ठैव विज्ञेया, नान्या ॥८/५॥**

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> तत्त्वेन मुक्तौ प्रतिष्ठिताया देवताया. न तु । इय स्थाप्ये न च मुख्या तदधिष्ठानाद्यभावेन ॥८/६॥ इय कारिका **भक्तिद्वात्रिंशिकावृत्तौ** [५/१९] समुद्धृता । एतदनुसारेण **भक्तिद्वात्रिंशिकाया** –> प्रतिष्ठितत्व-ज्ञानोत्थसमापत्त्या परेष्वपि । फल स्याद् वीतरागाणा सन्निधान त्वसम्भवि ॥१९॥ <– इत्युक्तम् । मुक्त्यादाविति आदिपदेन महाविदेहादौ ।

विप्रकर्षात् = अतिदूरत्वात् सिद्धशिलाभिधानस्य मुक्तिक्षेत्रस्य वीतरागदेवाधिष्ठितस्य मध्यलोकात् सप्तरज्जुप्रमितक्षेत्रगम-नानन्तरमूर्ध्वमुपलब्धे. । वस्तुतो लोकान्तस्यैव मुख्यदेवताधिष्ठितत्वम् । सदेहसीमन्धरस्वाम्याद्यधिष्ठितस्य महाविदेहादे. भरतक्षेत्रतो विप्रकृष्टत्व सुज्ञेयमेव **लघुसङ्ग्रहण्या**द्यभ्यासवताम् । तद्भावस्य = वीतरागतादे विम्बे स्थापन प्रतिष्ठा भवति । मुख्यदेवताविषया इय प्रतिष्ठा नेव मुख्या = निरुपचरिता, मुख्यदेवतया अधिष्ठानादेरभावेन, हेत्वर्थे तृतीया, तथोक्त **सिद्धहेमशब्दानुशासने** –> हेतु-कर्तृ-करणेत्थम्भूतलक्षणे तृतीया <– [२/२/४४] ।

છે આવુ હોવાના કારણે નિજાત્મામા નિજભાવની પ્રતિષ્ઠા એ જ મુખ્ય = નિરુપચરિત જાણવી, અન્ય કોઈ નહિ [૮/૫]

**વિશેષાર્થ** :- પોતાના આત્મામા વીતરાગતા વગેરે ગુણોનુ સ્થાપન ભગવત્તુલ્યતાનુ પ્રધાન કારણ હોવાથી તથાવિધ સ્થાપન એ જ મુખ્ય પ્રતિષ્ઠા છે પ્રતિમામા બાહ્યથી ઔપચારિક રીતે વીતરાગપણાનુ સ્થાપન અને મુખ્યતયા આત્મામા વીતરાગતાનુ સ્થાપન એ જ સમાપત્તિનુ = ભગવત્તુલ્યતાપ્રાપ્તિનુ કારણ છે માટે પોતાના આત્મામા વીતરાગતાનુ સ્થાપન એ જ તાત્ત્વિક = મુખ્ય પ્રતિષ્ઠા છે, નહિ કે અન્ય સ્થાપના. [૮/૫]

અહીં એવી શકા થાય કે –> મોક્ષમા રહેલા વીતરાગની જ પ્રતિષ્ઠા કેમ ઈચ્છાતી નથી ? [અર્થાત્ વીતરાગનુ = મુક્તાત્માનુ જ પ્રતિમામા સનિધાન કેમ નથી માનતા ? એવુ માનવામા આવે તો વીતરાગપણાની સ્થાપના કરવાની જરૂર ન રહે <– તો તેનુ નિરાકરણ કરવા મૂલકારશ્રી જણાવે છે કે –

**ગાથાર્થ** :- પરમાર્થથી મુક્તિ વગેરેમા પ્રતિષ્ઠિત દેવતાની [પોતાના આત્મામા પ્રતિષ્ઠા] ન જ થાય પ્રતિમામા પ્રતિષ્ઠા મુખ્ય નથી જ, કારણ કે તેમા મુક્તાત્માનુ અધિષ્ઠાન વગેરે નથી હોતુ [૮/૬]

## ❀ મુક્ત વીતરાગનું પ્રતિમામાં આગમન ન થાય ❀

**ટીકાર્થ** :- મુક્તિ = સિદ્ધશિલા વગેરે સ્થાનમા પરમાર્થથી પ્રતિષ્ઠિત થયેલ વીતરાગ દેવતાની તો પોતાના = આપણા આત્મામા પ્રતિષ્ઠા ન જ થઈ શકે, કારણ કે તે વીતરાગ દેવતાઓ અહીંથી ખૂબ [= ૭ રાજલોક] દૂર છે. માટે તેના ભાવની = વીતરાગતાદિની જ પ્રતિમામા પ્રતિષ્ઠા શક્ય છે બિબમા = પ્રતિમામા મુખ્યદેવતાવિષયક સ્થાપના એ મુખ્ય નથી જ, કારણ કે મુખ્યદેવતા દ્વારા પ્રતિમામા આશ્રયરૂપે સન્નિધાન થતુ નથી (અર્થાત્ પ્રતિમા એ મુખ્યદેવતાથી = વીતરાગથી અધિષ્ઠિત થતી નથી ) મૂળ શ્લોકમા

१ मुद्रितप्रतौ 'मुख्या' पद नास्ति । २ मुद्रितप्रतौ 'अधिष्ठानादेरभावेन' इति नास्ति ।

अधिष्ठान = आश्रयण, आदिनाऽहङ्कार-ममकारवासनारूपसन्निधानग्रह । तच्चाधिष्ठानादि अवीतरागसंसारिदेवताया कदाचित् स्यात् । वीतरागदेवतायास्तु सर्वथानुपपन्नमिति भाव ॥८/६॥

**कल्याणकन्दली**

अधिष्ठान = आश्रयण समीपागमनरूप कायिकम् ।

वीतरागदेवतायास्तु अधिष्ठानादि = अधिष्ठान-सन्निधानादि सर्वथाऽनुपपन्नम् । अहङ्कारममकारात्मकस्वत्वस्य तन्निरूपितस्य कुतोऽपि क्वचिदप्याधानाऽसम्भवात् । न च मास्तु वीतरागप्रतिष्ठा, सरागदेवताया एव साऽस्त्वित्याशङ्कनीयम्, योगिनामुपासनीयाया वीतरागदेवताया एव प्रसिद्धे. सरागेश्वरदेवतायाश्च रागविलसितैर्भाव्यु-पगन्तुमर्हत्वात्, संसारिषु संसारगामिनामितरेषु चेतरेषा भक्ति. स्वरससिद्धेति योगतन्त्रप्रसिद्धम् । यथोक्त मूलकारैरेव योगदृष्टिसमुच्चये —> संसारिषु हि देवेषु भक्तिस्तत्कायगामिनाम् । तदतीते पुनस्तत्त्वे तदतीतार्थयायिनाम् ॥११९॥ <— इति । रागादीना दोषत्वेन परमदेवे तदभावस्य न्याय्यत्वात्, तदुक्त कूर्मपुराणे —> राग - द्वेषादयो दोषा. सर्वे भ्रान्तिनिबन्धना <— [३/२०] इति । महाभारतेऽपि —> नास्ति रागसम दु ख <— [शान्तिपर्व- १७७/३७] इत्युक्तम् । अष्टकप्रकरणेऽपि —> रागो द्वेषश्च मोहश्च भावमालिन्यहेतव <— [२२/२] इत्युक्तम् । तदुक्त श्रावकप्रज्ञप्तौ अपि —> रागो दोसो मोहो दोसाभिस्संगमाइलिगत्ति । अइरागाइकिलेसरूवा हेऊ वि य संकिलेसस्स <— ॥३९३॥ तदुक्त योगशतकेऽपि —> रागो दोसो मोहो ए एत्थाऽऽयदूसणा दोसा । कम्मोदयसंजणिया विण्णेया आयपरिणामा <— ॥५३॥ इति । —> नत्थि रागसमो अग्गि नत्थि दोससमो गहो । नत्थि मोहसम जाल नत्थि तण्हासमा नदी ॥ <— [१८/१७] इति धम्मपदोक्तिरप्यत्रानुस्मर्तव्या । रागादीनामाश्रवत्वेनापि प्रसिद्धि । तदुक्त समयसारे —> रागो दोसो मोहो य आसवा <— [१७७] । सारसमुच्चयेऽपि —> रागाद्यो महादोषा खलास्ते गदिता बुधै <— [२७४] इत्युक्तम् । न च वीतरागत्वेन देवत्वमेव न स्यात्, विरोधादिति शङ्कनीयम्, रागादिरहितत्वेऽपचिन्त्यचिन्तामणिकल्पत्वेन स्वेष्टफलदायकतयाऽपि तस्य तत्त्वतो देवत्वात् । यथोक्त श्रावकप्रज्ञप्तौ श्रीउमास्वातिवाचकः —> उवगाराभावम्मि वि पुज्जाण पूयगस्स उवयारो । मताइसरण-जलणाइसेवणे जह तहेहपि ॥ <— [३४८]

वस्तुतो दोषराहित्यमेव परमदेवत्वप्रयोजक न त्विष्टफलदायकत्वम् । इदमेवाभिप्रेत्य पुष्पमालाया —> देवेसु वीयराओ, चारित्ती उत्तमो सुपत्तेसु । दाणाणमभयदाण वयाण बम्भव्वय पवर <— ॥१८४॥ इत्युक्तमिति । तदुक्त योगसारे —> स्वरूप वीतरागत्व पुनस्तस्य न रागिता । रागो यद्यत्र तत्रान्ये दोषा द्वेषादयो ध्रुवम् ॥ तैर्दोषैर्दूषितो देव कथ भवितुमर्हति ? इत्थ माध्यस्थ्यमास्थाय तत्त्वबुद्ध्याऽवधार्यताम् ॥ यद्वा रागादिभिर्दोषै सर्वसत्त्वक्लेशकारके । दूषितेन शुभेनाऽपि देवेनेव हि तेन किम् ॥ <— [१/३९-४०-४१] इति । अन्यत्रापि —> कामानुषक्तस्य रिपुप्रहारिणि प्रपञ्चिनोऽनुग्रहशापकारिणि । सामान्यपुवर्गसमानधर्मिणो महत्त्वक्लृप्ती सकलस्य तद्भवेत् ॥ <— [ ] इत्युक्तम् । तदुक्तमन्यत्रापि —> सकामा सरामा. समाना समोहा , सदम्भा सकोपा सपापा । यदि स्युश्च देवास्तदा को विशेषो नरै सार्द्धमेषा समानत्वभाजाम् ॥ <— इति । तदुक्त कार्त्तिकेयानुप्रेक्षायामपि —> दोससहिय पि देव जीवहिंसाइसंजुद धम्म । गंथासत्त च गुरु जो मण्णदि सो हु कुदिट्ठी ॥३१८॥ <— इति । —> सरागोऽपि हि देवश्चेत् गुरुरब्रह्मचार्यपि । कृपाहीनोऽपि धर्म स्यात् कष्ट नष्ट हहा जगत् ॥ <— [२/१४] इति योगशास्त्रे श्रीहेमचन्द्रसूरिभिरुक्तमपि भावनीयमत्र. रागादे कर्मबन्धकारणत्वात् । तदुक्त

'अधिष्ठानादि' पदमा जे आदिशब्द रहेलो छे तेनाथी अहंकार, ममकारनी वासनारूपी सन्निधान ग्राह्य छे (अर्थात् 'आ प्रतिमा ए ज हु छु' आवी देवने जे बुद्धि थाय ते अथवा तेनाथी उत्पन्न थयेल संस्कार ए अहंकारवासना कहेवाय तथा 'आ मारी प्रतिमा छे' आवी देवने जे बुद्धि थाय ते अथवा तेनाथी उत्पन्न थयेल संस्कार ए ममकारवासना कहेवाय आवी वासना ए देवनु सन्निधान कहेवाय ) अवीतराग अर्थात् सरागी एवा संसारी देवतानु प्रतिमामा उपरोक्त अधिष्ठान के सन्निधान क्यारेक थई जाय (ए शक्य छे अने तेना लीधे सांसारिक वांछित फळ आपवानी दृष्टिए प्रतिमामा पूज्यता आवे अने तेना लीधे प्रतिमापूजकने पूजाफळ मळे ते पण शक्य छे ) परतु वीतराग देवतानु तो प्रतिमामा अधिष्ठान के सन्निधान कोई पण रीते संगत नथी [८/६]

<u>विशेषार्थ</u> - आ श्लोकमा बे वातो विशेषरूपे ध्यान देवा योग्य छे [१] मुख्य देवतास्वरूप वीतराग सिद्ध भगवतो वस्तुत सिद्धशिला उपर बिराजमान छे तेथी प्रतिष्ठाविधि द्वारा तेओ नीचे प्रतिष्ठाकारकमा के प्रतिमामा आवे-उतरे आ वात कोई पण रीते संभवी शकती नथी माटे स्वात्मामा वीतरागनु नहि पण वीतरागभावनु = वीतरागपणानु आरोपण = स्थापन = प्रतिष्ठा करवामा आवे छे स्वात्मामा के प्रतिमामा वीतरागनी स्थापना करवी/मानवी ए मिथ्या = काल्पनिक छे [२] प्रतिमामा जे मुख्य देवतानी प्रतिष्ठा करवामा आवे छे ते पण मुख्य प्रतिष्ठा तो नथी ज, कारण के स्थाप्यमान देवनुं त्या अधिष्ठान नथी थतु प्रतिमामा स्थाप्यमान देवता बे प्रकारना होय [i] सराग देवता [ii] वीतराग देवता जो सराग देवतानी प्रतिष्ठा प्रतिमामा थाय तो तेमनु कायिक आगमन स्वरूप कायिक अधिष्ठान थाय ज- एवो कोई नियम नथी जैनेतर लोको एवु माने छे के—>

अत्रैवाऽभ्युच्चयमाह --> 'इज्यादे'रित्यादि ।

**इज्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तदतत्त्वकल्पनैषा बालक्रीडासमा भवति ॥८/७॥**

इज्या = पूजा तदादे आदिना सत्काराऽऽभरण-स्नात्रादिग्रह । न च = नैव, **तस्या** = प्रस्तुतदेवताया **उपकार** सुखानुभवसम्पादनलक्षण **कश्चिदत्र मुख्य** = निरुपचरित इति उपदर्शनीय । तत् = तस्मात् **अतत्त्वकल्पना** = अपरमार्थकल्पना **एषा** मुक्तिस्थदेवतोपकारविषया बालक्रीडासमा भवति । यथा बालो नानाविधै क्रीडनोपायै क्रीडासुखमनुभवति तथेज्यादिभिर्देवताविशेषोऽपि परितोषमिति बालक्रीडातुल्यत्वमुपकारपक्षे दोष । ये त्वात्म-श्रेयोऽर्थं पूजादि कुर्व्वते न तेषामय दोष इति भाव ॥८/७॥

## कल्याणकन्दली

व्यवहारसूत्रभाष्ये --> रागद्दोसाणुगया जीवा कम्मस्स बंधगा होंति <-- [२/१३६] । सिद्धसेनसूरिभिरपि द्वात्रिंशिकाप्रकरणे --> न यस्यास्ति वाछा स एक परात्मा <-- [२१/१६] इत्युक्तम् । कथारत्नकोशेऽपि --> रागो दोसो मोहो ण्ण कालुस्सकारिणो गरुया <-- [पृ १५०/६] इत्युक्तम् । --> रागो द्वेषश्च ससारकारण सद्भिरिष्यते । तयोर्विवर्जितो ज्ञाता मुक्त. स परमेश्वर. ॥ <-- (२१/१६) इति अर्हद्गीताया मेघविजयगणी प्राह । रत्नकरण्डकश्रावकाचारे --> न राग-द्वेष-मोहाश्च यस्याऽऽप्तः स कथ्यते <-- [६] इति समन्तभद्रस्वाम्युक्तमप्यत्र ध्यातव्यम् । अध्यात्मबिन्दूक्त --> रागो द्वेषो मोह इत्येवमाद्या भावा नून शुद्धचिद्दूपका. स्युः [१/२३] <-- इत्यप्यत्र स्मर्तव्यम् । प्रवचनसारेऽपि --> रत्तो बंधदि कम्म <-- [२/८७] इत्युक्तम् । वीतरागसपर्याया. सफलत्वन्तूक्त वक्ष्यते चाऽग्रे [९/१५] इति धैर्यमवलम्ब्यताम् ॥८/६॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् --> इज्यादे. तस्या न च कश्चिदत्र मुख्य उपकार इति । तत् अतत्त्वकल्पना एषा बालक्रीडासमा भवति ॥८/७॥ इय कारिका भक्तिद्वात्रिंशिकावृत्त्यादौ [द्वा द्वा.५/१९] समुद्धृता ।

अतत्त्वकल्पना 'पूजा-सत्काराऽऽभरण-स्नात्र-वन्दनादिना मुक्तिस्थो देव तुष्यति' इति मुक्तिस्थदेवतोपकारविषया बालक्रीडासमा भवति । 'प्रियते भगवान् हरि·' [ ] इत्यस्याऽप्यसत्कल्पनात्वमाविष्कर्तुमाह- यथा बाल इत्यादि । उपकार-पक्षे = देवे प्रीत्यादिलक्षण उपकार इज्यादिना भवतीति मते दोषः । इत्थश्च 'तुष्यामि न तथा पुष्पैर्यथा तवोपवासतः' । इति शिवरात्रिव्रतकथावचनमपि चिन्तनीयम्, सेवकोपवासतो यदीश्वरः सुखी स्यात्तदा तुल्यन्यायेन सेवकानुपवासादिना दु.खी स्यादितीश्वरस्य ससारित्वमेवाऽऽपद्येत । एवमेव --> तुष्टैर्मोचयत. सर्वानतुष्टैर्बध्नत. पुनः । कारागारमिद विश्व यस्य नौमि तमीश्वरम् ॥ <-- [ ] इति उदयनाचार्यस्य वचनमपि चिन्तनीयम् ॥८/७॥

प्रतिष्ठाविधि द्वारा प्रतिमामा देव आवे छे अथवा सराग देवताने 'आ प्रतिमा ए ज हु छु' एवी अहकारबुद्धि अथवा तो 'आ मारी प्रतिमा छे' एवी ममकारबुद्धि प्रतिष्ठाविधि द्वारा उत्पन्न थवाना लीधे प्रतिष्ठित प्रतिमा पूज्य बने छे अने तेना लीधे प्रतिमापूजकने पूजानु फळ मळे छे <-- आ विशे टीकाकार श्रीमद्‌जीनु कथन एवु छे के सराग देवतानु आवु सन्निधान कदाच सभवी शके पण वीतराग देवतानु आवु सनिधान तो कोई पण रीते शक्य नथी, केम के 'प्रतिमा ए ज हु छु' एवी भ्रमात्मक अहकारबुद्धि के तज्जन्य वासना अथवा 'आ मारी प्रतिमा छे' एवी ममत्वबुद्धि सर्वज्ञ वीतरागने थई ज न शके आथी प्रतिमामा थती मुख्य देवतानी प्रतिष्ठाने मुख्य प्रतिष्ठा न कही शकाय माटे निजभावप्रतिष्ठाने ज मुख्य मानवी उचित छे [८/६]

मूलकारश्री प्रस्तुत पदार्थनु ज अक्षरश समर्थन करे छे

गाथार्थ :- पूजा वगेरेथी मुख्य देवताने कोई मुख्य उपकार प्रस्तुतमा थतो नथी माटे आ (मुक्त देवताने उपकार थवानी) अतात्त्विक कल्पना बालक्रीडासमान थाय छे [८/७]

## ❀ पूजाथी वीतरागने कोई फायदो नथी ❀

टीकार्थ - पूजा, सत्कार, अलकार = आगी, स्नात्र वगेरेथी प्रस्तुत = सिद्धशिला आदि स्थानमा बिराजता वीतराग देवताने सुखानुभव थवा स्वरूप कोई मुख्य उपकार थतो नथी ज माटे सिद्धशिला उपर रहेला वीतराग देवताओने पूजाथी उपकार थाय छे- तेवी अपारमार्थिक कल्पना बालक्रीडासमान थाय छे जेम बाळक अनेक प्रकारना रमकडाओ [= क्रीडाना उपायो] द्वारा रमतना सुखने अनुभवे छे तेम पूजा वगेरे द्वारा देवताविशेष पण आनदने अनुभवे छे - आ प्रमाणे बालक्रीडातुल्यता [प्रतिष्ठित देवतामा आववी] ए उपकारपक्षमा दोष छे जेओ आत्माना कल्याण माटे [वीतरागनी] पूजा करे छे तेओने आ दोष नथी-एवो आशय छे [८/७]

विशेषार्थ - पूजा करवाथी जे देव खुश थाय तेनी पूजा करवी आवु मानवामा मुख्य दोष ए रहेलो छे के पूज्यमान देव बाळक जेवा साबित थाय छे जेम बाळक रमकडा-मीठाई वगेरेथी खुश थाय छे तेम देव पण पूजाना उपकरण द्वारा खुश थाय छे-आम मानवामा देवमा महत्ता-गभीरता वगेरेनो अभाव छतो थाय छे तेम ज तेनी पूजा करवामा मुख्य आशय भक्तिनो नहि पण भौतिक सुखनी सामग्रीनी प्राप्तिनो बने छे तथा जेम बाळक मनपसद रमकडा न मळवाथी नाखुश थाय

निजभावपक्ष एवोपपत्तिमाह —> 'भावे'त्यादि ।

**भावरसेन्द्रात्तु ततो महोदयात् जीवभावरूपस्य[1] । कालेन भवति परमाऽप्रतिबद्धा सिद्धकाञ्चनता ॥८/८॥**

भावो रसेन्द्र इव तस्मात् तु 'तत इति[2] मुख्यदेवतास्वरूपालम्बनात् **महोदयात्** पुण्यानुबन्धिपुण्य-सम्पल्लाभेन **जीवभावरूपस्य** = जीवात्मस्वभावताम्रस्य **कालेन** कियताऽपि **भवति परमा** = प्रकर्षवर्त्तिनी **अप्रतिबद्धा** = अनुपहता **सिद्धकाञ्चनता** = सिद्धभावस्वर्णता ॥८/८॥ अथ केवलभावव्यापार । तत्र शास्त्रादिव्यापारमाह —> '**वचने**'त्यादि ।

**वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैषा । इतिकर्तव्यतयाऽतः सफलेषाऽप्यत्र भावविधौ ॥८/९॥**

**कल्याणकन्दली**

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> ततो भावरसेन्द्रात्तु महोदयात् जीवभावरूपस्य कालेन परमा अप्रतिबद्धा सिद्धकाञ्चनता भवति ॥८/८॥ इयं कारिका **जीवानुशासन-भक्तिद्वात्रिंशिकावृत्त्यादौ** [द्वा द्वा ५/१८ जीवा ४९] समुद्धृता वर्तते ।

यथा रसेन्द्रानुवेधात् ताम्रस्य स्वर्णता भवति तथा प्रतिष्ठाभावानुवेधात् जीवस्य सिद्धता भवतीति दृष्टान्त-दार्ष्टान्तिकयो साम्यमवलम्ब्य प्रकृते उपमाप्रवृत्ति । यथोक्तं **पूजाविंशिकायामपि** —> अक्खयभावे भावो मिलिओ तब्भावसाहगो नियमा । न हु तत्र रसविद्ध पुणोऽवि तवत्तणमुवेइ ॥ <— [८/१८] इति । इदमेवाभिप्रेत्यान्यत्र —> य कारयेत्तीर्थकृत प्रतिष्ठा प्राप्स्यत्यसौ तीर्थकृत प्रतिष्ठाम् । यदुप्यते तद्विधमेव बीजमवाप्यते तत्तदवस्थमेव ॥ <— [ ] इत्युक्तम् । ततश्च रसेन्द्रानुवेधात् द्रुत ताम्रस्य स्वर्णभावो दृष्ट प्रतिष्ठाभावानुवेधात्तु कियताऽपि कालेनेति विशेषे सत्यपि न क्षति । यद्यपि आगमतो भावनिक्षेपमधिकृत्य प्रतिष्ठाभावसमकालमेवाऽऽत्मन सिद्धभाव सम्मत तथापि नोआगमतो भावनिक्षेपमाश्रित्य सामान्यत तदनन्तर कियताऽपि कालेन गच्छता जीवस्य सिद्धता भवतीति सूचनाय 'परमा' इत्युक्तम् । ताम्रस्य रसानुवेधात् स्वर्णीभवनानन्तरमसङ्ख्येयकालचक्रगमने द्रव्यान्तरभावोऽवश्यम्भावी, पुद्गलस्थितेरुत्कृष्टतोऽसङ्ख्येयकालस्यैव व्याख्याप्रज्ञप्तौ व्यावर्णितत्वात्, जीवस्य सिद्धभावस्तु साद्यनन्तकालीन इत्यपि विशेषोऽस्तीति सूचनाय अप्रतिबद्धा = अनुपहता इत्युक्तमिति ध्येयम् ॥८/८॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् —> अत्र भावविधौ यत वचनानलक्रियात कर्मेन्धनदाहतश्च एषा । अत एषा अपि इतिकर्तव्यतया सफला ॥८/९॥ इयं कारिका **जीवानुशासन-भक्तिद्वात्रिंशिकावृत्त्यादौ** [५/१८ जीवा ४९] समुद्धृता । चतुर्थ-पञ्चमाऽष्टम-

છે તેમ પૂજા ન થવાથી દેવ નાખુશ થાય છે-આવુ પણ માનવુ પડે મતલબ કે દેવની ખુશી-નાખુશી ભક્તને/પૂજકને આધીન છે- આવુ ફલિત થાય જ્યારે વીતરાગની પૂજા કરવામા આવા પ્રકારના દોષ આવતા નથી વીતરાગનુ સુખ-આનદ પરાધીન નથી તેથી જ તેની પૂજામા બાલક્રીડાતુલ્યતા ન સભવી શકે તેમ જ પૂજા દ્વારા વીતરાગ પ્રસન્ન ન થાય તેવુ જાણવા છતા તેની પૂજા કરવામા મુખ્ય આશય આત્મકલ્યાણનો જ છે, નહિ કે ભૌતિક સુખપ્રાપ્તિનો માટે રાગીની નહિ પણ વીતરાગની પૂજા ઉચિત છે [૮/૭]

નિજભાવની પ્રતિષ્ઠા એ જ મુખ્ય પ્રતિષ્ઠા છે - આ પક્ષના જ સમર્થનને મૂલકારશ્રી જણાવે છે

**ગાથાર્થ** .- તે ભાવરસેન્દ્રથી મહોદય થવાથી જીવરૂપી તાબામા કાલાતરે પ્રકૃષ્ટ અપ્રતિબન્ધ એવી સિદ્ધસ્વરૂપ સુવર્ણતા થાય છે [૮/૮]

**ટીકાર્થ** - મુખ્યદેવતાનુ સ્વરૂપ = વીતરાગતા જેનુ આલબન = વિષય છે એ ભાવ રસેન્દ્ર જેવો છે તેનાથી પુણ્યાનુબધી પુણ્ય સ્વરૂપ સપત્તિનો લાભ થવાથી જીવના આત્મસ્વભાવરૂપી તાબામા કેટલાક કાળે પ્રકૃષ્ટ અને ક્યારેય પણ નાશ ન પામનારી સિદ્ધત્વરૂપી સુવર્ણતા પ્રાપ્ત થાય છે [૮/૮]

## ❀ મુખ્યપ્રતિષ્ઠા એ રસેન્દ્ર છે. ❀

**વિશેષાર્થ** .- રસેન્દ્રના વેધથી તાબુ જેમ સોનુ બને છે તેમ વીતરાગતાની પોતાનામા સ્થાપના કરવાથી જીવ કાલાતરે સિદ્ધ = વીતરાગ બને છે માટે અહીં ઉપમા આપી શકાય કે મુખ્ય પ્રતિષ્ઠા = રસેન્દ્ર, જીવ = તાબુ, સિદ્ધ = સોનુ છતા બન્નેમા વિશેષતા એટલી રહેલી છે કે પ્રધાન પ્રતિષ્ઠા દ્વારા જીવમા જે વીતરાગતા આવે છે તે પ્રકૃષ્ટ હોય છે તેમ જ ક્યારેય પણ નાશ ન પામે તેવી હોય છે વીતરાગ બન્યા પછી જીવ ક્યારેય રાગી બનતો નથી જ્યારે રસેન્દ્ર દ્વારા તાબુ એ સોનુ બને તો પણ તે કાલાતરમા અન્ય ધાતુમા પરિણમી શકે છે, કારણ કે કોઈ પણ પુદ્ગલની-સ્કધની સ્થિતિ અસખ્ય કાળચક્ર કરતા વધુ નથી [૮/૮]

વીતરાગભાવના આરોપણથી જીવ એ શિવ બને છે આ કેવળ ભાવવ્યાપાર જાણવો અહીં શાસ્ત્રાદિવ્યાપારને મૂલકારશ્રી જણાવે છે

१ मुद्रितप्रतौ '- जीवता म्रस्यरूपस्य' इत्यशुद्ध पाठ । अन्यत्र 'जीवताम्ररूपस्ये'ति पाठ । २ मुद्रितप्रतौ - 'तत इति' इति नास्ति ।

वचन = आगम एव अनल = अग्नि, तस्य क्रिया नियतविधिव्यापाररूपा तस्या सकाशात् **कर्मेन्धनदाहतो यतश्च एषा** = सिद्धकाञ्चनता भवति, न तु केवलभावरसेन्द्रादेव । **अत** = अस्माद्धेतो **एषा** बिम्बगता **प्रतिष्ठा अपि अत्र प्रक्रमे भावविधौ** = भावसहकारिताया वचनक्रियारूपत्वेन इन्धनप्रक्षेपकल्पशुभव्यापाररूपया **इति कर्तव्यतया** सहिता **सफला** ॥८/९॥

इय प्रतिष्ठा कथ ज्ञेया ? इत्याह –> '**एषा चे**'त्यादि ।

**एषा च लोकसिद्धा शिष्टजनापेक्षयाऽखिलैवेति । प्रायो नानात्व पुनरिह मन्त्रगत बुधाः प्राहुः ॥८/१०॥**

**एषा च** प्रतिष्ठा **अखिलैव** = लोक-लोकोत्तरगता सर्वैव **शिष्टजनापेक्षया** = विशिष्टभव्यापेक्षया **लोकसिद्धा**

कल्याणकन्दली

नवमकारिकानुसारेण **प्रतिमाशतके** –> नन्वेव प्रतिमैकता प्रवदतामिष्टा प्रतिष्ठाऽपि का, सत्य सात्मगतैव देवविषयोद्देशेन मुख्योदिता । यस्याः सा वचनानलेन परमा स्थाप्ये समापत्तितो दग्धे कर्ममले भवेत्कनकता जीवायसः सिद्धता ॥७५॥ <– इत्युक्तम् ।

**नियतविधिव्यापाररूपा** = प्रतीनियतविधि-निषेधव्यापारात्मिका । ततश्च भावरसेन्द्रानुवेधात् निरुक्तवचनानलक्रियातः कर्मेन्धनदाहतश्च **सिद्धकाञ्चनता भवतीति** भावः । पार्थक्येण त्रयाणा सिद्धस्वर्णत्वे हेतुतेति **एके** । न हि केवलाद् रसेन्द्रात्, अनलक्रियामात्रात्, इन्धनदाहादेव वा ताम्रस्याऽपि काञ्चनता सम्मता धातुवादनिपुणानाम् । भावरसेन्द्र-कर्मेन्धनदाहयोर्द्वयोरेव सम्भूय सिद्धकाञ्चनत्वे हेतुता, वचनानलक्रियायास्तु कर्मेन्धनदाह एव कारणतेत्यन्ये । वचनानलक्रिया-कर्मेन्धनदाहयो. तात्त्विक-भावरसेन्द्रानुवेधे एव हेतुता, सिद्धकनकत्वे तु भावरसेन्द्रानुवेधस्यैव हेतुतेत्यपरे । भगवदनुमतविचित्रनयानुगामिनः त्रयोऽप्येते सदादेशा इत्युत्प्रेक्षामहे ॥८/९॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> एषा चाखिलैव शिष्टजनापेक्षया लोकसिद्धा इति । नानात्व पुनः इह प्रायो मन्त्रगत बुधाः प्राहुः ॥८/१०॥

**शिष्टजनापेक्षया = विशिष्टभव्यापेक्षया लोकसिद्धेति** । इदमत्राऽऽकूतम् –> शिष्टपुरुषाणा हि प्रवृत्तिः शास्त्रानुसारिणी भवति, तथाविधसत्क्षयोपशमबलात् । ततश्च शिष्टाचाराविपर्ययेणैव प्रायेण लोकोत्तरानुष्ठानविधि· भवति । ततश्चात्र विशिष्टशिष्टा-चारानुसरणे मिथ्यात्वमनाशङ्कनीयमेव, परतन्त्रगतसद्वचनस्यैव सच्छिष्टाचारस्य जिनागममूलकत्वेन सामान्यतः तदपलापस्य जिनागमापलापपर्यवसायित्वात् । **एतेन** –> शास्त्रप्रधाना लोकवृत्ति । शास्त्राभावे शिष्टाचारमनुगच्छेत् । नाऽऽचरितात् शास्त्र

<u>ગાથાર્થ</u> ·- અહીં ભાવસહકારિતાને વિશે આગમરૂપી અગ્નિની ક્રિયાથી કર્મરૂપી ઈંધન બળવાથી સિદ્ધસુવર્ણતા થાય છે આ કારણે ઈતિકર્તવ્યતાસહિત બાહ્ય પ્રતિષ્ઠા પણ સફળ થાય છે [૮/૯]

## ❀ શાસ્ત્રપ્રવૃત્તિ પણ નિશ્ચયથી અપેક્ષિત છે ❀

<u>ટીકાર્થ</u> - પ્રસ્તુતમા શાસ્ત્ર એ જ અગ્નિ છે તેની નિયત વિધિની પ્રવૃત્તિરૂપી ક્રિયાથી કર્મરૂપી ઈંધન બળવાથી જીવ સિદ્ધરૂપી સુવર્ણ બને છે, નહિ કે કેવળ ભાવરૂપી રસેન્દ્રથી જ આ કારણે પ્રતિમાગત પ્રતિષ્ઠા પણ અહીં પ્રસ્તુત ભાવસહકારિતાને વિશે વચનક્રિયારૂપ હોવાથી ઈંધનપ્રક્ષેપતુલ્ય શુભવ્યાપારાત્મક ઈતિકર્તવ્યતાસહિત સફળ જાણવી [૮/૯]

<u>વિશેષાર્થ</u> - અહીં એવી શકા સ્વાભાવિક રીતે થઈ શકે છે કે –> કેવળ ભાવારોપણથી જ જીવ એ શિવ બને છે, સિદ્ધસ્વરૂપ સુવર્ણ બને છે તો પછી બાહ્ય પ્રતિમામા પ્રતિષ્ઠા કરવાની શી જરૂર ? <– પરતુ આનુ સમાધાન બતાવવા શ્રીમદ્જી કહે છે કે રથ જેમ બે ચક્રથી ચાલે તેમ જીવ પણ નિશ્ચય અને વ્યવહાર દ્વારા મોક્ષમાર્ગે આગળ વધે છે ભાવપ્રતિષ્ઠા એ નિશ્ચય છે તો પ્રતિમામા પ્રતિષ્ઠા = પરમાત્મભાવસ્થાપન એ વ્યવહાર છે પ્રતિષ્ઠા એ આગમવિહિતક્રિયાસ્વરૂપ છે આગમ એ અગ્નિ છે અગ્નિની ભડકારૂપી ક્રિયાથી ધાતુનો કચરો બળે છે તેમ આગમની વિશિષ્ટ પ્રકારની ક્રિયાથી = બાહ્ય પ્રતિષ્ઠાવિધિથી જીવના કર્મ બળે છે કેવલ રસેન્દ્રથી તાબુ સોનુ નથી બનતુ પણ અગ્નિક્રિયા દ્વારા ધાતુમલ બળે પછી જ તાબુ સુવર્ણ બને છે માટે રસેન્દ્રની પ્રાપ્તિ પછી પણ અગ્નિક્રિયાની અપેક્ષા રહે જ છે તેમ આગમોક્ત ક્રિયા દ્વારા જીવ જો કર્મને ખપાવે નહિ તો કેવળ ભાવપ્રતિષ્ઠાથી તે સિદ્ધ બનતો નથી માટે જીવને સિદ્ધ બનાવવા ભાવપ્રતિષ્ઠાને પણ આગમોક્ત ક્રિયા = પ્રતિમાગત પ્રતિષ્ઠા દ્વારા કર્મરૂપી કચરાને બાળવાની જરૂર અપેક્ષા રહે જ છે માટે બાહ્ય પ્રતિષ્ઠા પણ સફળ જ છે [૮/૯]

આ પ્રતિષ્ઠા કેવી રીતે જાણવી ? આ શકાના સમાધાન માટે મૂલકારશ્રી કહે છે કે —

<u>ગાથાર્થ</u> ·- આ દરેક પ્રતિષ્ઠા શિષ્ટ પુરુષની અપેક્ષાએ લોકપ્રસિદ્ધ છે અહીં વિશેષતા પ્રાય મન્ત્રવિષયક છે -એમ પડિતો કહે છે [૮/૧૦]

<u>ટીકાર્થ</u> - લૌકિક અને લોકોત્તર સબધી દરેક પ્રતિષ્ઠા શિષ્ટ = વિશિષ્ટ ભવ્ય જીવની અપેક્ષાએ લોકપ્રસિદ્ધ = પુરુષપરપરાપ્રસિદ્ધ

= पुरुषपारम्पर्यप्रतीता प्राय = बाहुल्येन, नानात्व = विशेष पुन इह = लोकोत्तरप्रतिष्ठाया मन्त्रगत = मन्त्रविषय बुधा प्राहु ॥८/१०॥ नानात्वमेवाह –> 'आवाहने'त्यादि ।

आवाहनादि सर्वं वायुकुमारादिगोचरं चात्र । सम्मार्जनादिसिद्धये कर्त्तव्य मन्त्रपूर्वं तु ॥८/११॥

आवाहन-पूजन-स्वकर्मनियोगादि वायुकुमारादिगोचर च = वायु-मेघकुमारादिविषय च अत्र = प्रतिष्ठाया

कल्याणकन्दली

गरीय <– [४६९/७०-७१] इति चाणक्यसूत्राणि व्याख्यातानि । तदुक्त त्रिषष्टिशलाकापुरुषचरित्रेऽपि –> उपादेया शास्त्र-लोकव्यवहारानुगा हि धी <– (२/५/२३) इति । शिष्टाचीर्णो हि धर्म पर प्रोक्त महाभारतेऽपि [अनु पर्व १४१-६५] । इदमेवाभिप्रेत्य जीवानुशासनवृत्तौ देवसूरिभि –> य किल लौकिकैर्निजदेवकुले वास्तुविद्योक्तप्रासादादि कार्यते सोऽस्माकमपि देवसदने विधीयते, न तत्र मिथ्यात्वम् <– [४२ वृत्ति] इत्युक्तम् । एतेन –> लोकयात्रानुगन्तव्या विशेषेण विचक्षणै । सेवन्ते ते यतो धर्म प्रामाण्यात् परे स्थिता ॥ <– [१०३-४०७] इति मत्स्यपुराणवचनमपि व्याख्यातम्, लोकपदस्य शिष्टपुरुषसमूहपरत्वात् । एतेन –> लोक खल्वाधार सर्वेषा ब्रह्मचारिणा यस्मात् । तस्माल्लोकविरुद्ध धर्मविरुद्धञ्च सन्त्याज्यम् ॥१३१॥ <– इति प्रशमरतिवचनमपि व्याख्यातम् । यत्तु –> गतानुगतिको लोको न लोक पारमार्थिक <– [ ] इत्युच्यते तत्तत्त्वशिष्टलोकापेक्षयावगन्तव्यम् । अधिक तु बहुश्रुतेभ्य समवसेयम् ।

प्रतिमाप्रतिष्ठापनविधिश्च बृहत्संहिताया वराहमिहिरेण –> सुप्ता सर्गातनृत्यजागरणै सम्यगेवमधिवास्य । दैवज्ञसम्प्रदिष्टे काले सस्थापन कुर्यात् ॥[६०/१९] इत्यादिनोक्त. । स्तवपरिज्ञाया तु बिम्बप्रतिष्ठाविधि. –> णिप्फन्नस्स य सम्म तस्स पइट्ठावणे विहि एसो । सट्ठाणे सुहजोगे अहिवासणमुचियपूयाए ॥२३॥ चिइवदण थुइवुड्ढी उस्सग्गो साहु सासणसुराए । थयसरणपुयकाले ठवणा मगलपुव्वा तु ॥२४॥ सत्तीए सघपुआ विसेसपुआउ बहुगुणा एसा । ज एस सुए भणिओ तित्थयराऽणतरो सघो ॥२५॥ <– इत्येवमुक्त. । उपलक्षणात् क्षेत्रशुद्ध्यादिकमपि कर्तव्यम् । तदुक्त निर्वाणकलिकाया बिम्बप्रतिष्ठाविधौ –> अखण्डतण्डुलाना सेतिका, इक्षुयष्टिका, पुण्याणा चय इति प्रचुरमानीयोत्तमवेदिकाया कारकजात विन्यस्य हस्तगतप्रमाणाया भुवि जीवरक्षादिना क्षेत्रशुद्धि विदध्यात् <– । तथा चोक्त –> काउ खेत्तविसुद्धि मगलकोउयजुय मणभिराम । वत्थु जत्थ पइट्ठा कायव्वा वीयरागस्स ॥ [ ] <– इति ।

प्रतिष्ठाकल्पादौ तु प्रतिष्ठाविधि. –> सर्वाङ्गीणतदुपकरणमीलन-नानास्थानश्रीसङ्घगुर्वाकारण-प्रौढप्रवेशमहादि-तत्स्वागतकरण-भोजनवसनप्रदानादि-सर्वाङ्गीणसत्कारण-बन्दिमोक्षकारण-मारिनिवारणाऽवारितसत्रवितरण-सूत्रधारसत्कार-स्फीतसङ्गीताद्यभिनवाद्भुतोत्सवावतारणादिरष्टादशस्नात्रकरणादिश्च <– इत्यादिरूपेणोक्त । अन्यत्र –> चैत्यान्त. शोभने लग्नेऽधिवास्योचितपूजया । स्थाप्य बिम्ब जिनेन्द्रस्य पञ्चमङ्गलपूर्वकम् ॥[ ] इत्येव प्रतिष्ठाविधि सङ्क्षेपत उक्त । शिल्परत्नाकरे –> प्रतिष्ठा वीतरागस्य जिनशासन-मार्गत । नमस्कारै सूरिमन्त्रै सिद्धकेवलिभाषितै ॥ <– [१३/८७] इत्युक्तम् ॥८/१०॥

मूलग्रन्थे दण्डान्वयस्त्वेवम् –> अत्र वायुकुमारादिगोचर आवाहनादि सर्व सम्मार्जनादिसिद्ध्ये मन्त्रपूर्व तु कर्तव्यम् ॥८/११॥

आवाहन-पूजन-स्वकर्मनियोगादीति । अनेन कायिकव्यापारोऽभिहित । वायु-मेघकुमारादिविषयमिति । आदिपदेन दिक्पाल-लोकपालादिग्रहणम् । तदुक्त मूलकारैरेव जिनबिम्बप्रतिष्ठाविधिपञ्चाशके –> णिप्फण्णस्स य सम्म तस्स पइट्ठावणे विहि एसो । सुहजोएण पवेसो आयतणे ठाणठवणा य ॥१६॥ तत्थेव खेत्तसुद्धी हत्थसयादिविसया णिओगेण । कायव्वो सक्कारो य गधपुप्फादिएहि तहि ॥१७॥ दिसिदेवयाण पूया सव्वेसि तह य लोगपालाण । ओसरणकमेणऽण्णे सव्वेसि चेव

छे लोकोत्तर प्रतिष्ठामा मोटा भागे विशेषता मन्त्रविषयक होय छे एम पंडितो कहे छे [८/१०]

**विशेषार्थ** - प्रतिष्ठाना जेम मुख्य अने गौण (प्रतिमाप्रतिष्ठा) एम बे भेद छे तेम लौकिक अने लोकोत्तर एम बे भेद पण थई शके छे ब्रह्मा, विष्णु, महेश, गणपति वगेरेनी जैनेतर लोको जे प्रतिष्ठा करे छे ते लौकिक प्रतिष्ठा कहेवाय तथा महावीरस्वामी वगेरेनी जैनाचार्यो प्रतिष्ठा करे ते लोकोत्तर प्रतिष्ठा कहेवाय लौकिक अने लोकोत्तर प्रतिष्ठानी विधि सामान्यथी शिष्ट पुरुषोनी अपेक्षाए लोकप्रसिद्ध छे अर्थात् बन्ने प्रकारनी प्रतिष्ठानी विधि लगभग समान ज होय छे ते बन्नेमा भेद मोटा भागे मन्त्रविषयक होय छे [८/१०]

लौकिक अने लोकोत्तर प्रतिष्ठामा मन्त्रगोचर विशेषताने ज मूळकारश्री जणावे छे के —

**गाथार्थ** .- अहीं वायुदेवता वगेरे सबधी आह्वान वगेरे बधु ज समार्जन वगेरेनी सिद्धि माटे मन्त्रपूर्वक ज करवु जोईए [८/११]

**टीकार्थ** - प्रतिष्ठामा क्षेत्रशुद्धिनी निष्पत्ति माटे वायुकुमारनु, अभिवर्षणनी सिद्धि माटे मेघकुमारनु आह्वान, पूजन,

